# संस्कृतनिबन्धादर्शः

डॉ० राममूर्ति शर्मा
एम. ए., पी-एच. डी., डी. लिट्., शास्त्री
प्रोफेसर एवं अध्यक्ष संस्कृत-विभाग
पंजाब विश्वविद्यालय, चण्डीगढ़

साहित्य निकेतन, कानपुर-१

मूल्य { बीस रुपये
पन्द्रह रुपये (छात्र संस्करण)

प्रथम संस्करण : १९७९

प्रकाशक—
साहित्य निकेतन
श्रद्धानन्द पार्क,
कानपुर-२०८००१

मुद्रक—
कृष्णा आर्ट प्रेस
१०५/५०, प्रेम नगर,
कानपुर

# प्रस्तावना

मया पञ्जाबविश्वविद्यालयसंस्कृतविभागस्याचार्येण डा० राममूर्तिशर्मणा विरचितः संस्कृतनिबन्धादर्शः स्थालीपुलकन्यायेनावलोकितः। महान् मे मोदः सञ्जातो यदस्मिन् ग्रन्थे दार्शनिकाः, आलोचनात्मकाः, वर्णनात्मकाः, आख्यानात्मका एवमन्ये च निबन्धाः समुपलभ्यन्ते। ग्रन्थेऽस्मिन् सहजललितसंस्कृतेन वैशद्यपूर्णमधुरशैल्या लिखिताः विविधाः निबन्धा विद्यन्ते। विश्वसिमि, यद् ग्रन्थोऽयं स्नातकोत्तर छात्राणां पारम्परिकशास्त्र्याचार्यादिकक्षाछात्राणां च कृते परमोपयोगी सेत्स्यति।

मन्ये, संस्कृतनिबन्धादर्शोऽयं छात्राणां संस्कृतविविधविषयजिज्ञासूनां च कृतेऽतीवोपकारकः। अतोऽस्य ग्रन्थस्य रचयिता डाक्टरशर्ममहोदयः भूरि भूरि वर्द्धपनार्हो यत्तेन संस्कृतानुरागिजनेभ्य एतादृश ग्रन्थरत्नं प्रदत्तमिति शम्भूयात्।

ए० एन० जानी
प्राच्यसंस्थानस्य निदेशकः
संस्कृतविभागाचार्योऽध्यक्षश्च
सैयाजीरावविश्वविद्यालयः
बड़ोदा

# Foreword

I have carefully gone through the book "Sanskrita Nibandhadarshah' written by Dr. Ram Murti Sharma Professor & Head Deptt. of Sanskrit, Punjab University, Chandigarh and am very much pleased to see that the essays therein cover many topics such as philosophical, critical, descriptive, narrative and so on. The book contains essays on various topics, which are written in chaste and elegant Sanskrit in a very lucid and attractive style. I am sure this book will prove most useful to the students of Sanskrit at the postgraduate level as well as to the students reading for the traditional examinations such as Sastri & Acarya etc.

I hope this work would prove most indispensable to the student world and other lovers of Sanskrit. Dr. Sharma deserves cogratulations for rendering this sort of help to the student of Sanskrit which is gradually loosing the ground in modern days.

*A. N. Jani*
Director,
Orienatal Institute &
Professor & Head
Sanskrit Department
S. R. University, Baroda.

# प्राक्कथनम्

संस्कृती मम्पच्चेतश्चोरयति सुहृदामिति निर्विवादम् । तत्रापि गीर्वाण्याः गद्यं कियद् गौरवास्पदमिति 'गद्यं कवीनां निकषं वदन्तीति' काव्यालंकारसूत्रवृत्तौ वामनाचार्योद्धृतया सदुक्तया सुविशदम् । संहितावर्ति, ब्राह्मणग्रन्थवर्ति, आरण्यकवर्ति-औपनिषदञ्च वैदिकं गद्यम्, वैदिकोत्तरं श्रौत-गृह्यसूत्रादीनां सूत्रात्मकं गद्यम्, महाभारत-विष्णुपुराणादीनां पौराणिकं, पतञ्जलि-वात्स्यायन-शंकराचार्य प्रभृत्याचार्याणां भाष्यात्मकं—तत्रापि शाङ्करन्तु वैशिष्ट्येन प्रसन्नगम्भीरं सारगर्भितं, प्राञ्जलम् प्रौढञ्च शास्त्रीयं गद्यम् प्राचीनगद्येत्यभिधयाऽभिहितम् साहित्यमीमांसकैः । एतच्च गद्य दार्शनिकं, धार्मिकं सामाजिकञ्च विचारसन्तानं वैशद्येन प्रत्यपादीति नाऽधिकम् प्रपञ्च्यते । लालित्यललितस्य दण्डिकाव्यस्य, प्रत्यक्षरश्लेषमयप्रपञ्चविन्याससंस्कृतस्य सुबन्धुकाव्यचातुर्यस्य, विविधरसपूरेणैवापूरितस्य सकलरसिकसमुदायनिर्जितमनसो बाणस्य 'पञ्चबाणस्य' गद्यकाव्यनिकषस्य सारस्वत सौरभं साहित्यसेविनां कियद हृद्यमिति नाऽविदितम् विदुषाम् । साम्प्रतञ्च पण्डिताक्षमारावप्रभृतिगद्यनिर्मातृणाम् गद्यराशिर्नवाभिनव विचारवल्लरीं विपञ्चति । वार्तैषा सामान्यगद्यस्य, का कथा पुष्पगुच्छमिव सुगुम्फितस्य, विन्यस्तविचारबन्धविभूषितस्य, विषयैकप्रतिपादनपरायणस्य, सहजालंकृत्यलंकृतस्य, निदर्शनसुपुष्टराद्धान्तस्य, द्राक्षारसमिव विचारसारसन्निहितस्य, प्राञ्जलभाषासुभाषितस्य गद्यैकविग्रहस्य निःशेषविचारबन्धशीलस्य निबन्धस्य सौष्ठवस्य येन शास्त्रीयाः, साहित्यिकाः, सामाजिकाः राजनैतिकाः, नैतिकाऽन्ये च बहवो विषया व्यवस्थितरीत्या प्रतिपाद्यन्ते । एतदेव निबन्ध-कलानैपुण्यम् । एवञ्च निबन्धनात् निबन्ध इति नैयम् । यत्र कमपि विषयमाश्रित्य प्रकीर्णतामनाश्रिता विचारा निबद्धा दृश्यन्ते स एव निबन्ध इति निगद्यते । निबन्ध एव विषयप्रस्तुतिकरणात् प्रस्तावोऽप्युच्यते । मन्ये, मानवविचारराशेरपरिमितत्वात् निबन्धभेदा अपि अनेकशः व्याख्यातुं शक्यन्ते, परं वैशेष्यात् शास्त्रीयाः, विचारात्मकाः समीक्षात्मकाः, आख्यानात्मकाः वर्णनात्मकाश्चेति निबन्धस्य पञ्चभेदाः वक्तुं शक्यन्ते । शास्त्रीयेषु 'काव्यस्वरूपनिरूपणम्' 'वेदान्ते सद्वादः' इत्येतादृशाः, विचारात्मकेषु 'भारतीयसंस्कृतेः स्वरूपम्' 'मौनं सर्वार्थसाधनमित्यादयः, समीक्षात्मकेषु 'नैषध विद्वदौषधम्', 'माघेसन्ति त्रयो गुणाः', इत्येवं प्रकारकाः, आख्यानात्मकेषु 'विवेकानन्दः', 'महात्मागान्धि' रित्येवंप्रकारकाः वर्णनात्मकेषु च 'काशीनगरी', 'दिल्लीनगरी', इत्येवंविधा निबन्धाः सामान्यतया ग्रहीतुं युज्यन्ते ।

निबन्धरचनाऽवसरे के संकेता विचारणीया इत्यपरः प्रश्नः। तत्र निबन्धशीर्षकमाश्रित्य विषयप्रस्तावः, भूमिका वा प्रथमं लेखनीया। ततश्च प्रतिपाद्यविषयस्य विकासं प्रदर्श्य पूर्वाक्तोक्तरीत्या विषयानुरूपं निरूपणं विधेयम्। यथा 'गुणाः पूजास्थानं गुणिषु न लिङ्गं न च वयः' इत्यन्तर्गतं कथं जनाः गुणानविचार्य मनुष्यान् पूजयन्ति, इति पूर्वपक्षमुद्घाटय विद्यादिगुणवतामेव पूजा कार्येति उत्तरपक्षरीत्या निरूपणीयम्। ततश्च यथासम्भवं चतुर्भिर्निदर्शनैःसमीक्ष्य विषयस्य समर्थनं कार्यम्। दृष्टान्तादिभिर्विषयस्य विवेचनं विधायान्ते उपसंहारवचोभिर्निबन्धः परिसमापनीयः।

निबन्धरचनाऽवसरे विषयक्रमानुपालनं परममपेक्षितम्। अन्यच्च विचाराणां सारगर्भता पुनरुक्तेः परित्यागश्चेति द्वयमपि निबन्धेऽनिवार्यतयाऽपेक्ष्यते। 'शठे शाठ्यं समाचरेत्' 'आर्जवं हि कुटिलेषु न नीति' रित्यादिनिबन्धानां प्रतिपादनावसरे निबन्धलेखकेन किं प्रतिपादनीयमित्येषा स्वाभाविकी जिज्ञासा। सौजन्यापूरितहृदा चेन्निबन्धरचयित्रा स्वमनसा 'शठे शाठ्य'मित्यादिविचाराणाम् पुष्टिर्नहि क्रियते तदा किं तेनैतादृशशीर्षकाणाम् खण्डनं कर्तव्यमुत मण्डनम्। इयमत्र चिन्तना यत् पूर्वन्तु निबन्धकारेण निबन्धविषयमाश्रित्य तत्प्रतिपादनमेव कार्यम् तदन्ते च स्वमतं समीक्षान्तर्गतं प्रकटनीयम्। एवमेव 'वाक्यं रसात्मकं काव्यमि' त्यादिनिबन्धानां विषयेऽप्यूह्यम् यदलंकारपक्षपातिनाऽपि निबन्धकर्त्रा पूर्वं 'वाक्यं रसात्मकमि'त्यादिकमेव प्रतिपादनीयम्।

निबन्धकर्तुरियमवधानता परममपेक्षिता यत् स एतादृशीं दर्पणनिर्भां स्वभाषां प्रयुञ्जीत यस्यां विचारततयः स्फुटमेव प्रतिबिम्बिताः स्युः। निबन्धभाषा यद्यलङ्कृता स्यात् तदा सहजैरेवालंकारैः, बलान्नियोजितास्त्वलंकाराः निबन्धे भाररूपा एव केवलम्।

स्वाल्पधिया यद्यप्यत्र निबन्धरचनामाश्रित्य संकेतनिर्देशदृष्ट्या किञ्चिदुक्तम् परमितोऽप्यधिकं विचारयितुं शक्यते सुधीभिरिति ते स्वयमेवालोचयन्तु।

ग्रन्थोऽयं सुतरां संस्कृतप्रेमिभिः विद्वत्स्वभावयुतैः श्रीयुतैर्जानिमहोदयैः पुरोवाचाऽलंकृत इति तान् प्रति भूरि भूरि कृतज्ञतावचांसि व्याह्रियन्ते। तेषां विद्वत्स्वभावजन्यसहजस्नेहेनाऽहमतिशयेनात्मानमुपकृतं मन्ये। स्वानुजस्य वाचस्पतेरपि अभ्युदयाय परमात्मानमत्र प्रार्थये येन सामग्रीसंकलनादिके सहयोगः प्रदत्तः।

विश्वसिमि, यदनेन निबन्धादर्शेन यदि छात्राणां संस्कृतसेविनाञ्चानेकैर्नूतनैर्विचारैः परिचयः सम्पत्स्यते तदा तत्रैव तेषां हृदयवर्तिनो विचाराः "क्षणे क्षणे यन्नवतामुपैतीति रीत्या पुनरपि नवत्वं यास्यन्तीति विपश्चितो विदाङ्कुर्वन्तु। अभि-

महर्षिप्रयुक्ताया: दैव्या: संस्कृतगिर: सेवनेन—जना: पावित्र्यं प्राप्नुवन्ति, इति सर्वेषामेव अनायासिकोऽपरोऽपि लाभ: सेत्स्यतीति आशास्यते। अत्रैव साहित्यनिकेतनाध्यक्ष: श्रीश्यामनारायणकपूरमहोदयोऽपि वैशिष्ट्येन धन्यवादार्ह: येन ग्रन्थोऽयं प्राकाश्यं नीत:। दूरस्थे कर्णपुरेऽस्य ग्रन्थस्य मुद्रणं सञ्जातमिति तद्विषयकानीतराणि च स्खलनानि नितान्तमेव स्वाभाविकानि, यत्कृते क्षम्योऽयं जन: सर्वथा। तथापि गीर्वाणवाणीनिपुणा: सहृदया: सुधिय: स्वधिया सांस्कृतमाशयं हेमचन्द्रोक्तरीत्याऽभिजानन्तु इति निवेद्यते—

प्रमाणसिद्धान्तविरुद्धमत्र,  
यत् किञ्चिदुक्तम् मतिमान्द्यदोषात्।  
मात्सर्यमुत्सार्य तदार्यचित्ता:,  
प्रसादमाधय विशोधयन्तु ॥

गुरुपूर्णिमा, १९७८  
चण्डीगढ़

रामम‍ूर्तिशर्मा

# विषयानुक्रमः

## तृतीयरश्मिः

## विचारात्मकनिबन्धाः

## चतुर्थरश्मिः

## समीक्षात्मकनिबन्धाः

पञ्चमरश्मिः

## आख्यानात्मकनिबन्धाः



षष्ठरश्मिः

## वर्णनात्मकनिबन्धाः



## परिशिष्टम्





# वैदिक वाङ्मयम्—तत्स्वरूपं महत्वञ्च—

वेदा भारतवर्षस्य प्राचीनसंस्कृतेः, सभ्यताया दार्शनिक विचारधारायाश्च प्रमुखनिदर्शकाः सन्ति। वेदाः न केवलं भारतीयानामेव प्रियाः ग्रन्था अपि तु विश्वस्य सर्वैरपि देशैरेतेषामद्वितीयम् महत्वं स्वीकृतम। विल्सनप्रभृतिभिः पाश्चात्यैर्विद्वद्भिर्वैदिकसाहित्यानुसन्धानधियाऽनुशलिनं कृतमिति सर्वथा विदितमेव सर्वेषां संस्कृतविदुषाम्। पाश्चात्यैः सम्पादितं वैदिकमध्ययनमतिशयेन स्तुत्यमिति नाऽन्यथा ब्रूमः। वेदानां महत्ताया इदं प्रमुख कारणं वर्तते यत् तत्रत्यानि विविधवर्णनानि जातिवर्णादीनां सङ्कुचितभावनया वर्णितानि न सन्ति अपि तु मानवतादृष्टेर्व्यापकभावनयैव। अत एव विश्वस्य समेषामपि धर्माणाम् मूलम् वैदिके धर्मे सरलेतया द्रष्टुं शक्यते। अत एवोक्तम्—

वेदोऽखिलो धर्ममूलम्

किं नाम वेदत्वमिति विषयेऽनेकानि मतानि प्राप्यन्ते—

'मन्त्रब्राह्मणयोर्वेदनामधेयम् षड्गमेक इति' 'कुमारिलभट्टैः स्वकीये तन्त्रवार्तिके प्रतिपादितम्। मनुस्मृतौ 'वेदशब्देन ऋग्यजुसामानि ब्राह्मणसंहिताम्पुच्यन्ते, इत्युक्त्वा वेदत्वं परिभाषितम्। कौशिकसूत्रे 'आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च' इत्युक्त्वा आम्नायः परिभाषितः। बोधायनगृह्यसूत्रेऽपि मन्त्रब्राह्मणयोर्वेदत्वमङ्गीकृतम्। स्वामिदयानन्दसरस्वतिभिस्तु ऋग्वेदभाष्यभूमिकायां 'विदन्तिजानन्ति, विद्यन्ते भवन्ति, विन्दति अथवा विन्दन्ते लभन्ते, विन्दन्ति विचारयन्ति सर्वे मनुष्याः सत्यविद्यां चयैर्येषु वा तया विद्वांसश्च भवन्ति ते वेदाः, इत्यभिप्राय वेदानां वेदत्वं व्याख्यातम्। अस्मद्विचारेण तु विशिष्टप्रतिभाशालिनां ऋषिवर्याणां स्वकीयैः प्रज्ञाचक्षुभिः साक्षात्कृतः ज्ञानराशिरेव वेदः। अत एव 'ऋषयो मन्त्रद्रष्टारः' इत्युच्यते। वेदा अपौरुषेयाः शाश्वताश्च। सति प्रलयेवेदानां तिरोधानमात्रमेव संजायते नत्वन्तः। सृष्ट्यारम्भे च महर्षयः स्वतपोबलेन वेदान् साक्षात्कुर्वन्ति।

सामान्येन वेदैः ऋग्वेद–यजुर्वेद–सामवेददाथर्ववेदानामेव परिगणनं क्रियते, परं वैदिके वाङ्मये ऋग्वेदादिसंहिताचतुष्टयातिरिक्तं ब्राह्मणग्रन्थाः, आरण्यकग्रन्था

उपनिषद्ग्रन्थाश्च नीयन्ते। शिक्षादीनि षडपि वेदांगत्वेन स्वीक्रियन्त इति तेषामपि वेदत्वे स्वीकरणे नहि काचिद् विप्रतिपत्तिः। तत्र ऋच्यते स्तूयतेऽनयेति ऋगिति व्युत्पत्त्या ऋग्वेदस्तु देवस्तुतीनां संग्रहरूपः। यजुर्वेदः "अनियताक्षरावसानो यजुः" इत्यभिधाय परिभाषितः। "गद्यात्मको यजुः" इति कथनं यजुर्वेदस्य गद्यत्वं साधयति। यजुषो यज्ञत्वात् यज्ञप्रधानोऽयम् वेदः। सामवेदस्तु गीतिप्रधानः। अत एव "जैमिनिमहर्षिणा" "गीतिषु सामाख्या" इत्युक्त्वा साम्नो गीतित्वमुक्तम्। अनेन सामवेदस्य गीतिप्रधानता स्पष्टा भवति। अथर्ववेदस्तु ऐन्द्रजालिकमन्त्राणां संग्रह एव प्राधान्येन। ऋग्वेदादि-संहिताचतुष्टयानन्तरं ब्राह्मणग्रन्थाः गृह्यन्ते। ब्रह्म (यज्ञ) सम्बन्धिवर्णनानाम् वैशिष्ट्यादेव ब्राह्मणानां ब्राह्मणत्वम्। अतएव ब्रह्मणोऽयमिति ब्राह्मणः 'इत्युक्तम्' अरण्याध्ययनकारणादारण्यका उच्यन्ते। यदुक्तमपि—

✓ अरण्याध्ययनादेतद् आरण्यकमितीर्यते।
अरण्ये तदधीयीतेत्येवं वाक्यं प्रचक्ष्यते॥

आरण्यकग्रन्थानां प्रमुखो विषयो यज्ञान्तर्वर्तिविविधगूढतत्वानामाध्यात्मिक-तत्वानांच मीमांसने वर्तते। ब्रह्मविद्याप्रतिपादकाश्च ग्रन्था उपनिषद्ग्रन्था उच्यन्ते। उपनिषदः स्वरूप स्पष्टयता श्रीशंकराचार्येणोक्तम्—"अविद्यादेः संसारबीजस्य विशरणाद् विनाशादित्यनेन अर्थयोगेन विद्या उपनिषदुच्यते"। "परं ब्रह्म वा गमयतीति ब्रह्मगमयितृत्वेन योगाद् ब्रह्मविद्योपनिषद्"। उपनिषद्विद्या ब्रह्मज्ञानप्रधानेति स्पष्टमेवाचार्यवचनैः। उपनिषद्विद्या रहस्यरूपाविद्याप्युच्यते। छान्दोग्योपनिषदो निम्नलिखितेनोद्धरणेनाऽपि उपनिषद्विद्याया रहस्यात्मकता स्पष्टी भवन्ति।

"इदं तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्, प्रणाय्याय वान्तेवासिने। नान्यस्मै कस्मैचन·······इमामद्भिः परिगृहीतां येनस्य पूर्णां दद्यात्"।

शिक्षादिवेदांगानां वैदिकाध्ययनस्योपकारकत्वादेव वेदाङ्गत्वमिति स्वीक्रियते।

विश्वस्मिन्नपि विश्वे वैदिकवाङ्मयस्यधार्मिकम्, पौराणिकम्, दार्शनिकम्, सामाजिकम्, सांस्कृतिकम्, ऐतिहासिकम् साहित्यिकंच बहुविधम् महत्वं स्वीक्रियते।

वैदिको धर्मोऽतिशयेन महान्। वेद प्रतिपादिते धर्मे धर्मस्यात्यन्तं प्राचीनं स्वरूपमुपलभ्यते। बहुविधानमपि धर्माणामुदयो वेदेभ्य एव दृश्यते। वैदिको धर्मो देवप्रधानो वर्तते। बहुदेववादः, एकेश्वरवादः, सर्वदेववादः सर्वोच्चदेववादश्च, देवानां प्रधानसिद्धान्ताः सन्ति। परं वैदिकदेववर्णनस्यैतद्वैशिष्ट्यं यत्तत्रानेकेष्वपिदेवेषु एकस्यैवमहादेवस्य (परमतत्वस्य) प्रतिष्ठा कृता प्रतीयते। अत एवोक्तम्—

'एकं सद्विप्रा बहुधा वदन्ति।'

वैदिकदेवानां पौराणिकोपि विकासः प्राप्यते। तत्र केचन प्राकृतिका देवाः

यथा सूर्य-सोमाग्न्यादयः, केचन भावात्मका देवाः यथा कामश्रद्धादयः केचन च स्वस्वविशेषणाधृता यथा विवस्वान् ।

वैदिकवाङ्मयस्य दार्शनिकमपि महत्व न न्यूनम् । एतत्तु स्वीक्रियते यत् संहितासु उपनिषत्सु वा दार्शनिकविचाराणां सैद्धान्तिकम् प्रतिपादनं नोपलभ्यते । परमत्वेतत्कथनञ्चानुचितं यत् प्रायशः सर्वेषामपि दार्शनिकसिद्धान्तानां बीजानि संहितासु तेषां व्याख्यानञ्चोपनिषद्ग्रन्थेषु प्रतिपादितं दृश्यते । एतस्मादेव न केवलं भारतीयैरेव समालोचकैर्विद्वद्भिश्चापि तु शोपेनहरप्रभृतिभिः शताधिकैरपि विदेशीयैरुपनिषदो दार्शनिकमहत्तास्वीकृता । किमधिकम्, ऋग्वेदे नासदीयादिसूक्तेषु दार्शनिकस्याद्वैत-सिद्धान्तस्य ये बीजविचारा दृश्यन्ते ते नितान्तं स्पष्टा एव ।

वेदानां सामाजिकं सांस्कृतिकञ्च महत्वमपि न गूढम् । वैदिकसाहित्यस्यानु-शीलनेन तात्कालिकसमाजस्य संस्कृतेश्च बोधः सरलतया सञ्जायते । मानवजातेः प्राचीनेतिहासस्य सभ्यतायाश्च निदर्शनमपि वेदेष्वेवोपलभ्यते ।

वेदानां काव्यीयः साहित्यिकश्च महिमाऽपि अतिशयेन गरीयान् । ऋग्वेद-वर्णितासु अनेकास्वपि स्तुतिषु प्राचीनकवित्वस्य स्पष्टं चित्रम् प्राप्यते । वैदिके साहित्ये काव्यशोभावर्धकानामलङ्काराणामपि योजना कृता प्रतीयते । निदर्शनार्थमुषसः कृते ऋग्वेदे नारीरूपकयोजना वैदिकी काव्यप्रवृत्तिमेव सूचयति—

✓ "संस्मायमाना युवतिः पुरस्तात् ।
आविर्वक्षांसि कृणुते विभाती ॥"

नाटकोत्पत्तिदृष्ट्या तु वेदानाम् महत्वं सुविदितमेव—

जग्राह पाठ्यं ऋग्वेदात् सामभ्यो गीतमेव च ।
✓ यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥

ऋग्वेदीयम् पुरुरवोर्वश्योराख्यानवर्णनमपि वैदिककालस्य साहित्यिकतामेव प्रमाणयति । एवमेव यमयम्याद्याख्यानान्यपि साहित्यिकतामेव पोषयन्ति । वैदिकी प्रकृतियोजना प्रतीकयोजना चाऽपि वैदिकं काव्यत्वमेव स्पष्टीकरोति ।

किं बहुना, वैदिकवाङ्मयस्य भाषावैज्ञानिकमौषधविज्ञानादिविषयकञ्चानेक-विधं महत्वमवलोक्यते । वैदिकवाङ्मयस्य बहुविधम् महत्वमुद्घाटयितुमेतत् परमा-वश्यकं यत्तत्तद्विषयाणां विशेषज्ञैः वैदिकसाहित्यवर्तिनां विविधानामपि प्रच्छन्नतथ्या-नामनुसन्धानं कर्तव्यम् । वस्तुत एव विलक्षणोऽयं भगवान् वेदः—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एवं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥

—सायणाचार्यः ।

———

२

# एकं सद् विप्रा बहुधा वदन्ति

अनेकेषु एकता, अध्यासस्य अधिष्ठानता, परमतत्वस्य सत्ता जागतिकपदार्थानाञ्चाशाश्वतता भारतीयदर्शनस्याद्भुतं वैशिष्ट्यम्। भारतीयदर्शनानुसारंसमग्रस्यापि अध्यासरूपस्य जगतोऽधिष्ठानभूतं तत्वं 'सत्' तत्वमेव। तच्च पारमार्थिकम् एवञ्च जगत् सदसतोः समुच्चय एव। सदसत्समन्वितेऽस्मिन् संसारे सत आश्रयेणैवासतः सत्ता लोकव्यवहारस्य च स्थितिर्दश्यते यदुक्तं श्री शंकराचार्यैः—

"सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः"

बहुरूपस्य जगतो मूले एकतत्वप्रतिपादकस्य सिद्धान्तस्य विचारः येन केन प्रकारेण प्रायशो विश्वस्य सर्वैरपि दार्शनिकैः स्वीकृतः। भारतीयैः शिवादिदेवेषु अस्यैव एकस्य परमतत्वस्य दर्शनं कृतम्, यत् स्पष्टमेव—

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो, बौद्धा बुद्ध इति
प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः, सोऽयं वो
विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥

वैदिकोऽयं सत्तत्वसिद्धान्तः। वैदिकः सत्तत्वसिद्धान्त एव वैदिकस्य बहुदेववादस्याधारभूतः। ऋग्वेदे अग्नीन्द्रवरुणादीनामनेकेषां देवानां वर्णनं प्राचुर्येण कृतं वर्तते। अस्यदेववर्णनस्येदमपि वैशिष्ट्यं प्रामुख्येनोल्लेखनीयं यत् प्रायशः सर्वेषामपि देवानां वर्णनं ऋग्वेदे सर्वोच्चरूपेणैव निष्पादितम्। ऋग्वेदस्येयमेववर्णनप्रणाली मैक्समूलरमहोदयेन 'हेनोथीज्म' इति सिद्धान्ताभिधया प्रचारिता। केषाञ्चिदिदमपिकथनं यत् ऋग्वेदे सर्वेषामपि देवानां सर्वोच्चरूपेण वर्णनप्रकारो नितान्तं दोषपूर्णः। परन्नैतत् कथनमुचितमेतेषाम्। मन्मते त्वस्येदमेवसमाधानं यदेकमेव सर्वोच्चं 'सत्' तत्वं न केवलं देवेष्वेवापितु सर्वत्रैवाभिव्याप्नोति। देवास्तु 'सत्' तत्वस्य प्रत्यक्षमेव प्रतिनिधयः। अतएव ऋग्वेदे यद् देववर्णनं तत् परमतत्वरूपेणैव कृतं वर्तते। अतः सूक्ष्मेक्षिकया विलोकनेनेदं सर्वथा स्पष्टमेव यदेकं 'सत्तत्वमेव' सर्वस्य मूलम्। अतएवोक्तं ऋग्वेदे—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः॥

वैदिकसत्तत्वसिद्धान्तविषये कश्चिद्भ्रमावसरः तदयम् यद् यदि कुत्रचित् 'सत्' तत्वं सर्वस्यमूलमुच्यते तदा कुत्रचित् 'असत्तत्वं' सतो मूलमभिधीयते, यथा—

"देवानां पूर्व्येयुगे असतः सदजायत"

अन्यच्च असतः सत उत्पत्तेर्विचारः कथं सङ्गच्छते, यद् गीतायां स्पष्टमेवोक्तम्—

नासतो विद्यते भावः नाभावो विद्यते सतः ।

तत् किमत्र वस्तुत एव वैषम्यमसङ्गतिश्चेति विचारणीयः प्रश्नः । अत्र तु इदमेव समाधानमुचित प्रतीयते यत् सर्वस्य कारणभूत सत्तत्त्वं सूक्ष्मातिसूक्ष्मम । यदसत्तत्त्वं कारणरूपेणोक्तं तत्र वन्ध्यापुत्रवत् आकाशकुसममिववाऽसत्, अपि तु तत्र 'असत्' इत्यस्यायमाशयो यत् मूलतत्त्वं प्रत्यक्षं न प्रतीयते, अत एव 'असत्' । यद् इद सत्तत्वं सूक्ष्ममत एवः प्रत्यक्ष न प्रतीयते, इति नहि किञ्चिदपि वैषम्यमनुभूयते । अतः सत्तत्वस्य जगतः कारणत्वे न हि कश्चिद् विप्रतिपत्तिर्वक्तव्या ।

यत्त् नासदीयसूक्ते उक्तं—न असत् आसीत् नो सदासीत् तदानीमिति, तस्यत्वाशयोऽयमेव यत् सृष्टेर्मूलकारणं सत एव तत्र सद्रूपं न चासद्रूपम् । परयोऽय परमेश्वरः पूर्णकाम स्तदा तस्मिन् 'सोऽकामयत बहुस्यां प्रजायेय, इत्यादिनी सृष्टिकामना कथमुत्पद्यते, यत् 'आप्तकामस्य का स्पृहा' इति गौडपादाचार्यकथनानुसारमाप्तकामे परमेश्वरे सृष्टेरिच्छायाः प्रसङ्ग एव नितान्तमसङ्गतः । तत्र त्विदमेव वक्तव्यं यत् 'एकोऽहं बहुस्या प्रजायेय, इत्यादिस्थलेषु ईश्वरे सृष्टेरिच्छा स्वभावरूपिणी एव न तु स्वार्थान्विता कामनारूपा । अत एव परमात्मनः सृष्टिर्लीलारूपैव निगदिता विपश्चिद्भिः । यथा कश्चिद् बालकोलीलया आत्मान नृपमन्यांश्च बालकान् प्रजामिव मत्वा क्रीडां करोति तथैव परमेश्वरोऽपि निरुद्देश्यमेव लीलया सृष्टिनिर्माण करोतीति सम्यक् प्रतिपादितो वैदिकः सिद्धान्तः । अतएवोक्तं महर्षिणा व्यासेनापि स्वकीयब्रह्मसूत्रे—

"लोकवत्तु लीला कैवल्यम्"

एवञ्चैकस्यैव परमेश्वरस्य लीलाकारणादेव बहून्यपि रूपाणि दृश्यन्ते । तच्चमूलकारणं सत्तत्वमेवाङ्गीकार्यम । यत् खलु परमार्थदृष्ट्याऽसत जगद् वर्तते तत् सत्तत्वस्याधिष्ठानं विना वर्तितुं नहि शक्नोति ।

का कथा जगतो यद् व्यवहारतया प्रत्यक्षमेव सद्रूपं दृश्यते । सर्वथासद्रूपामृगतृष्णाकादयोऽपि निराधिष्ठाना भवितुं नार्हन्ति । अतोऽपि मूलतत्वस्य सत्ताऽपेक्ष्यते ।

उपनिषत्परवर्तिनि दर्शनसाहित्येवेदप्रतिपादितम् सत्तत्त्वमेव परमात्मरूपेण प्रतिपादितम् । यथाऽद्वैतवेदान्तदर्शनप्रतिपादकैः शङ्कराचार्यैः परमेश्वरः एव जगतः कारणरूपेणोक्तः । परमार्थसद्रूपः शुद्धोमुक्तश्च परमेश्वरः कथमसद्रूपस्य जगतः सृष्टिं कर्तुं शक्नोति, इति प्रश्नस्य समाधानमाचार्यैर्मायावादसिद्धान्तस्य प्रख्यापनया कृतम् ।

यत् परमेश्वरो मायाशक्त्याऽनेकरूपस्यासतश्च जगतः सृष्टिं कर्तुं पारयति। ऋग्वेदेऽपि मायाशक्तिकारणादेवेन्द्रस्य बहुरूपता प्रतिपादितेति प्रख्यातमेव—

इन्द्रो मायाभिः पुरुरूप ईयते।

परं योऽयं परमात्मा सत्स्वरूपः सोऽसद्रूपिण्या मायया सह कथं सम्बन्धितो जायत इति—रशाचार्यशङ्करैरैन्द्रजालिकस्य निदर्शनेन समाहितम्। यथा कोऽपि ऐन्द्रजालिकः स्वयं प्रसारितेन इन्द्रजालेन मायया वा न स्पृश्यते तथैव परमात्माऽपि स्वमायया न स्पृश्यते। एवमेव 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति गीतावचनानुसार हृद्देशे स्थितोऽपि ईश्वरः जीवस्य पुण्यापुण्यकर्मभिः स्पृष्टो नहि जायते। अतो मायिकजगत आरोपकारणादेव 'सदसच्चाहमर्जुन' इत्यादिस्थलेषु ईश्वरस्य सदसद्युक्तता उक्ता। वस्तुतस्तु स्वभावत ईश्वरः सद्रूप एव। अनेन प्रकारेण 'एकं सद् विप्रा बहुधा वदन्ति' इति ऋग्वेदोक्तिमेवाश्रित्य अनेकतायामेकत्वप्रतिपादकस्याद्वैतवादसिद्धान्तस्य दुन्दुभिनादः परवर्तिभिर्वेदान्तिभिर्दार्शनिकैः सम्यक् कृतः। एवञ्चाद्वैतमिदं सत्तत्वमनेकेषु असत्तत्वेष्वपि तथैवानुस्यूतं यथा एकमेव सूत्रमनेकास्वपि मालागुटिकासु अभिव्याप्तः। अयञ्च सत्स्वरूप आत्मा सर्वभूतान्तरात्मा। तदेवोक्तम्—

एकोवशी सर्वभूतान्तरात्मा एकं रूपं बहुधायः करोति।
तथात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्। कठ ५/११



२

# कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समाः

भारतीयवाङ्मयसाररूपस्य उपनिषत्साहित्यस्य प्रमुखः प्रतिपाद्यो मोक्षलाभ एव। स च तत्रोपनिषत्सु कुत्रचित् प्रत्यक्षतया कुत्रचिच्चाप्रत्यक्षतया निष्पन्न इति सर्वेषामेवैकमत्यमवलोक्यते। उपनिषदाञ्चायमपि सर्वथा मान्यः पक्षो यत् कर्मणां निवृत्ति विना मुक्तिर्नहि सम्भवति। कर्म तु दुःखमूलमेव। परं कर्मरूपिणि संसारेऽस्मिन् कर्मणां त्यागः कथं सम्भवति, इत्यपि मूल्यवान् प्रश्नः, यदुक्तं गीतायामपि—

"नहि कश्चित् क्षणमपि जातुतिष्ठत्यकर्मकृत्"

न हि उपनिषद्दर्शनमल्पमपि असमन्वितम् न वा तत्र विचाराणामपरिपक्वता तर्कासङ्गतिर्वा । अतो यदि उपनिषत्सु कर्मनिवृत्तेरुपदेशो वर्तते तदा न तत्र अकर्मण्यताया सर्वथा कर्मत्यागस्य वाऽऽशयः, तत्र स्वयमेव प्रतिपाद्य एतासामुपनिषदां यदीश्वरार्पणवृत्त्यैव मानवेन कर्मानुष्ठानं विधेयम्। अतएव ईशावास्योपनिषद उद्धृतेनानेन 'कुर्वन्नेवेति' मन्त्रेणेदमेव निर्दिश्यते यदीश्वरार्पणबुद्धयैव मुमुक्षुणा शास्त्रनियतानि कर्माणि कर्तव्यानि । अनेन प्रकारेण कर्मसु क्रियामाणेष्वसत्सु नरः कर्मभिर्न लिप्यते । एतदतिरिक्तं कर्मणो मुक्तिप्राप्तेरुपायो नैवास्ति । एवञ्च बन्धनमूलस्य कर्मणो मुक्तेरयमेवैकतम उपायो यन्मानवेन सर्वाणि कर्माणि परमेश्वरं समर्प्य कर्मपरेण भाव्यम् ।

ईश्वरार्पणबुद्धया सम्पन्नस्य कर्मणोऽयं प्रथमो लाभो यत् नरः किमपि कर्म प्रति आसक्तो न हि जायते । एवञ्च कर्मफलं प्रति अनासक्तोऽनाश्रितो वा एव जनः मोक्षाधिकारी । यदुक्तं गीतायाम्—

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥"

ये तु आसक्तया कर्म कुर्वन्ति ते सदैव दुःखभाजनानि भवन्ति । अतः आसक्तिरेवमूलं दुःखस्य । ये चासक्त्या कर्मकुर्वन्ति ते स्वकर्मणो वैफल्य दृष्ट्वा वैक्लव्यपीडिताः जायन्ते । अनासक्त्या कर्मकुर्वाणास्तु जनाः यस्यां कस्यांचिदपि स्थितौ आत्मानं सुखिनमेव मन्यन्ते । एतेषां कर्मनिर्लिप्तानां कृते तु सुखदुःखयोरुभयोरपि साम्यमेव वर्तते । यथोक्तम्—

"सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।"

अतो यानि यज्ञादीनि कर्माणि यानि चेतराणि लौकिकानि तानि सर्वाण्यपि चेन्नरेण ईश्वरार्पणबुद्धया क्रियन्ते तदा मानवस्य कर्मनिर्लिप्तता स्वाभाविकी । कर्मनिर्लिप्तता एव च सुखस्य मूलम् ।

अत्रेयंशङ्का स्वाभाविकी यत् किं दुष्कर्माण्यपि ईश्वरार्पणबुद्ध्या क्रियमाणानि सुखसाधनानि दुःखसाधनानि वा ? अत्र तु इदमेव समाधानमुचितं प्रतीयते यदीश्वरार्पणवृत्त्या कर्मसम्पादयता अनेन दुष्कर्माणि सम्पाद्यन्त एव नहि । तेन तु स्वभावतया शुभकर्माणि एव सम्पाद्यन्तेनाशुभकर्माणि । यथोक्तं वेदान्तसारे सदानन्देन "अस्य ज्ञानात् पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति शुभाशुभयोरौदासीन्यं वा ।"

यदुक्तमीश्वरार्पणबुद्ध्या क्रियमाणानां कर्मणामिदमपरं फलं यत् तेषु 'अनासक्तत्वात् नरः सदैव समरसः सुखी च । अतः परमात्मसमर्पणबुद्ध्या कर्माणिसम्पादयता

ऽनेन शतवर्षाणि यावत् जीवितुमिच्छा कार्येति न्याय्य एव औपनिषदः पन्थाः। अत एवोक्तमीशावास्योपनिषदि—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥

---

४

# भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे। मुण्डक० २।२।८

वेदान्तदर्शनस्याद्वैतवादसिद्धान्तः सर्वासामपि भारतीयानाम् विदेशीयानाञ्च दार्शनिकचिन्तनपरम्पराणाम् शिरोऽवतंसायते। सर्वेऽपि भारतीयदर्शनसिद्धान्ताः भिन्न-पद्धतयोऽपि सन्तो मोक्षपरकाः प्रायश इति तु विदितमेव सर्वेषाम्। वेदान्तिभिः मोक्षप्राप्त्या भगवत्साक्षात्कारेण वा य आनन्दोऽनुभूयते न तत्र कश्चिद् भेदः, यद् भक्तानाम् भगवान् ज्ञानिनाञ्च ब्रह्म एकमेव न भिन्नम्। न तत्र परमार्थतो द्वौ सत्यरूपौ परमात्मानौ न वा द्विविधौ आध्यात्मिकौ आनन्दौ। 'रसो वै सः' इत्याद्युक्तयः अलौकिकाध्यात्मिकरसस्य एकत्वमेव प्रतिपादयन्ति। परमिदमपि आश्चर्यमेव यत् सर्वासामपि प्रमुखभारतीयदर्शनपद्धतीनाम् आधारग्रन्था उपनिषद्ग्रन्था एव कथ्यन्ते। किम् अद्वैतिनः, किं सांख्याः, किं वैशेषिकाः, किं नैयायिकाः, किं योगिकाः किम्वा मीमांसकाः, सर्वेऽपि स्वकीयान् दर्शनसिद्धान्तान् प्रस्थापयितुं उपनिषदामेव मूलम् उद्घोषयन्ति। न केवलमेते आस्तिकदार्शनिका एव अपितु नास्तिकदर्शनभक्ता अपि बौद्धादिदर्शनपद्धतीनाम् मूलम् उपनिषत्सु एव प्राप्तुं प्रयतन्ते। एते सर्वे च गर्वोन्नत्या प्रतिपादयन्ति यदस्माकमेव औपनिषदः सिद्धान्तः। अस्यैवैतत् प्रतिफलं सञ्जातं यद् उपनिषदां सारभूतानाम् बादरायणसूत्राणाम् तात्पर्यसिद्धान्तांश्च स्पष्टीकर्तुं शङ्कर-रामानुजादिभिर्विभिन्नाः भाष्यग्रन्था उल्लिखिताः। एषा तु विलक्षणा एव प्रहेलिका यदेकस्यैव ब्रह्मसूत्रस्य एकाधिकाः सिद्धान्ता उद्घोषिताः भारतीयदार्शनिकैः। अत एव कश्चिद् यदि अद्वैतमुपनिषदां सिद्धान्तं स्वीकरोति तदाऽन्यो विशिष्टाद्वैतम्, अन्यो द्वैतम्, अन्यो द्वैताद्वैतम् अन्यश्च शुद्धाद्वैतम्। नैष उपनिषदां दोषः, न च सूत्राणाम्

न वा भाष्यग्रन्थानाम्। एतत् वयं सर्वे जानीमहे यदुपनिषदाम् उद्देश्यः सिद्धान्त-प्रतिपादनं नाऽऽसीत्। उपनिषदस्तु ज्ञानिनाम् ज्ञानानुभवमेव प्रकटयन्ति। परं तत्रापि एतदद्य सुनिर्णीतमेव यत् अद्वैतवाद एव उपनिषदां समन्वयात्मको मौलिकश्च सिद्धान्तः। अद्वैतिनाम् मोक्षसिद्धान्तोऽपि वैज्ञानिकः सुसङ्गतश्च। मुण्डकोपनिषदो निम्नाऽङ्कितेन मन्त्रेण मोक्षस्थितेरेव वर्णनं क्रियते—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे॥

अद्वैतवेदान्तेऽविद्या बन्धनमूलम्। जीवोऽविद्याकारणादेव मिथ्यारूपमपि नाम-रूपात्मकं जगत् सत्यमिव गृह्णाति, नश्वरांश्च जागतिकपदार्थान् शाश्वतानिव मनुते। अविद्याहेतोरेव च सत्यासत्ययोर्विवेकं कर्तुमक्षमः संशयग्रस्तः सर्वदा कष्टमेवानुभवति। संशयात्मनामकल्याणन्तु श्रीमद्भगवद्गीतायामपि उद्घोषितमेव—

'संशयात्मा विनश्यति।'

अविद्यैव जीवे ममत्वपरत्वभावनामुत्पादयति। अनया च भावनया दूषितो जीवः संसारे सुखदुःखादिभावनायाः भाजनं जायते। अतो जीवस्य बन्धनमूलम् अविद्या, अविद्यामूलञ्च कर्म। अत एव 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इति गीतोक्त्यनुसारम् मुक्तये कर्मत्यागः समर्थ्यते। कस्तावत् मुक्त्युपासकानां प्रकारः? किन्तैः सर्वथैव कर्मत्यागो विधेय उत कादाचित्कत्वात्? उत्तरमत्रातीव समीचीनम्, तदेतद् यत् मुमुक्षुभिर्वासनया कर्म नहि करणीयम्। मुक्तेन अज्ञानिना वा सर्वथा कर्मत्यागो नहि युज्यते। तत्वज्ञानी वासनारहितभावनया कर्माणि सम्पादयति अज्ञानी च वासनयेत्येव द्वयोर्भेदः। अतो ये कर्मवासनावासिताः भवन्ति ते सर्वदैव विभिन्नयोनिषु जन्मानि गृह्णन्तो बद्धाः सञ्जायन्ते। अतः कर्माश्रितायाः अविद्यायाः निवृत्तिर्मोक्षायानिवार्या। अविद्यानिवृत्तौ सत्यां 'सर्वं खल्विदं ब्रह्म' इति श्रुत्यनुसारम् जगतो ब्रह्मणश्चैकत्वे सिद्धे जीवस्य ममत्व-परत्वादयः सर्वेऽपि संशयाः विनश्यन्ति, कर्माणि च क्षीयन्त इत्येव भिद्यते हृदयग्रन्थिरिति' शीर्षकस्यश्रुत्या प्रतिपाद्यते। 'अविद्यया मृत्युं तीर्त्वा ततोऽमृतमश्नुते' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' 'विद्यया विन्दतेऽमृतम्' इत्यादिश्रुतिवचनान्यपि अविद्यानिवृत्तौ सत्याम् अमृतत्वरूपस्य मोक्षस्य स्थितिमेव वर्णयन्ति।

भिद्यते हृदयग्रन्थिरित्यनुसारम् परावररूपस्य परमात्मनः साक्षात्कारे कृते कर्माणि क्षीयन्त इत्यस्माभिरिदानीमेवोक्तम्। परमत्रैका शङ्का स्वाभाविकी सुसङ्गता च, सा चेयम् यत्—परमात्मबोधे सति किं सर्वाण्येव कर्माणि नश्यन्ति यद्वा कानिचिदेव। अत्रैवैकोऽपरः प्रश्नः, स चायं यत् किं कर्मणामपि भेदोऽथवा एकप्रकारकमेव कर्म। अत्रेदं समाधानमद्वैतिनां यत् प्रारब्धसञ्चितसञ्चीयमानरूपेण त्रिप्रकारकाणि कर्माणि निश्चीयन्ते। किं त्रिविधान्यपि कर्माणि परमात्मबोधे सति क्षीयन्ते न वेति

विषये तु इदमेव सिद्धान्तकथनं यत् यदि कस्यापि अविद्यानिवृत्तिः सञ्जायते तदा तस्य सञ्चितसञ्चीयमाने कर्मणी तु विनश्यतः परन्तु प्रारब्धकर्म। प्रारब्धकर्मणो भोगोऽनिवार्य एव। यावत्कालपर्यन्त मुक्तेनापि जीवेन प्रारब्धकर्मणः भोगो नहि समाप्यते तावत्कालपर्यन्त तेन शरीरमपि धार्यते। अयमेव मुक्तश्च जीवन्मुक्त इति चोच्यते। अनेनापि कर्माणि क्रियन्ते परमनासक्त्या, अनेनापि भोगाः भुज्यन्ते परमवासनया, अनेनापि लोके व्यवह्रियते परम् न ममत्वपरत्वभावनया। यदा चास्य जीवन्मुक्तस्य प्रारब्धकर्मणामपि भोगः समाप्यते तदा तस्य शरीर विनश्यति जीवन्मुक्तश्चैवं विदेहमुक्तः सञ्जायते। अयञ्च विदेहमुक्तः सर्वथैव मुक्तः शान्तिमधिगच्छति। तदेवोक्तम् श्रुतौ—

'न तस्य प्राणा उत्क्रामन्ति' 'विमुक्तश्च विमुच्यते'।

———

# काव्यस्वरूपनिरूपणम्

कवेर्भावः काव्यमित्यनुसृत्य भाव एव काव्यस्य प्राणतत्वम् । भावानामुद्भवश्च अनुभवनाधृतः, अतएव सहृदयपक्षपाती, इत्यपि सरलतया वक्तुं शक्यते । सुखदुखानुभूतिसमर्थे सहृदयसम्पन्ने मानवे तादृश्यनुभूतेः स्थितिरनादिकालतो वर्तते, अतः काव्यस्य सत्तापि अनादिकालत एव स्वीकरणीयेति नाधिकम् ब्रूमः । अनेनायमाशयः स्पष्ट एव यद्भावानुभूतिरेव मूलं काव्यस्य । यन्तु समालोचकाः 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीसमाः । यत्क्रौञ्च मिथुनादेकमवधीः काममोहितम् ।' इत्यस्य रचयितारम् वाल्मीकिम् प्रथम कविं मन्यन्ते, तत्रापि क्रौञ्चमिथुनादेकस्य निषादेन वधे कृतेसति करुणाप्लावितस्य वाल्मीकेस्तीव्रानुभूतिरेव मूलम् ।

काव्यस्वरूपनिर्णयार्थम् भारतीयैः काव्यशास्त्रज्ञैर्बहुधा चर्चितम् । तत्र केषाञ्चित् मतानामेवात्रोल्लेखोऽपेक्ष्यते । अलङ्कारवादिना भामहेन काव्यलक्षणं कुर्वतोक्तम् स्वकीये काव्यालङ्कारे—

"शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद्द्विधा ।
संस्कृतं प्राकृतं चान्यदपभ्रंश इति त्रिधा ।"

निःसन्देहम्, भामह एवालंकारशास्त्रस्य प्रथमो विवेचनकर्त्ता । उपर्युक्तपरिभाषणेन शब्दार्थौ काव्यमिति निर्धारितम् । काव्यविच्चायमालङ्कारिकं चमत्कारं काव्यस्य प्राणममन्यत । काव्यादर्शस्य प्रणेत्रा दण्डिना काव्यस्यादर्शं प्रस्तुवता ईप्सितार्थेन विभूषितः पदसमूह एव काव्यशरीरमुक्तम्—

'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ।'

यत सर्वथा विदितमेवालङ्कारास्त्वनेन काव्यस्वरूप निरूपकेन—

"काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।"

इत्युक्त्वा काव्यशोभाधायकरूपेणाङ्गीकृताः । वस्तुतस्तु दण्डी अलङ्कारशास्त्रस्य रीतिशास्त्रस्य च पोषकः । रीतिसम्प्रदायस्योन्नायकेनाचार्येण वामनेन 'रीतिरात्मा

काव्यस्येति' सिद्धान्त प्रस्थाप्य रीतिः काव्यस्याधाररूपेणस्वीकृता, विशिष्टा पदरचना च रीतिरूपेणोक्ता। ध्वनिसिद्धान्तस्य प्रमुखप्रतिपादकेन प्रस्थापकेन चानन्दवर्द्धनेन ध्वनिरेव काव्यस्यात्मभूततत्वरूपेण गृहीता।

स्पष्टमेवात्रकाव्यलक्षणे यत 'शब्दार्थौ काव्यमित्येव प्राधान्येन काव्यलक्षणम्।' ध्वनिसिद्धान्तप्रस्थापकेन चाचार्येणानन्दवर्द्धनेन, 'काव्यास्यात्मा ध्वनिरित्युक्त्वा काव्य-परिभाषणं विहितम्।'

अलङ्कारवादिना कुन्तकेन च राजशेखरस्य काव्यमीमांसायान्तु "शब्दार्थौ ते शरीरम्........." रस, आत्मा, इत्युक्त्वा काव्यस्वरूपम् निर्धारितम्। निश्चयमेवोपर्युक्तकथनानुसारं रस एव काव्यस्य मूलम्। काव्यशास्त्रक्षेत्रस्य सम्राड्भूतेन चाचार्यमम्मटेन "तददोषौशब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति परिभाष्य काव्यस्वरूपं निर्णीतम्। काव्यप्रकाशकृता मम्मटेन 'अनलङ्कृती पुनः क्वापि' इत्युक्त्वा काव्येऽलङ्काराणामनिवार्यता अस्वीकृता। साहित्यदर्पणरचयित्रा च विश्वनाथेन 'वाक्य रसात्मक काव्यमिति' निगद्य रस एव काव्यस्य प्राणरूपेणोद्घोषितः। रसगङ्गाधरकृता चापि पण्डितराजजगन्नाथेन 'रमणीयार्थप्रतिपादकः शब्दः काव्यमिति' काव्यलक्षणमङ्गीकृतम्। का च रमणीयता इति यदा वय विचारयामस्तदा तु 'क्षणे क्षणे यन्नवतामुपैति तदेवरूपंरमणीयतायाः' इति माघोक्तिरेव उपयोगिनी। उपर्युक्ते सूचीप्रकारककाव्यस्वरूपपरिचये मतद्वयमेव प्रधानम्—एकमलङ्कारवादिनाम् अपरञ्च रसवादिनाम्। ये च ध्वनिवादिनस्तेऽपि रससिद्धान्तस्यैव पोषकाः। 'मुण्डेमुण्डे मतिर्भिन्ना', इत्यनुसारम् कैश्चित् रीतिः, कैश्चिद्वक्रोक्तिः कैश्चिच्चालङ्कारा एव काव्यस्यात्मत्वेनाङ्गीकृताः। परंभारतीयपद्धत्यनुसारन्तु आनन्दोपलब्धिरेव काव्यस्यपरमः प्रतिपाद्यः प्रतीयते। आनन्दोपलब्धेश्चाशयोऽत्र शृंगारादि साध्येन मनोरञ्जनेन न वर्तते अपि तु जगति वर्तमानयोः सुखदुःखयोस्तादात्म्येनानुभूतेन रसानुभवेन।

अतएव, 'मा निषाद' इत्यन्तर्गत कारुण्यानुभूतिकर्त्रा महर्षिणा वाल्मीकिना यदनुभूतं तद् काव्यस्वरूपं सर्वथा व्यनक्ति। किमधिकम्, महर्षिश्चायमादिकविरेवोच्यते। अतोऽलङ्कारवादिनामलङ्काराः, रीतिवादिनां रीतिः, ध्वनिवादिनां ध्वनिश्चैते सर्वे काव्ये यद्यानन्दवादस्य साधनरूपेण सन्ति तदैवैतेषा सर्वेषाम् मूल्यम्, नान्यथा। अतोऽलङ्कारादयोऽस्माकं मते काव्ये साधनरूपेणैव ग्राह्याः न तु साध्यरूपेण।

आनन्दवाददृष्ट्या काव्यस्वरूपनिर्णये क्रियमाणे सति साधारणीकरणसिद्धान्तस्यापि उल्लेखकरणमपेक्षितमेव। साधारणीकरणव्यापारेणैव रागादीनां सुखदुःखादिरूपो विशिष्टोभावः न केवलं रागादीनामेव वर्ततेऽपि तु तच्चरित्रपाठकानां—श्रोतॄणाम् नाटकादौ च प्रेक्षकाणामपि भावः सञ्जायते। एषा साधारणीकरणव्यापारस्य प्रक्रिया रसानुभूतिप्रयोजनायानिवार्यैव परं काव्ये किंविधानाम् भावानां साधारणीकरणव्यापारो

युज्यते, उत सेर्वेषामित्यपि विचारणीयः प्रश्नः। परस्परवृत्तिवैषम्यकारणात् सर्वेषामपि भावानां साधारणीकरणम् सर्वैरपि कर्तुं न शक्यते। निदर्शनार्थं यदि काव्ये कश्चिदसज्जनः सज्जने कोपं करोति यद्वा कश्चिन्निम्नकोटिपुरुषः काञ्चित् कुरूपां प्रति स्वकीयां रतिभावनां प्रकटयति तदेतत्सर्वमवलोक्य उदात्तवृत्तिसम्पन्नानाम् मनुष्याणाम् कृते साधारणीकरणस्यावसरो नैव सम्भविष्यति। परं यदि तद्वत् कुत्सितवृत्तिसम्पन्नाः प्रेक्षकाः भविष्यन्ति तदा तु काव्ये प्रदर्शितानाम् अनुदात्तानामपि भावानां साधारणीकरणं सम्भविष्यत्येव। अतः काव्ये तेषामेव भावानामुत्तमता प्रतिपादनीया ये भावाः सामान्यतया उत्तमभावाः स्वीक्रियन्ते येषु च लोकस्योदात्तवृत्तेरनुभवः सम्भाव्यते। एवञ्च 'व्यवहारविदे शिवेतरक्षतये', इत्यादीनि काव्यप्रयोजनानि विचार्य एतादृशानामेवोदात्तभावानां योजना काव्ये प्रामुख्येन कार्या यैर्लोकशिवस्य प्रयोजनं सिध्येत। परमनेन नायमाशय आस्माकीन यज्जगतोऽन्यायासदादियुक्तस्य यथार्थस्वरूपस्य वर्णनं काव्ये नहि करणीयम्। तदपि भवेत्, परमादर्शरूपेणोदात्तभावानां प्रस्थापनाऽनुदात्तभावानाञ्च निराकृतिः काव्ये आवश्यिकी। अनेनैव प्रकारेण लोकशिवस्य स्थापना सम्भवेत्, नान्यथा। काव्ये केवलं लोकस्य यथार्थस्वरूपस्य चित्रणेन साधारणजनस्य मनोरञ्जनन्तु सम्भाव्यते परन्तेन मानवादर्शभूतस्यानन्दस्योपलब्धिर्नहि क्रियते।

एतत्सर्वं काव्यस्यान्तरिकं स्वरूपं विचार्यैवोक्तम्, परं काव्यस्य बाह्यं स्वरूपमपि वर्तते, यथा मानवस्य आत्मस्वरूपातिरिक्तं शरीरस्वरूपम्। काव्ये या शब्दयोजना सा काव्यशरीरत्वेनैवगृह्यते। भावानुरूपं शब्दशरीरयोजनाऽपि यदि काव्ये स्यात्तदाऽतिशयेन शोभनम्। मन्मते तु शब्दाः भावानाम् आवरणाः एव सन्ति। शब्देष्वेवार्थो निगूढोवर्तते। कवेश्चोद्देश्यो भावनिवेदनमेवास्ति। अतः कविना स्वकीये काव्ये एतादृश्याः भाषाया एव प्रयोगो विधेयो यस्याः पठनान्तरमेव भावबोधः स्यात्।

द्राक्षाफलानामावरणवद् भाषायाः योजना सुकविना कर्त्तव्या। यथा द्राक्षाफलान्तर्वर्ती रसः द्राक्षाफलानामुपमैव प्रतीयते। एवमेव काव्येऽपि काव्यार्थस्यानुशीलनं काव्यानुशीलनकाले प्रयत्नेनैवस्यादिति मे मतिः। एतत्कृते एवास्माकं काव्यशास्त्रे माधुर्योजप्रसादानां गुणानां निर्देशः कृतो दृश्यते। भावानुरूपमेव कविनैतेषां गुणानांयोजना स्वकीये काव्ये कार्या। येन भावोद्बोधः सरलः सबलश्च स्यात्।

काव्यदेवस्योपर्युक्तमान्तरिकं बाह्यच शरीरं शोभयितुमेवालङ्काराणामुपयोगिता, यथा सुन्दर्याः शोभां वर्द्धयितुं वस्त्रालङ्काराणामुपयोगिता। यथा सुन्दर्यास्तद्वर्तिनयन–नासिकाधरकपोल–केशादिसमन्वितम् सौन्दर्यमेव प्रधानं वस्त्रालङ्काराश्च गौणाः, एवमेव काव्येऽपि काव्यवर्तिभावानामेव सौन्दर्यं प्रमुखम् अलंकाराश्च अप्रधाना एव। अनेन काव्येऽलङ्काराणामनिवार्यताऽपि निषिद्धैव।

उपर्युक्तप्रकारेण लिखितानां काव्यानां संस्कृतजगति न्यूनता नास्ति। संस्कृत-काव्य–क्षेत्रे कालिदासादीनामनेकेषामपि कवीनां रघुवंशादयः काव्यग्रन्थाः संस्कृतकाव्य-स्योचितस्वरूपं सर्वथैव प्रस्तुवन्ति । गद्यकाव्यक्षेत्रेऽपि बाणादीनां काव्य–वैशिष्ट्य निदर्शनरूपेण ग्राह्यमिति नानुचितं ग्राह्यम् ।

———

६

# काव्ये रसस्वरूपविवेचनम्

शब्दार्थौ काव्यमिति मम्मटप्रतिपादितम् मतम् । एतावेव काव्यस्य शरीरमिति वक्तव्यम् । यथा शरीरस्याधिष्ठातृदेव आत्मा तथैव शब्दार्थरूप–काव्यशरीरस्यापि अधिष्ठातृदेवात्मनो विषये कल्पनाप्यसमीचीनम् । कोऽयमात्मा काव्यशरीरस्येति विषये एकाधिकाः सम्प्रदायाः समुपलभ्यन्ते । एतेषु सम्प्रदायेषु अलङ्कारसम्प्रदायः, वक्रोक्ति-सम्प्रदायः, रीतिसम्प्रदायः, ध्वनिसम्प्रदायः, रमणीयतावादिसम्प्रदायः रससम्प्रदायश्च वैशिष्ट्येन गण्यते ।

आचार्योदण्डी अलङ्कारसम्प्रदायस्य प्रमुख प्रसारकः । 'काव्य शोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इत्येतत् प्रतिपाद्य दण्डिना काव्येऽलङ्काराणाम् महत्त्वम् प्रदर्शितम् । चन्द्रालोककारेण जयदेवेन तु अलङ्कारविरहे काव्यत्वमेवनाऽङ्गीकृतम् ।

### वक्रोक्तिसम्प्रदायस्य प्रवर्त्तकः कुन्तकः

कुन्तकेन "वक्रोक्तिरेव वैदग्ध्यभगीभणितिरुच्यते" इत्युक्त्वावक्रोक्तिसम्प्रदायस्य प्रतिष्ठा कृता । अनेनाचार्येण वक्रोक्तिम् प्रतिपादयता ऽन्यलङ्काररसादीनामप्यन्तर्भावो वक्रोक्तावेव घटितः ।

### रीतिसम्प्रदायस्य व्याख्याता आचार्यो वामनः

'रीतिरात्मा काव्यस्य' इति प्रतिपाद्याचार्यवामनेन काव्ये प्राथमिकम् रीति-मूल्यम् स्वीकृतम् । किन्नाम रीतिः ? इति समाधानाय "विशिष्टपदरचनेति" वामना-चार्येण सम्यक् समाहितम् । अतएव काव्यशोभाकराः धर्मास्तेन गुणा एवोक्ताः ।

रीतिसम्प्रदायस्य प्रतिक्रियास्वरूपमेव ध्वनिसम्प्रदायस्य जन्म विद्यते। ध्वनि-सम्प्रदायस्य प्रख्यात: प्रवर्त्तक आनन्दवर्धनाचार्य:। काव्यस्यात्मा ध्वनिरित्युक्त्वा-ऽऽचार्यानन्दवर्धनेन अभिधाव्यापारस्य खण्डनम् विधाय ध्वन्यर्थस्य महिमा प्रदर्शित:। ध्वनिकाव्यमेवाऽऽनन्दवर्धनेनोत्तमम् काव्यमप्युक्तम्। अभिनवगुप्त-मम्मट-विश्वनाथ-प्रभृतयोऽप्याचार्या: ध्वनिकारस्य मतेन प्रभाविता आसन् इति नाधिकम् कथ्यते।

रमणीयार्थप्रतिपादक: शब्द: काव्यमिति सिद्धान्तमाश्रित्य पण्डितराजजगन्नाथेन काव्ये रमणीयार्थ एव प्राधान्येन स्वीकृत:। केयम् रमणीयतेति महाकविमाघेन 'क्षणे क्षणे यन्नवतामुपैतितदेव रूप रमणीयताया:' इत्युक्त्वा रमणीयताया: सुस्पष्टा परि-भाषा प्रदत्ता।

## रससम्प्रदायस्य प्रवर्त्तको मुनिर्भरत:—

भरतमुनिना रसशास्त्रस्य शास्त्रीयम् विवेचनम् सम्पादितम्। वस्तुतस्तु रसस्य सत्ता शाश्वती। रस आनन्द एव नान्य:। पारमार्थिकं सत्यं ब्रह्म च सच्चिदा-नन्दस्वरूपमेव कथ्यते। अत:रसोऽपि आत्मैव ब्रह्म वा। श्रीकृष्णेनाप्युक्तम् गीतायाम्—

"रसोऽहमप्सु कौन्तेय"

'रसो वै स:' इत्यपि प्रसिद्धम्। एषा रसस्याऽऽध्यात्मिकी स्थिति:। विश्वनाथ-प्रभृतिभि: रसवादिभिराचार्यै: रस: काव्यस्यात्मा एवोक्त:। यथा शरीरस्याधिष्ठान-मात्मनि वर्तते तथैव काव्यशरीरस्याप्यधिष्ठानम् रस एव वर्तते। रसम् विना काव्यं निर्मूलम्। अतएवाचार्यै: रसस्यात्मता प्रतिपादिता। कैश्चित् 'रसो वैब्रह्मानन्दसहोदर:' इत्युक्त्वा रसस्य ब्रह्मानन्देन तुल्यता वर्णिता। अत्रैतद् वैशिष्ट्येन वक्तव्यम् यद् रसस्य ब्रह्मानन्दतुल्यताया हेतु: रसस्याखण्डताऽऽद्वैतता च वर्तते। यथाऽऽत्मनि अखण्डत्वम-द्वैतत्वं च वर्तते तथैव रसानुभूतिरपि अखण्डाद्वैतानुभूतिसहिता च वर्तते। परन्त्वत्रापि ब्रह्मानन्दानुभूते: रसानुभूतेश्चान्तरोऽपि सुस्पष्ट एवावलोक्यते। ये ब्रह्मानन्दमनुभवन्ति ते 'आत्मविद् आत्मैवभवति, इति वेदान्तशास्त्रनियमानुसारम् सर्वदा प्रपञ्चेनास्पृष्टा एव सन्ति, परम् काव्यानन्दस्यास्वादकास्तावत्कालपर्यन्तमेवाखण्डस्याद्वैतस्य च रसस्या-स्वादनं कुर्वन्ति, यावत्कालपर्यन्तं रसनिष्पत्ते: साधनानि विभावानुभावव्यभिचार्यादीनि तिष्ठन्ति। श्रव्यकाव्यस्य श्रवणकाले दृश्यकाव्यस्य (नाटकस्य) दर्शनकाले च श्रोतु: द्रष्टुश्च रसानुभूति: कथ्यते। यदा च न काव्यश्रवणन्न च नाटकदर्शनन्तदा रसानु-भूतिरपि न दृश्यते। परम् ब्रह्मानन्दस्य स्थिति: शाश्वती। एष एव द्वयोरन्तर: प्रति-भाति। कोऽयं रसानुभूतिप्रकार इतीदानीमालोक्यते।

## रसानुभूतौ साधारणीकरण व्यापार:

रसानुभूतौ साधारणीकरणप्रक्रियाया: स्वरूपम मनोवैज्ञानिकम्वर्तते। अनया

प्रक्रियया रत्यादयो भावाः आश्रयालम्बनयोरेव न भूत्वा नाटकदर्शकैः साधारणजनैश्चापि सम्बन्धिताः भवन्तीत्येवास्य व्यापारस्य साधारणीकरणयोजना। प्रकारान्तरेणैतदुच्यते यत् साधारणीकरणप्रक्रिया द्वारा दुष्यन्तादिभिः रत्यादेर्याऽनुभूतिरनुभूयते सा साधारणदर्शकैश्चापि निःसंशयमेवाऽनुभूयते। एतदेवाश्रयस्य दर्शकस्य च श्रोतुर्वा तादात्म्यम्। एवञ्च किमपि वस्तुविशेषम् यथाऽऽश्रयस्य भावस्यालम्बनतां याति तथैव सर्वेषाम् सहृदयपाठकानाम्, श्रोतॄणाम् दर्शकानाञ्च भावस्यालम्बनत्वमाप्नोति। अनेनैतदपि स्पष्टम् भवति यत्साधारणीकरणमालम्बनत्वधर्मस्यैव सञ्जायते। साधारणीकरणस्योपर्युक्तेन व्यापारेणैव रस निष्पत्तेद्वारमनावृत्तम् भवति।

रसनिष्पत्तेर्विषयेऽपि नैकमत्यमाचार्याणाम् वर्तते। एषु आचार्येषु भट्टलोल्लट-शंकुक-भट्टनायकाभिनवगुप्ताचार्याणाम् मतानि सुप्रख्यातान्येव सन्ति। एतेषामाचार्याणाम् मतानामालोचनात् पूर्वम् रसनिष्पत्तेः प्रमुखविचारकस्याचार्यस्य भरतमुनेः रसनिष्पत्तिसम्बन्धितस्य मतस्य सङ्केत आवश्यको वर्तते।

## भरतमुनेः रसनिष्पत्तिसम्बन्धि मतम्

विभावानुभावव्यभिचारिभावानाम् संयोगाद् रसनिष्पत्तिः सञ्जायते। इत्युक्त्वाऽऽचार्यभरतेन रसनिष्पत्तेः प्रक्रिया निर्दिष्टा। भरतमुनिसूत्रान्तर्गतप्रयुक्तस्य 'निष्पत्ति' शब्दस्यार्थस्य विषये नास्त्यैकमत्यम्। भट्टलोल्लटमते निष्पत्त्यर्थः 'उत्पत्तिः', 'शङ्कुकमतेऽनुमितिः', भट्टनायकमते 'भुक्तिः' अभिनवगुप्तमते च निष्पत्त्यर्थः—'अभिव्यक्तिः' वर्तते। इदानीम् भट्टलोल्लटाद्याचार्याणाम् उपर्युक्त भरतमुनिसूत्र घृत-मतानामपेक्षितमालोचनम् प्रस्तूयते।

## भट्टलोल्लटस्य 'उत्पत्तिवादः'

यत् पूर्वमेवोक्तम् भट्टलोल्लटाचार्येण निष्पत्त्यर्थः उत्पत्तिगृहीतः। अतएवास्य सिद्धान्तोऽपि उत्पत्तिवादनाम्ना प्रख्यातः। भट्टलोल्लटाचार्यस्य मतमस्ति यत् विभावानुभावादिसंयोगात् अनुकार्येषु रामादिषु रसोत्पत्तिः सञ्जायते। तत्रापि सीताप्रभृतयो विभावाः प्राधान्येन रसस्योत्पादकाः सन्ति। कटाक्षभुजाक्षेपादयोऽनुभावाः उत्पन्नस्य रसस्य बोधकाः भवन्ति। निर्वेदादयो व्यभिचारिभावाश्च तस्य रसस्य पोषकाः सन्ति। अतएव स्थायिभावस्य विभावानाञ्च सम्बन्ध उत्पाद्योत्पादकभाव-सम्बन्धः, स्थायिभावस्यानुभावानाञ्च सम्बन्धो गम्यगमकभावसम्बन्धः, स्थायिभावस्य व्यभिचारिभावानाञ्च सम्बन्धः पोष्यपोषकभावसम्बन्धश्च निश्चीयते।

## शङ्कुकस्य 'अनुमितिवादः'—

अनुमितिसिद्धान्तस्यानुसर्त्राऽऽचार्यशङ्कुकेन भरतमुनिसूत्रवर्त्तिनः निष्पत्तिशब्द-स्यार्थोऽनुमितिः संयोगशब्दस्यार्थश्च गम्यगमकभावसम्बन्धः स्वीकृतः। अतएवास्य

सिद्धान्तोऽनुमितिवाद इति प्रख्यायते । शङ्कुकाचार्येण सामाजिकेन सह रसस्य सम्बन्धः स्थापितः । एतदनुसत्य नटः कृत्रिमरूपेणैवानुभावादीनाम् प्रकाशनं विदधाति । तान् कृत्रिमान् अनुभावादीनपि दृष्ट्वा सामाजिकः नटे वस्तुतो विद्यमानस्यापि रसस्यअनुमान करोति । स्ववासनया च वशीभूतः सामाजिकस्तस्यानुमीयमानस्य रसस्यास्वादनम् प्राप्नोति ।

## भट्टनायकस्य 'भुक्तिवादः'

भुक्तिवादसिद्धान्तानुसारम् रसस्य 'निष्पत्तिः' नानुकार्ये रामादौ न चानुकर्तरि नटादौ सञ्जायते । भट्टनायकमते तु रसः सामाजिकेनैवानुभूयते । एवञ्च भट्टनायकेन भट्टलोल्लट-शङ्कुकयोर्द्वयोरप्याचार्ययोः उत्पत्तिवाद-अनुमितिवादसिद्धान्तयोर्निराकरणं कृतम् । भट्टनायकेन भुक्तिवादसिद्धान्तस्यपुष्ट्यर्थम् भावकत्व-भोजकत्वरूपौ व्यापारौ स्वीकृतौ भावकत्वव्यापारेण काव्यार्थस्य साधारणीकरणम् सम्पाद्यते, भोजकत्वव्यापारेण च सामाजिकेन साधारणीकृतःस्थायिभावो रसरूपेण भुज्यते । अतएव भट्टनायकमते निष्पत्तिशब्दस्यार्थो भुक्तिरिति स्वीक्रियते ।

## अभिनवगुप्तस्य अभिव्यक्तिवादः

तन्त्राद्यनेकशास्त्रनिष्णातेनाचार्याभिनवगुप्तेन 'अभिव्यक्तिवाद' सिद्धान्तः प्रस्थापितः । आचार्याभिनवगुप्तेन भरतमुनिसूत्रस्य 'निष्पत्ति' शब्दार्थोभुक्तिर्नीयते । अभिनवगुप्तमते सामाजिकस्थः स्थायिभाव एव रसानुभूतेर्निमित्तम् वर्तते । संस्काररूपेण सामाजिकस्थः स्थायिभावः साधारणीकृतैर्विभावादिभिरभिव्यक्तो भवति । अभिनवगुप्तेन भट्टनायकाङ्गीकृतौ भावकत्वभोजकत्वव्यापारौ नहि स्वीकृतौ । अनेन स्वाचार्येण साधारणीकरणव्यापारस्यैव महत्त्वम् प्रतिपादितम् । साधारणीकरणव्यापारस्य विवेचनमस्मिन्निबन्धे पूर्वकृतमेवेति न पुनरावृत्तिरपेक्ष्यते ।

वस्तुतस्तु रसस्वरूपमलौकिकमेव निर्णीयते अभिनवगुप्तप्रभृतिभिः साहित्यशास्त्रविवेचकैराचार्यैः । एतदेवास्य विलक्षणत्वम् यद् विभावादिभिर्लौकिकैः पदार्थैरभिव्यक्त उद्बुद्धो वा रसो लौकिकः कथ्यते । रसानुभूतिस्थितौ लौकिकं न सुखं, न च दुःखम्, न भयम्, न प्रीतिः, न पुण्यम्, न पापम्, नोत्साहो न च कार्पण्य दृश्यते । सत्त्वखण्डस्य भिन्नाभिन्नत्वरहितस्य चानन्दस्यानुभूतिरनुभूयते । अत एव न तत्र शृंगारो, न करुणः, न वीरो, न भयानकः, न हास्यो, न रौद्रः, नाद्भुतो, न शान्तः, न च वीभत्सोऽवलोक्यते । एतेषाम् स्थितिस्तु व्यावहारिकी, परम् रसानुभूतिरलौकिकीअव्यावहारिकी च निश्चीयते । अतएव सर्वेषामपि रसानाम विश्वनाथप्रभृतिभिराचार्यैः सुखात्मकता प्रतिपाद्यते । किमधिकं विश्वनाथादिभिराचार्यैः करुणरसस्यापि आनन्दात्मकत्वम् सम्पादितम् । यदुक्त्माचार्यैर्विश्वनाथैः—

करुणादावपि रसे जायते यत् परं सुखं।
सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥
किञ्च तेषु यदा दुःखं न कोऽपि स्यात् तदुन्मुखः।
तथा रामायणादीनां भविता दुःखहेतुता ॥
साहित्यदर्पणः ३-४-५ ॥

---

७

# वक्रोक्तिः काव्यजीवितम्

'रीतिरात्मा काव्यस्य' इति वामनप्रतिपादितसिद्धान्तस्य प्राधान्यं निराकृत्य 'वक्रोक्तिः काव्यजीवितम्' इति मतस्य प्रतिष्ठापक आचार्यः कुन्तकः काव्यशास्त्रस्य प्रख्यात आचार्यः। आचार्येणानेन स्वकीये वक्रोक्तिजीविताभिधे ग्रन्थे यथाऽस्य नाम्नैव स्पष्टं वक्रोक्तेः प्रतिपादनं काव्यात्मानं मत्वा कृतम्। वक्रोक्तिं स्पष्टीकुर्वताऽऽचार्यकुन्तकेनोक्तम्—

'वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी वैदग्ध्यभंगीभणितिः। वैदग्ध्यं विदग्धभावः, कविकर्मकौशलं, तस्य भंगीविच्छित्तिःतया भणितिः। विचित्रैवाभिधा वक्रोक्तिरित्युच्यते।'

कुन्तकस्योपर्युक्तकथनानुसारं प्रसिद्धकथनात् शास्त्रव्यवहारप्रयुक्तकथनाद् वा भिन्नो वर्णनप्रकार एव वक्रोक्तिर्निगद्यते। एवञ्च वैदग्ध्यपूर्णा या उक्तिः सैव वक्रोक्तिः। वैदग्ध्यन्तुकविकर्मकौशलम्। अतश्च कविकौशलसाध्यचारुताश्रितोक्तिरेव वक्रोक्तिर्ज्ञेया। अत्रैव इदमपि वैशिष्ट्येन प्रतिपाद्यं यल्लोकशास्त्रकथनाद् भिन्नत्वं वैदग्ध्यमूलकञ्च कर्मकौशलमेव न वक्रोक्तिसाधकमपि तु वक्रोक्तौ सहृदयमनःप्रसादनस्य क्षमताऽनिवार्या। अनेनेदं स्पष्टं-यद् वक्रोक्तिः शब्दक्रीडा, अर्थक्रीडामात्रैव वा नास्ति। एवञ्च वक्रोक्तेः स्वभावोक्त्या सह विरोधोऽपि न वक्तव्यो यत् स्वभावोक्तौ सहृजवर्णनाद्धेतोः काव्यचारुता सहृदयमनःप्रसादनसामर्थ्यञ्च सर्वथैव सम्भवम्।

वक्रोक्तिप्रतिपादकेन कुन्तकेनाचार्येण वक्रोक्त्यर्थं कविप्रतिभाजन्यचमत्काररया-

वश्यकता स्वीकृता। एषा काव्यप्रतिभा जन्मजन्मान्तरसिद्धा कुन्तकमते। यदुक्तमपि— 'प्राक्तनाद्यतनसंस्कार परिपाक-प्रौढ़ा-प्रतिभा।' अत-इयं प्रतिभा अस्य वर्तमानस्य जन्मन एव संस्काराणां फलन्न वर्तते अपि तु पूर्वजन्मैतज्जन्मसस्काराणाम् परिपाक-रूपैवैषा प्रतिभा। अस्याचार्यस्य मते कविप्रतिभा काव्यनिर्माणे प्रधान कारणम्। कवि-प्रतिभायाः प्रौढ़ि समर्थयतानेन विदुषा स्पष्टमेवोद्घोषितम्—

'यद्यपि द्वयोरप्येतयोस्तत् प्राधान्येनैव वाक्योपनिवन्धः तथापि कविप्रतिभा प्रौढ़िरेव प्राधान्येनावतिष्ठते।'

अम्लानप्रतिभयैव काव्ये शब्दार्थयोर्नवीनश्चमत्कार उत्पद्यते। अनेनैव च चमत्कारेणापूर्वस्य काव्यसौन्दर्यस्य स्फुरणं सञ्जायते। परमत्रेयमाशङ्का स्वाभाविकी यत प्रतिभा भूतपूर्वं कमपिविषयमुत्पादयति यद्वा सर्वथा नूतनमेव। अत्रत्वियमेव विचारणा अस्माकं यत् प्रतिभा न सर्वथा अभूतपूर्वमेव प्रस्तौति न वा सर्वथा नूतन-मेव। इयन्तु कस्यापि वस्तुनः साधारण्यं परित्यज्य तद्वस्तु लोकोत्तरतयोपस्थापयति। अत्रास्य वस्तुन उपस्थापनन्तु नवीनं पर वस्तु पूर्वस्थितमेव। एव च प्रतिभायाः कार्यमुद्घाटनमुन्मेषकरणम् वा ग्राह्यन्नान्यदिति मे मतिः। अनया प्रक्रियया च प्रतिभा वर्ण्ये विषयेऽनिर्वचनीयमातिशय्यमेवानयति, येन तस्मिन् सहृदयमनोहारिणी रमणीय-तैवाध्यारोप्यते।

कुन्तकस्य वक्रोक्तिसाधिकया प्रतिभया रसालंकारवादयोर्मध्यमः पन्थाः गृहीतः। यद्याचार्यस्य प्रतिभाया अतिशयरूपकार्यमलङ्कारवादित्वम् पोषयति तदा तत्तु सहृदयमनोहारित्वं रसवादत्वमेव च साधयति। अतएवायं समन्वयस्य पन्थाः।

कवेः प्रतिभायाः फलरूपैषा वक्रोक्तिः काव्यालङ्काररूपैव। अलङ्काररूपाया-श्चास्याः वक्रोक्तेः कुन्तकेन प्रमुखतया भेदषट्कन्निर्धारितम्। ते च भेदाः—वर्णविन्यास-वक्रता, पदपूर्वार्द्धवक्रता पदपरार्धवक्रता, वाक्यवक्रता, प्रकरणवक्रता चेति। अत्रैतेषां भेदानां पृथक् पृथक् वर्णनमपेक्षितमेव। तदेतत्।

वर्णविन्यासवक्रता—वर्ण विन्यास वक्रता तु सा यत्र एको व्यञ्जन वर्णः, द्वौ व्यञ्जनवर्णौ, वहवो वा व्यञ्जनवर्णा स्वल्पान्तरतया तस्मिन्नेवरूपे दृश्यन्ते। वर्ण-विन्यास वक्रता वर्णरचनायाः वक्रतैव वक्तव्या। वर्ण विन्यासवक्रतां स्पष्टीकुर्वता कुन्तकेनेदमुक्तम्—

एको द्वौ वहवो वर्णाः मध्यमानाः पुनः पुनः।
स्वल्पान्तरास्त्रिधा सोक्ता वर्णविन्यासवक्रता॥

एषा वर्णविन्यास वक्रतापि त्रिविधा। सा चैकवर्णस्यावृत्या, द्विवर्णयोरावृत्या द्वयधिकवर्णावृत्या च।

पदपूर्वार्द्धवक्रता—पदपूर्वार्द्धवक्रता तु सा यस्याम् मूलशब्दस्य वक्रतोपलभ्यते। अस्याप्यष्ट भेदाः सन्ति। तेवरूढ़िवैचित्र्यवक्रता, पर्यायवक्रताः उपचारवक्रता, विशेषणवक्रता, संवृत्तिवक्रता, वृत्तिवक्रता, लिङ्गवैचित्र्य-वक्रता क्रियावैचित्र्यवक्रता चेति।

प्रथमा रूढिवैचित्र्यवक्रता तु सा यस्यां लोकोत्तरतिरस्कारस्य प्रशंसनस्याभिप्रायेण वाच्यार्थरूढिना सम्भवस्यार्थस्याध्यारोपो यद्वोत्तमधर्मस्यातिशयस्यारोपः क्रियते। पर्यायवक्रता तु सा यस्या वक्रता तु पर्यायाश्रिता। एवञ्च शब्दानां प्रयोगकौशलमेव पर्यायवक्रता। यथा निम्नोद्धृतोदाहरणे वज्रिणः इति शब्दस्य प्रयोगः पर्यायवक्रताया एव सौन्दर्यम् बोधयति—

"सन्ति भूभृति हि नः शराः परे ये पराक्रमवसूनिवज्रिणः"

अर्थादस्माकं राज्ञि एतादृशाः बाणाः सन्ति ये वज्रधारिणः इन्द्रस्यापि पराक्रमस्य निधिरूपाः।

सोपचारवक्रता कुन्तकमते यस्यां कस्यचिद् अन्यस्य वस्तुनः सामान्यधर्मस्य किञ्चिन्मात्रसम्बन्धेनापि दूरान्तरवस्तुन्यारोपो विधीयते। यथा—

"अतिगुरवो राजभाषा न भक्ष्याः" इत्यस्मिन्नुदाहरणे आलङ्कारिक सौन्दर्यमुपचाराश्रितम्। चतुर्थी सा विशेषणवक्रता यत्र कारणस्य क्रियायाः वा महिम्ना वाक्यसौन्दर्यं प्रस्फुरितं सञ्जायते। आचार्य कुन्तकेन कारकसम्बन्धिविशेषणवक्रताया यदुदाहरण दत्त तदिदम्—

'करान्तकालीनकपोलभित्तिवाप्योच्छलतकूणितपक्ष्मलेखा।
श्रोत्रान्तरे पिंडितचित्तवृत्तिः शृणोति गीतध्वनिमत्रतन्वी॥

उपर्युक्ते पद्येऽनेकानि तन्विविशेषणानि रसपरिपाकहेतुरूपाणि सन्ति।

सवृत्तिवक्रता सा पञ्चमी यत्र वैचित्र्यकथमेच्छया सर्वनामादिभिः वस्तुसंवरणं गोपनम् वा विधीयते। यत्राव्ययीभावादिसमास-तद्धितकृदादिवृत्तीनां सौन्दर्य प्राकाम्यं प्राप्नोति तत्रैव षष्ठी वृत्तिवक्रता। सा सप्तमी लिगवैचित्र्य वक्रता यत्र वाक्यसौन्दर्य लिङ्गप्रयोगाश्रितम्। अष्टमी च क्रियावैचित्र्यवक्रता सा यत्रोक्तिवैचित्र्य धातुरू.. पदपूर्वार्द्ध आश्रितः।

पदपरार्द्धवक्रता—पदपरार्धवक्रतान्तर्गतम् पदानामुत्तरार्द्धस्यैव विचारः कार्यः। एषैव प्रत्ययवक्रतापि कथ्यते। अस्यापि षड्भेदाः यथा—कालवैचित्र्यवक्रता, कारकवक्रता, सङ्ख्यावक्रता, वचनवक्रता वा पुरुषवक्रता, उपग्रहवक्रता प्रत्ययवक्रता च। यत्र चमत्कारः कालविशेषप्रयोगाश्रितः तत्र कालवैचित्र्यवक्रता। यत्र विशेषकारकप्रयोगेण प्रतिभासम्पन्नः कविरपूर्वचमत्कारमुत्पादयति तदा कारकवक्रता। यत्र काव्ये वैचित्र्यमुत्पादयितुं कविः स्वेच्छया वचनविपर्यासं करोति तदा वचनवक्रता। यथा—

"वयं तत्वान्वेषान्मधुकर हतास्त्वं खलुकृती"

इत्येतस्मिन्नुदाहरणे राज्ञादुष्यन्तेन कृतः 'वयम्' इत्यत्र बहुवचनप्रयोगो वचन-वक्रताया एवोदाहरणम्। अत्र आत्मनिन्दां विरक्तिम् वा व्यञ्जयितुमेव बहुवचन-प्रयोगः। आचार्यकुन्तकेन सा पुरुषवक्रतोक्ता यस्यां काव्यसौपम्यायोत्तममध्यमपुरुष-योर्वैपरीत्येन प्रयोगो विधीयते। अत्र वैपरीत्यस्यायमभिप्रायो यद् उत्तममध्यमपुरुषयोः स्थाने अन्यपुरुषस्य विधानं विधीयते। उपग्रहवक्रतायान्तु परस्मैपदात्मनेपदयोरेकस्य प्रयोग औचित्येन क्रियते। सा तु प्रत्ययवक्रता यस्यां कविरेकस्मिन् प्रत्यये परप्रत्यय-योजनयापूर्वं चमत्कारमुत्पादयति। उपसर्गवक्रतानिपातवक्रता इति द्वावन्यावपि भेदौ पदवक्रतायाः स्वीक्रियेते।

वाक्यवक्रता—सा वाक्यवक्रता यस्यां केवल शब्दैर्वस्तुन उत्कर्षयुक्तेन स्वभावेन सुन्दरं वर्णनम् प्रतिपाद्यते। सापि सहजा आहार्या चेति द्विप्रकारका। यथोक्तमपि—

सैषा सहजाहार्यभेदभिन्ना वर्णनीयस्य वस्तुनो द्विप्रकारस्य वक्रता।

प्रकरणवक्रता—यदा कविः काव्यसृष्टयुत्साहेन प्रेरित अपूर्वमुत्कर्षमानयति सा प्रकरणवक्रता। सा चैवं प्रबन्धैकदेशस्य कथैकप्रसंगस्य वा प्रकरणस्याश्रिता।

प्रबन्ध वक्रता—महाकाव्यनाटकादीनाम् वास्तुकौशलम् प्रबन्धवक्रतान्तर्गतमेव गृह्यते।

कुन्तकस्य वक्रोक्तिस्वरूपविवेचनेनेद स्पष्ट यद् वक्रोक्तेरलङ्कारेण सहान्तर-ङ्गः सम्बन्धः। यद्यप्ययं वक्रोक्तिसम्प्रदायोऽलङ्कारसम्प्रदायात् पृथगुल्लिख्यते परं मन्यते वास्तवस्त्वयं विचारः यदय सम्प्रदायोऽलङ्कारसम्प्रदायस्याङ्गभूत एव। परमत्रैवेदमपि स्वीकार्यं यदनयोर्द्वयोरपि सम्प्रदाययोर्भेदोऽपि अवश्यमेव द्रष्टव्यः यश्चतात्त्विकः। वक्रोक्तिसिद्धान्तप्रतिपादकस्याचार्यकुन्तकस्य विषये इदमपि वैशिष्टये-नोल्लेखनीयमस्ति यदयं रसस्य विरोधी न वर्तते। काव्ये रसस्य प्रयोजनं प्रतिपादय-तानेनाचार्येण स्पष्टमेवोक्तं यत् काव्यामृतरसः सहृदयानां हृदि चतुर्वर्गफलास्वादाद-प्यधिकं चमत्कारमुत्पादयति—

चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते॥

एवञ्च यथा ध्वनि-रससम्प्रदाययोः सम्बन्धः स्वीक्रियते तथैव वक्रोक्तिरस-सम्प्रदाययोरपीति सत्यमेव निश्चिनोति विपश्चिद्वर्गः।

---

८

# ध्वनिसिद्धान्तः

संस्कृतवाङ्मये रससम्प्रदायः, अलङ्कारसम्प्रदायः, रीतिसम्प्रदायः, वक्रोक्तिसम्प्रदायः ध्वनिसम्प्रदायश्चेति यत् सम्प्रदायपञ्चकं तत् सुविदितमेव संस्कृतसाहित्यशास्त्रस्यानुशीलनकर्तृणाम्। एतेषु सर्वेष्वपि सम्प्रदायेषु ध्वनिसम्प्रदायस्य महिमाऽतिशयेन महत्त्वपूर्णः। यद्यपि, मीमांसकैर्नैयायिकादिकैश्च ध्वनिसिद्धान्तस्य विरोधो विहितः परन्तत्राप्ययं सिद्धान्तो वाग्देवतारूपैराचार्यमम्मटैः पोषितः स्वकीयामनूपनाम् मूल्यवत्तां धारयत्येव। अतएव काव्यप्रकाशकारो मम्मटो ध्वनिप्रतिष्ठापकाचार्यो मन्यते। वस्तुतस्तु ध्वन्यालोकस्य रचयिता आनन्दवर्धनाचार्य एवास्य ध्वनिसिद्धान्तस्य प्रवर्तकः।

किं नामायं ध्वनिः कश्चास्येतिहास इति जिज्ञासा स्वाभाविकी ध्वनिसिद्धान्तविषये। तदेवेदानीम् विचारयामः।

ध्वनिकारेणानन्दवर्द्धनेन ध्वनिसिद्धान्तं स्पष्टीकुर्वतोक्तं यद् यत्र विशिष्टवाच्यरूपोऽर्थः विशिष्टवाचकरूपः शब्दश्च स्वार्थं त्यक्त्वा यमर्थं प्रकाशयति सः काव्यविशेष एव ध्वनिरिति कथ्यते—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

किं स्वरूपः काव्यविशेषोऽयं ध्वनिः? इति विश्लेषणं कुर्वतानन्दवर्द्धनेनातिललितशैल्या निगदितं यत् प्रतीयमानं अर्थरूपं किञ्चिदविलक्षणं वस्तु यन्महाकवीनां वाणीषु वाच्यार्थाद् भिन्नरूपेणभासते। एतत्तथैव यथा सुन्दरीणाम् मुखनेत्रनासिकाश्रोत्राद्यवयवेभ्यो भिन्नं लावण्यं विलक्षणतया शोभते। यदुक्तम्—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥

प्रतीयमानार्थसंपन्ना च महाकवीनां वाणी प्रतिभाविशेषं व्यनक्ति। व्याकरणिकव्युत्पत्तिदृष्ट्या तु ध्वनेः परिभाषणमनेकधा कर्तुं युज्यते, तद्यथा—ध्वनति यः स व्यञ्जकः शब्दः ध्वनिः, ध्वनति ध्वनयति वा यः सः व्यञ्जकोऽर्थः ध्वनिः, ध्वन्यते इति ध्वनिः, ध्वन्यते अनेन इति ध्वनिः, ध्वन्यतेऽस्मिन्निति च ध्वनिः। व्यङ्ग्यश्च वाच्यातिशायी। अत एवेदं वक्तुं शक्यते यद् वाच्यातिशयाधिक्येन रमणीयो व्यङ्ग्य एव ध्वनिः।

कुतश्चास्य सिद्धान्तस्योत्पत्तिरिति जिज्ञासितेतु वैयाकरणानां स्फोटवादसिद्धान्त एवास्य मूलं निधार्यते। स्वयं ध्वनिसिद्धान्तप्रतिष्ठापकेनाचार्यानन्दवर्द्धनेनापि "काव्य-

स्यात्माध्वनिरिति वृद्धैर्यः समाम्नातपूर्वः" इत्युक्त्वा वैयाकरणानां स्फोटवादस्यैव सङ्केतो विहितः। एवमेव च 'सूरिभिः कथितः' इत्यभिधायापि ध्वनिकृता उपर्युक्त एवाशयः स्पष्टीकृतः। येन च व्यापारेणार्थस्य स्फुटनं सञ्जायते स एव स्फोटः—स्फुटत्यर्थो स्मादिति स्फोटः। स्फोटसिद्धान्तानुसारं शब्दस्य रूपद्वयम्—एकं व्यक्तमपरञ्चाव्यक्तम्। व्यक्तं विकृतमव्यक्तञ्च नित्यम्। व्यक्तं वैखरीवाणीसम्बन्धितमव्यक्तञ्च मध्यमावाणीसम्बन्धितम्। मध्यमा च वैखर्यपेक्षया सूक्ष्मतरा वाणीति तु सुनिश्चितमेव। योऽयं प्रथमो व्यक्तः शब्दः स स्थूलः उच्चारणविध्यनुसारं परिवर्तनशीलश्च। अव्यक्तश्च शब्दः सूक्ष्मो मानसरूपः नित्योऽखण्डश्च। अस्याखण्डशब्दस्य सत्ता मनसि सर्वदैव दृश्यते। वर्णानां सङ्घातविशेषे चायं नित्योऽव्यक्तः शब्द उद्बुद्धो जायते। अयमेव शब्दस्य स्फोटः। यथा च पृथक् पृथक् वर्णान् श्रुत्वापि शाब्दबोधः स्फोटेन ध्वनिव्यापारेण वा सञ्जायते तथैव काव्ये शब्दानां वाच्यार्थं गृहीत्वापि काव्यसौन्दर्यस्य प्रतीतिर्नहि सञ्जायते, सा तु केवलं व्यङ्ग्यार्थेन ध्वनिव्यापारेण वा सम्भवा नाऽन्यथा। अनेनत्विदं सर्वथा स्पष्टमेव यद् ध्वनिकारेणानन्दवर्द्धनेन स्वकीये ध्वनिसिद्धान्तप्रतिपादने वैयाकरणानां स्फोटसिद्धान्तात् प्रेरणा गृहीता।

के च ध्वनिभेदाः, इत्यपि विचारणीयो विषयः। प्राधान्येन ध्वनेर्द्वौ भेदौ, एको लक्षणामूलो ध्वनिरपरश्च अभिधामूलोध्वनिः। लक्षणामूलो ध्वनिरेव अविवक्षितवाच्यध्वनिरपि कथ्यते। एतदन्तर्गतं वाच्यार्थस्य विवक्षानवर्तते, वाच्यार्थस्त्वत्र बाधित एव। लक्षणामूलकध्वनेश्चापि द्वौ भेदौ—एकोऽर्थान्तरसङ्क्रमितवाच्योऽपरश्चात्यन्ततिरस्कृतवाच्यः। अर्थान्तरसङ्क्रमितवाच्ये तु ध्वनौ बाधितो वाच्यार्थोऽर्थान्तरे परिणतः सञ्जायते। योऽयमत्यन्ततिरस्कृतवाच्यो ध्वनिस्तदन्तर्गतन्तु वाच्यार्थोऽतिशयेन तिरस्कृतो दृश्यते। ध्वनिश्चायं पदगतो वाक्यगतश्चोभयविधः। यथा च नाम्नैव स्पष्टमभिधामूलो ध्वनिस्तु अभिधाश्रितएव। अयञ्च विवक्षितान्यपरवाच्योऽपि उच्यते। अस्मिंश्च वाच्यार्थो विवक्षितोऽपि सन् व्यङ्ग्यपरक एव। अभिधामूलकध्वनेश्च द्वौ भेदौ—असंलक्ष्यक्रमः संलक्ष्यक्रमश्च। असंलक्ष्यक्रमे ध्वनिरूपे वाच्यार्थव्यङ्ग्यार्थयोः प्रतीतेः क्रमः स्वल्पत्वात् स्पष्टतयाऽलक्ष्यः। संलक्ष्यक्रमे तु ध्वनौ अयं क्रमः सम्यक्तया लक्ष्यः। अस्य च शब्दशक्त्यर्थशक्त्युभयशक्तिरूपेण च भेदत्रयम्। यत्रायं ध्वनिः शब्दशक्त्याश्रितस्तदा शब्दशक्त्युद्भवो भेदः यत्र अर्थशक्त्याश्रितस्तत्रार्थशक्त्युत्थो भेदः यत्रचायं शब्दार्थोभयशक्त्याश्रितस्तदोभयशक्तिरूपस्तृतीयो भेदः। एत एव ध्वनेः प्रमुखाः भेदाः। कैश्चित्तु ध्वनेर्भेद, प्रभेदान् विचार्यास्य लक्षचतुष्टयादप्यधिका भेदाः कथ्यन्ते।

आचार्येणानन्दवर्द्धनेन तु ध्वनिसिद्धान्तस्य प्रतिपादनमेतादृशं विहितं यदस्मिन् तत्पूर्ववर्तिनो रस—गुण—रीत्यलङ्कारादयः परवर्त्तिनश्च वक्रोक्त्यौचित्यादयः सर्वेऽपि

सम्प्रदाया समाहृता भवन्ति । गुणरीत्यलङ्कारादयः सर्वे ध्वन्यर्थमुपकुर्वाणा एवस्व-प्रयोजनं साधयन्ति । अत एवैतेषां गुणादीनां महत्ता ध्वन्यर्थकारणादेव । ध्वन्यर्थाभावे तु एतेषामगतिरेव वक्तव्या यद् गुणादयो वाच्यार्थद्वारेण तु मनःप्रसादन्न ददति । अत एव आनन्दवर्द्धनेन प्रतिपादितो ध्वनिसिद्धान्तः काव्यस्यात्मैव । अन्ये च काव्य-शास्त्रसम्बन्धिनः सिद्धान्ता अस्यैवाङ्गभूता इति नानुचितं किञ्चिद् ब्रूमः ।

---

९

## शब्दशक्तयः

अर्थं ग्राहयितुं शब्दे शक्त्यपेक्षाऽनिवार्या । यथा शक्तिं विना शिवः शव एव यथा चोष्णतां विना अग्निः शक्तिहीनःसारभूतश्च तथैव शब्दशक्तिविरहिताः डित्यादयो यदृच्छाप्रयुक्ताःशब्दा अपि निरर्थका एव सन्ति । डित्यादयो यदृच्छाप्रयुक्ता शब्दा अपि निरर्थका एव सन्ति । डित्यादयो यदृच्छाप्रयुक्ताः शब्दा वक्तुरिच्छया सज्ञार्थे प्रयुज्यन्ते परन्नहि तेभ्यः कश्चित् शाब्दिकोऽर्थः गृहीतुं शक्यते । अतोव्याकरणिकव्युत्पत्या निष्प-न्नानां शब्दाना या काचिदपि शक्तिः स्वाभाविकी एषैव शब्दशक्तिः अभिधालक्षणा-व्यञ्जनारूपेण त्रिधा । अभिधया वाच्यार्थः मुख्यार्थो वा, लक्षणया लक्ष्यार्थो व्यञ्जनया च व्यङ्ग्यार्थो बुध्यते ।

शब्दस्य मुख्यार्थबोधिकाशक्तिरभिधा । यथाशरीरावयवेषुमुखस्य प्राधान्य तथैव अभिधादिषु अभिधायाः प्राधान्यम् । अभिधामनाश्रित्य नहि लक्ष्यार्थो न वा व्यङ्ग्यार्थो ग्रहीतुं शक्यते । अतोऽभिधा शक्तिः शब्दस्य मुख्यार्थबोधिका शक्तिः । प्रकारान्तरेण मुख्यार्थबोधने शब्दस्य यो व्यापारः सञ्जायते स एव अभिधाव्यापारोऽपि उच्यते । उदाहरणार्थं 'गङ्गायां घोषः' इत्यनेन प्रवाहशालिन्यां गङ्गायां घोषो वर्तते, इत्यर्थो अभिधयैव बुध्यते ।

विशिष्टार्थानामाश्रयभूतोऽयमभिधाव्यापारः ।

अभिधासाध्येनमुख्येनार्थेन तात्पर्यानुपपत्तौसत्यां यदा शब्दशक्त्या अन्योऽर्थो-लक्ष्यते सा एव शब्दशक्तिर्लक्षणेत्युच्यते । लक्षणाया एतद् वैशिष्ट्यं यदस्याः व्यापारे

अभिधेयस्य मुख्यार्थस्य बाधः, मुख्यार्थेन सह लक्ष्यार्थस्यान्यस्यवाऽर्थस्य योगः सञ्जायते रूढिकारणात् प्रयोजनविशेषहेतोर्वा अन्योऽर्थश्च लक्ष्यते ।

रूढितो लक्षणाया उदाहरणम् 'कर्मणि कुशल' इति वाक्ये कुशलशब्दस्य प्रयोगः । यद्यपि कुशाँल्लातीति कुशल, इति व्युत्पत्यनुसारं कुशलशब्दः कुशादानव्यापारमेव सूचयति परं लक्षणया कुशलशब्दस्यार्थो दक्ष एव गृह्यते । कुशादानरूपस्य मुख्यार्थस्यात्र बाधः सञ्जायते परं कुशादानकर्मरतस्यापि व्यक्तेः विवेचकत्वस्य सम्बन्धः दक्षेनसहापि वर्तत एव । अतएव प्रसिद्धिकारणात् कुशलशब्दस्यार्थो दक्ष इति गृह्यते । एवमेव गङ्गायांघोष इत्यत्रापि गङ्गाशब्दस्य प्रवाहरूपमुख्यार्थस्य बाधे सति लक्षणया गङ्गातट इत्यर्थो गृह्यते । अत्रापि गङ्गातटयोः सामीप्यसम्बन्धरूपः सम्बन्धोवर्तत एव । अस्मिन्नुदाहरणे गङ्गाशब्देन शैत्यापावनत्वादिधर्माणामभिव्यक्तिरेव प्रयाजनम् । शब्दशक्तेर्लक्षणाया उपर्युक्तं स्वरूपं स्पष्टीकुर्वतोक्तं मम्मटाचार्येण स्वकीये काव्यप्रकाशे—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥

मम्मटसिद्धान्तालोचकेन विश्वनाथेन तु 'कर्मणि कुशलः' इत्याद्युदाहरणेषु व्युत्पत्तिलभ्यप्रवृत्तिलभ्यार्थयोः प्रवृत्तिलभ्येनैवार्थेन व्यवहारप्रचलितस्यार्थस्य ग्रहणं क्रियते । परम् मम्मटस्तु व्युत्पत्तिलभ्यमेवार्थम प्रमुखम् गत्वा लक्षणयैवकार्यं साधयति ।

लक्षणाया अपि आदौ द्वौ भेदौ । एका शुद्धा लक्षणा द्वितीया च गौणी । उपचारेणामिश्रिता शुद्धा उपचारेण मिश्रिता च गौणी । उपचारस्तु अत्यन्त विशकलितयोः पदार्थयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनम् । सारल्यपूर्णपद्धत्या एवं वक्तव्यं यत् सादृश्यगतभेदस्यामिश्रणम् यत्र वर्तते सा लक्षणा शुद्धा । शुद्धाया अपि उपादानलक्षणा-लक्षणलक्षणाभेदेन च भेदद्वयम् । उपादानलक्षणायां शब्दे स्वान्वयसिद्ध्यर्थं अन्यार्थस्याक्षेपः क्रियते, परं शब्दस्य स्वकीयोऽप्यर्थो गृह्यत एव ।

कुन्ताः प्रविशन्ति इति उपादान-लक्षणाया उदाहरणम् । अस्मिन्नुदाहरणे कुन्तानां प्रवेशासम्भवात् अन्वयसिद्ध्यर्थं कुन्तधारिणः पुरुषाः प्रविशन्ति, इत्यर्थो गृह्यते । उपादानलक्षणया अत्र कुन्तशब्दे कुन्तशब्दार्थमत्यक्त्वा कुन्तधारिणाम् पुरुषाणामाक्षेपो विधीयते । शुद्धालक्षणाया द्वितीयो भेदो लक्षणलक्षणा । लक्षणलक्षणायां शब्दे तात्पर्यसिद्ध्यर्थमन्योऽर्थं आक्षिप्यते शब्दस्य स्वकीयश्चार्थस्त्यज्यते । लक्षणलक्षणोदाहरणन्तु गङ्गायां घोष इति । उदाहरणेऽस्मिन् गङ्गाशब्दः स्वकीयम् प्रवाहरूपमर्थं त्यक्त्वा लक्षणया तटार्थम् बोधयति । स्वार्थसमर्पणरूपलक्षणेनोपलक्षितत्वादेवेयं

लक्षणालक्षणलक्षणेत्युच्यते । एवं शुद्धालक्षणाया, उपादान लक्षणा-लक्षणलक्षणेति द्वौ भेदौ व्याख्यातौ । शुद्धाया एव द्वौ अपरौ अपि भेदौ तौ च सारोपा-साध्यवसानेति च । शुद्धासारोपाया उदाहरणम् 'आयुर्घृतम्' इति ।

अत्र आरोप्यमाणमायुरारोपविषयश्च घृतम्, द्वयोर्भेदश्च शब्दोपात्तः, अत एवेयं शुद्धासारोपा । शुद्धा साध्यवसानाया उदाहरणम् 'आयुरेवेदम्' । अत्रोदाहरणे आरोपविषयो घृतं नहि शब्दोपात्तम्, अत एवेयं शुद्धा साध्यवसाना । इत्थञ्च शुद्धा-लक्षणायाभेदचतुष्टयं निष्पन्नम् । शुद्धाया अतिरिक्तं गौणीलक्षणा । गौणी सारोपा-गौणी साध्यवसानेति भेदेन गौणी लक्षणाया अपि द्वौ भेदौ । गौणी सारोपाया उदाहरणम् 'गौर्वाहीकः' इति । गौर्वाहीकः, इत्यत्रोपमानं गौरुपमेयश्च वाहीकः । अत्र द्वावपि सामानाधिकरण्येन निर्दिष्टावत एवात्र गौणी सारोपा । 'गौरयम्' इति उदाहरणम् गौणी-साध्यवसानायाः । अस्यामारोपविषय उपमेयश्च वाहीको न हि शब्दोपात्तः । वाहीकस्य चात्र निर्माणं वर्तते, अत एवेयं लक्षणा गौणी साध्यवसाना । अनेन प्रकारेणेयं लक्षणा षड्विधा भवति—"लक्षणा तेन षड्विधा ।" तच्चेद स्पष्ट चित्रम्—




शब्दस्यापरा तृतीया शक्तिर्व्यञ्जना । व्यञ्जनापिव्यापार एव । यस्य प्रयोजनविशेषस्य प्रतीतिं कारयितुं लक्षणाया आश्रयो गृह्यते तदन्येनानुमानादिसाधनेन साधयितुं न हि शक्यतेऽपि तु तेनैव शब्देन व्यञ्जनया साध्यते । 'गङ्गायां घोषः' इत्युदाहरणे 'गङ्गातटे घोषः', इत्यर्थो लक्षणया गृह्यते । व्यञ्जनया च तटशब्दस्यार्थः शैत्य-

पावनत्वविशिष्टो तटो गृह्यते । गङ्गायां घोष इत्यत्र शैत्यपावनत्वविशिष्टतटस्योल्लेख एव वक्तुरभिप्रायः । व्यञ्जनया वक्तुस्तात्पर्यानुसारमेकस्यैव वाक्यस्यानेका अपि अर्था भवितुमर्हन्ति । यद्यपि शक्तित्रयस्यापि पृथक्-पृथक् महत्त्वं वर्तते परं तत्रापि व्यञ्जना सहृदयानाम् विदुषाञ्च प्रिया शक्तिरिति नान्यथा प्रलप्यतेऽस्माभिः । केचित्तु भाट्ट-मीमांसकानुयायिनो धनञ्जयधनिकप्रभृतयोऽभिधावादिनोऽभिधामेव प्रमुखं मन्यन्ते । एतेषाम्मते व्यञ्जनायाः कार्यमपि अभिधयैव साध्यते । एषोऽभिधा व्यापारोऽभिधा-वादिभिः दीर्घदीर्घतरो व्यापारः स्वीक्रियते—

"सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः"

अभिधावादिनामभिधायाः बाणव्यापारसादृश्येनायमाशयो यद् यथा बाणः स्वलक्ष्यं प्राप्यैव निरुद्धव्यापारो भवति, तथैव अभिधाव्यापारोऽपि उद्दिष्टमर्थमभि-धायैव शान्तो भवति । अनया रीत्या व्यंग्यार्थोऽपि अभिधयैव ज्ञातुं शक्यते ।

---

१०

# राजशेखरस्य काव्यशास्त्रीयसम्प्रदायः काव्यस्वरूपनिर्णयश्च

कवित्वदृष्ट्या कविशास्त्रदृष्ट्या च राजशेखरस्य महिमा न परिचयमपेक्षते यदनेन बालरामायण-बालभारतेति नाटकद्वयस्य, विद्धशालभञ्जिकायाः नाटिकायाः कर्पूरमञ्जरीति सट्टकस्य च रचनां विधाय या कवित्वसम्बन्धिनी कीर्तिरर्जिता सा राजशेखरमेतम् महत्तामपि कविमहाशयानां शिरःसु शेखरताम् प्रापयति, इति सुकवे राजशेखरस्य काव्यसुधास्वादरस्यमेवावलक्ष्य शंकरवर्मणा पद्यमिदम् प्रणीतं स्यात्—

पातुं कर्णरसायनं रचयितुं वाचं सतां संमतां
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकम्
तद् भ्रातः ! शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥

काव्यमीमांसकश्चासौ आकरग्रन्थरूपेण काव्यमीमांसाम् विरचय्य केषांचित्

प्रख्यातानां रसादिसम्प्रदायसिद्धान्तानामैतिहासिकदृशा मीमांसनं विधाय केषांचिच्च सकेतमात्रमेव सम्पाद्य कवीनामुपकारिण्या शिक्षायाश्च निदेशं निष्पाद्य आलंकारिकेषु याम् महतीयाम् प्रतिष्ठामवाप साऽप्रतिमाऽनन्यतमा च।

काव्यमीमांसाया आकरग्रन्थप्रणाली तत्समयानुसारिणी एव मन्तव्या यत्तात्कालिका उद्योतकर-कुमारिलशंकराचार्यप्रभृतयो हिन्दुधर्मस्य दार्शनिका धर्मकीर्ति-शान्तरक्षित-कमलशीलादयो बौद्धाश्च सिद्धान्तविश्लेषणपद्धत्याः लेखका आसन्यैरतीव सरलशैल्या तत्तद्विषयेषु प्रवर्तितानां सिद्धान्तानां सारल्येन समीक्षणं कृतमिति नात्र विवेचनमपेक्षते।

अत्रास्माकं काव्यमीमांसामाश्रित्य राजशेखरस्य काव्यशास्त्रीयसम्प्रदायस्य काव्यस्वरूपनिर्णयस्य च प्रस्तावः। पूर्वं तावत् काव्यशास्त्र सम्प्रदायस्य निर्णयार्थमेव प्रयस्यते। काव्यशास्त्रसम्प्रदायविनिश्चयानन्तरं राजशेखरस्य काव्यस्वरूपनिर्णयविषयको विचारः संगतोऽपि वक्तव्यः। तात्कालिकेषु काव्यसम्प्रदायेषु कस्तावद् राजशेखरस्य सम्प्रदाय इति निर्णेतुं पूर्वं राजशेखरकाले प्रवर्तिताः प्रमुखकाव्यशास्त्रसम्प्रदाया इङ्गित शैल्या प्रस्तूयन्ते।

राजशेखरपूर्वकालिकः सर्वातिप्रमुखः सम्प्रदायो रससम्प्रदायः। रससम्प्रदायस्य च प्रवर्तक आचार्यो मुनिर्भरत एव प्रामाणिकः। परं काव्यमीमांसाकारेण राजशेखरेण प्रथम एव शास्त्रसंग्रहे नामकेऽध्याये (रसाधिकारिकं नन्दिकेश्वर इत्युक्त्वा) नन्दिकेश्वर एव रसस्यादिम आचार्यः स्वीकृताः। अन्यच्च न केवलं राजशेखरेणैवापि तु अभिनवभारतीकृता, संगीतरत्नाकरकृता काव्यादर्शस्य श्रुतानुपालिनीटीकाकृदादिभिश्चापि नन्दिकेश्वरस्योल्लेखः कृतः। सत्यैवेयं नन्दिकेश्वरस्य चर्चा। परन्नन्दिकेश्वरस्य न हि कोऽपि रसविषयको ग्रन्थ उपलभ्यते। अतोऽद्यत्वे वर्तमानो रससिद्धान्तो भरतस्य नाट्यशास्त्रमेवाश्रित्य प्रवर्तित इति निर्विवादमेव स्वीक्रियते काव्यशास्त्रमर्मज्ञैः। रससम्प्रदायमनुसृत्य तु न हि रसादृते कश्चिदर्थः प्रवर्तते, इति भरतसूत्रानुसारं रस एव काव्यस्य परमम् प्रयोजनं निश्चीयते। रसनिष्पत्तिश्च भरतेन विभावानुभावव्यभिचारिसंयोगात् स्वीकृतेति सुव्याख्यातमेवेदानीमिति को लाभोऽस्य पिष्टपेषणेन। अपरश्चालंकारसम्प्रदायः। अलंकारसम्प्रदायस्य प्रवर्तक आचार्यो भामहः। अलंकारसम्प्रदाये काव्येऽलंकाराणामेव प्राधान्यम् मन्यते, परं रसादिकमपि स्वीकुर्वन्ति एते आलंकारिकाः। तृतीयस्तु रीतिसम्प्रदायः। रीति सम्प्रदायप्रवर्तकेनवामनेन तु 'रीतिरात्मा काव्यस्य', इत्युक्त्वा रीतिरेव काव्यस्य प्राणरूपेण स्वीकृता। 'रीतिश्च विशिष्टपदरचना रीतिः', इत्युक्त्वा व्याख्याता। विशेषश्च 'विशेषोगुणात्मा' इत्यभिधाय निरूपितः। वामनेन (काव्यशोभायाः कर्तारो धर्माः गुणास्तदतिशयहेतवस्त्वलंकाराः, इति

सूत्रद्वयमुल्लिख्य अलङ्काराणामपेक्षया गुणानां वैशिष्ट्यम् प्रतिपादितम्। राजशेखर-पूर्ववर्ती चतुर्थो ध्वनिसम्प्रदायः। ध्वनिसम्प्रदायस्य प्रवर्त्तक आचार्य आनन्दवर्द्धनः येन काव्यस्यात्मा ध्वनिरिति वर्णितम्। ध्वनिसिद्धान्तस्तु भरतस्य रससिद्धान्तस्य व्याख्यान-रूप एवेति कथनमप्यत्र नाप्रासङ्गिकम्।

राजशेखरकाले उपरि निर्दिष्टानां रसालंकाररीतिध्वनिसम्प्रदायानाम् प्रतिष्ठा तत्तदाचार्यैः कृतैवासीदिति स्पष्टमेवावलोक्यते। राजशेखरेणापि उपर्युक्तेषु, प्रमुख-सम्प्रदायसिद्धान्तानाम् प्रत्यक्षाप्रत्यक्षरूपेण काव्यमीमांसायां यथापेक्षितम् वर्णनं कृत-मेवेति तावदत्रैवालोच्यते। पूर्वं रस सम्प्रदायमेव नीयताम्। अत्र विषये काव्यपुरुष वर्णयता राजशेखरेण यदुक्तम्—

'शब्दार्थौ ते शरीर, संस्कृत मुखम.......उक्तिचणं ते वचः, रस आत्मा' इति तेन एवंच एतादृशैरेकाधिकैः कथनैर्यानि यथावसरं वक्ष्यामः, राजशेखरस्य रससम्प्रदाय-विषयिकी आस्था स्पष्टमेव प्रतीयते।[1] एवंच "उपकारकत्वादलकारः सप्तमंगम्" इति यायावरीयः, "गुणवदलंकृतंच वाक्यमेव काव्यम्"[2] इत्युक्तिद्वयं राजशेखरेऽल-कारसम्प्रदायप्रभावमपि पोषयति। न केवलमेतदेवापि तु काव्यमीमांसाकृता—"त्रिधा-अभिधा व्यापार इति औद्भटाः", इत्युक्त्वा आलंकारिकस्य उद्भटस्य सादरमुल्लेखः कृतः। एवमेवाचार्येण रुद्रटमेधाविरुद्धोरालकारिकयोरपि संकेतो विहित एव। रीति-सम्प्रदायविषये, राजशेखरस्य वचनविन्यासक्रमः रीतिः, इति रीति परिभाषणम् वामनस्य विशिष्टपदरचना रीतिरित्ति कथनस्यकियत् तुल्यमिति न विवेचनमपेक्षते। प्रायशः समालोचका राजशेखरो ध्वनिविरोध्याचार्य इति मतवादं प्रसारयन्ति हेतुंच सामान्यतया प्रदर्शयन्ति यत् काव्यमीमांसाकारेण महतोऽतिमहतः ध्वनिसिद्धान्तस्य समुल्लेखो न हि कुत्रापि विहितः। परम, नाऽनेन सिद्धान्तानुल्लेखेन राजशेखरस्य ध्वनि-विरोधोऽत्र गन्तव्यः। अत्रेमानिकारणानि वक्तुं शक्यन्ते।

प्रथमम्—आनन्दवर्द्धनेन ध्वनिसिद्धान्तस्य स्थापना तु कृता परं तस्य सम्यक् समादरस्तदानी न हि जातः। ध्वनिसिद्धान्तस्यानन्दवर्द्धनकालिकीमप्रतिष्ठामेव विचार्य मम्मटाचार्यैर्ध्वनिसिद्धान्तस्य प्रतिष्ठापना कृतास्यादित्यनमानमपि नानर्थकं ग्राह्यम्। अत एवैते मम्मटाचार्याः ध्वनिप्रस्थापनपरमाचार्याः मन्यन्ते। अत एव राजशेखरेण तद्विषये न विवेचितम्।[3] अतो राजशेखरस्य ध्वनि विषये मौनं ध्वनिसिद्धान्तस्य सामान्यत्वात्, न तु विरोधकारणात्।

---

1. काव्यमीमांसा अ०-३।
2. काव्यमीमांसा—अध्याय २।
3. काव्यमीमांसा—अध्याय ६।

द्वितीयम्—ध्वनिसिद्धान्तस्तु रससिद्धान्तस्य वैशद्यस्यैवफलम् । अत एव लोचनकृता स्पष्टमेवोक्तम् तेन रस एव वस्तुत आत्मा वस्त्वलंकारध्वनीतु सर्वथा रसं प्रति पर्यवस्येते, इति वाच्यादुत्कृष्टौ तौ इत्याभिप्रायेण काव्यस्यात्मेति सामान्येनोक्तम् । आनन्दवर्द्धनेनापि यदुक्तम्—"सारभूतोस्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति । प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षात् शब्दवाच्यत्वेनैव" एवंच व्यङ्ग्यव्यंजक भावेऽस्मिन् विविधे सम्भवत्यपि । रसादिमय एकस्मिन् कविः स्यादवधानवान् । इत्यभिधाय रसस्यैव प्रामुख्यम् प्रतिपादितम् । अत रसध्वनिसिद्धान्तयोर्विरोधोऽपि न कथमपि प्रतिपादयितुं शक्यः ।

तृतीयम्—प्रतिभाव्युत्पत्योः प्रतिभा श्रेयसी, इत्यानन्दः इत्युक्त्वा राजशेखरेण आनन्दवर्द्धन उल्लिखितोऽप्यस्त्येव ।

चतुर्थम्—अर्थहरणप्रकरणे कवीनां विभाजनमपि राजशेखरेण ध्वन्यालोकादेव गृहीतमिति कथनमपि नास्पष्टताभावइति ।

अतो राजशेखरस्य ध्वनिविरोधित्वं सिद्धान्तवैरस्योत्पादकत्वान्न प्रमाणसाधितमिति निष्पन्नमेव ज्ञेयम् । इदानीं राजशेखरस्य काव्यसम्प्रदायो निर्णतव्यः । काव्यमीमांसायामुपर्युक्तरीत्यलकारसम्प्रदाययोः कतिपयान् विचारानालोच्य केचन देप्रभृतयः समालोचका राजशेखरम् रीतिसम्प्रदायस्याचार्यम् मन्यन्ते, 'केचिच्च अलंकारसम्प्रदायस्य परम् राजशेखरस्तु रससम्प्रदायस्यैवाचार्यः प्रतीयते, नरीति सम्प्रदायस्य नवाऽलंकार सम्प्रदायस्य । राजशेखरम् रससम्प्रदायस्याचार्यं स्वीकुर्वता मयाऽधोलिखित तर्कत्रयम् प्रस्तूयते ।

१. काव्यपुरुपस्य स्वरूप वर्णनावसरे राजशेखरेण रस एव काव्यपुरुपस्यात्मा उद्घोपितः न रीतिर्नवाऽलकारः ।

२. आपराजितेः (लोल्लटस्य) मतमुल्लिखता राजशेखरेण यदुक्तम्—किन्तु रसवत इव निबन्धो युक्तो न नीरसस्य, इत्यापराजितिः, इति तदपि काव्यमीमांसाकारस्य रससम्प्रदायसम्बन्धिनीमेवास्थां प्रकटयति ।

३. काव्यपाकंच वर्णयता राजशेखरेण रसस्य प्रामुख्यमुद्घोपयता स्पष्टमेवोक्तम्—"तस्माद्रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः ।"

उपर्युक्तैर्हेतुभिरिदं सर्वथैव स्पष्टं यद् राजशेखरः काव्ये रसमेव प्राथमिकतामदात् । राजशेखरस्य रससम्प्रदायमनुसृत्यैव काव्यस्वरूपनिर्णयोऽपि कर्तुं शक्यते वस्तुतस्तु काव्य यदलौकिकं कविकर्म तस्य परिभाषण स्वरूपनिर्धारणम् वा न केवलं कठिनमपि तु असम्भवमेव । अतो भामह–दण्डि–वामन–रुद्रट–मम्मट–विश्वनाथ–

पण्डितराजादिभिः सम्यग्विचार्य कृतं काव्यपरिभाषणमपि न काव्यलक्षणस्य इयत्तामेतावत्ताम् वानिर्णेतुं शक्तमिति सर्वथा जानीमहे। परं तत्रापि पुरातनैर्नूतनैश्च काव्यमीमांसकैः काव्यस्वरूपविषयकं यदालोचनं क्रियते तेन काव्यस्य शब्दार्थशरीरादीनां स्पष्टीकरणं तु सम्पद्यत एव। अतः काव्यस्वरूपनिर्णयो यद्यप्यपूर्ण एव स्यात्तथापि नानौचित्यपूर्ण इति समाधेयम् अत्रैवेदमपि कथनं नाप्रासङ्गिकं यत् समन्वयवादिनो राजशेखरस्य काव्यस्वरूपनिर्णयोऽपि समन्वयात्मक एव। अपरंच राजशेखरस्य काव्यस्वरूपलक्षणम् नैकवाक्येन सुनिर्धारितं न वा सर्वथा मौलिकमेवेति निःसङ्कोचमेव स्वीक्रियते। राजशेखरस्य काव्यमीमांसानुसारं तदेव 'काव्यं वक्तुं युज्यते यद् रसात्माविशिष्टं यच्च रसानुगुणगुणालंकाररीत्युक्तिभिश्चान्वितम्। अस्याशयस्य पुष्टिः राजशेखरेण "रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः, इति स्वकीयकथनस्यानुमोदनार्थमुद्धृतेन निम्नलिखितेन वचनेनैवकृता—

गुणालंकाररीत्युक्ति शब्दार्थग्रथनक्रमः।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति॥

राजशेखरमते काव्यपरिधौ अलकाराणां का नाम उपयोगिता, इति विचारचर्चाऽप्यावश्यकी। अत्र विषये राजशेखरेण वेदाङ्गानि वर्णयता यदुक्तम्—उपकारकत्वादलंकारः सप्तमङ्गम्, तत् युक्तिकरम्। अलंकारस्योप कारकतांच प्रतिपादयता राजशेखरेण कठोपनिषदो निम्नलिखितो मन्त्रोऽपि उद्धृतः —

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति।

अनेनोद्धरणेन राजशेखरस्यायमेवाभिप्रायो यज्जीवेश्वरवर्णनात्मकेऽस्मिन्मन्त्रे जीवेश्वरयोरर्थग्रहणं रूपकालंकारेणैव सम्भवति। अत्र द्वासुपर्णेत्यत्र जीवेश्वरयोः वृक्षे च शरीरस्य प्रकृतेर्वा रूपकम्। एवमेवोत्तरार्द्धे व्यतिरेकालंकारेण जीवापेक्षया ईश्वरस्यातिशय्यमपि व्यज्यते। अतश्चात्र स्पष्टमेवेदंपदलंकारद्वयम् मन्त्रार्थमौचित्येन आवगमयति। अयमेवार्थः शंकराचार्यस्याप्यभिप्रेतः। अतएव सी० डी० दलाल महोदयेनापि उक्तं स्वकीय टिप्पण्याम्—

In this way the knowledge of Alamkara helps in correctly interpreting the Vedic texts.

एवंच यदाश्रुत्यर्थबोधाय रूपकादीनामलङ्काराणामुपकारकता राजशेखरेण स्वीकृता तदा सहृदयसंवेद्यस्य काव्यस्यानुशीलनार्थमलंकारस्योपकारकता कथं न स्वीकृता स्यात्। एवंचैते अलंकाराः काव्यार्थम् पोषयन्तो राजशेखरस्वीकृतं काव्यात्मानममुपकुर्वन्ति, इति तर्कनं नासमीचीनमिति मन्यामहे। अनेनेदमपि अगूढमेव यद्राज-

शेखरमते काव्यात्मा रस एव नालंकारः। यत्तु राजशेखरेणोक्त "गुणवदलंकृतञ्च वाक्यमेव काव्यम्", इति तदपि न सिद्धान्तस्वारस्यबाधकम्, अलंकाराणाम् पारम्पर्येण रसोत्कर्षविधायकत्वात् ।

राजशेखरनिर्धारितस्य काव्यस्वरूपस्य प्रभावः परवर्तिनां काव्यशास्त्रिणां सिद्धान्तेष्वपि दरीदृश्यते। निदर्शनार्थं क्षेमेन्द्रेणौचित्यविचारम् प्रतिपादयता रसानुरूपमेव यद्गुणालंकारादीनामौचित्य साधित[1] तद् राजशेखरानुरूपमेवेति "रसोचित शब्दार्थं सूक्तिनिबन्धनः पाकः इत्यादिकेन पूर्वकृतविवेचनेन स्वत एव सेत्स्यति। राजशेखरस्य रसात्मतावादश्च तत्परवर्तिभिर्विश्वनाथाचार्यैः "वाक्यं रसात्मकं काव्यम्", इत्युक्त्वाऽनुसृत इत्यपि सुस्पष्टमेवग्राह्यम्। एवमेव विश्वनाथाचार्यैः पण्डित राजजगन्नाथैश्च राजशेखरोक्तस्य 'गुणवदलंकृतंचवाक्यमेव काव्यम्' इत्यस्य वाक्यमित्याश्रित्य 'वाक्यं रसात्मकं काव्यम्' रमणीयार्थप्रतिपादकः शब्दः काव्यम्, इति चोक्त्वा वाक्यस्य शब्दस्य च काव्यत्वं निर्णीतम् न तु वामनादीनामिव शब्दार्थौ काव्यमित्युदीरितमिति विषयान्तरमाशंक्य इङ्गितमात्रमेव विधाय विरम्यतेऽन्यत् सुधियः स्वयमेवसमालोचयन्तु।

---

११

# मुखम् व्याकरणं स्मृतम्

शरीरावयवेषु यथा मुखम् महनीयम् तथैव शिक्षा-कल्प-व्याकरण-निरुक्त-छन्द-ज्योतिषेति षट्सु वेदाङ्गरूपेषुशास्त्रेषु व्याकरणशास्त्रम् प्रमुखम्। व्याकरणम् विना मानवमहद्ज्ञाननिधेर्वेदस्य रक्षणमप्यसम्भवम्। व्याकरणज्ञानं विना वेदतात्पर्यबोधो नहि कदापि ज्ञातु शक्यते। एवञ्च व्याकरणज्ञानाभावे वेदाशयस्य बोधस्थाने वेदवैद्यस्य विषये तथैवाऽनर्थाविधीयन्ते: यथाऽवैयाकरणेन केनचित् स्वजनश्वजनयोः सकलशकलयोः सकृत्शकृतोश्च भेदमनवगत्यानेका अर्थपरम्पराः प्रस्तूयन्ते। यच्चोक्तमपि—

1. औचित्यविचारचर्चा १–१०

यद्यपि बहुनाधीषे तथापि पठपुत्र ! व्याकरणम् ।
स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥

अतो वेदानां रक्षार्थम् व्याकरणस्योपयोगित्वमनिर्वायम् । महाभाष्यकृता पतञ्जलिनापि वेदरक्षार्थे व्याकरणशास्त्रस्य महत्वं स्पष्टमेवोद्घोषितम्—

'रक्षार्थं वेदानामध्येयं व्याकरणम्'

वेदाध्ययने षट्शास्त्राणामुपयोगिताम् प्रतीकपद्धत्या वर्णयन्, पाणिनीयशिक्षायाम्, यत्र छन्दःशास्त्रस्य पादता, कल्पशास्त्रस्य हस्तता, ज्योतिषशास्त्रस्य चक्षुता, निरुक्तस्य श्रोत्रता, शिक्षाशास्त्रस्य च घ्राणता प्रतिपादिता तत्र व्याकरणशास्त्रस्य सर्वाधिकप्रशस्तत्वात् मुखत्वमेवोद्घोषितम्—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथपठ्यते ।
ज्योतिषामयन चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राण तु वेदस्य मुखं व्याकरण स्मृतम् ।

अत्रैवेदमपि उल्लेखनीयं यत् केवलं वेदाशयमेवाधिगन्तुं व्याकरणशास्त्रस्योपयोगिता न दृश्यतेऽपि तु साहित्य-पुराणेतिहास-तन्त्रादिविविधानपि विषयान् अवगन्तुं व्याकरणशास्त्रस्योपयोगिता स्वीकरणीया । निदर्शनार्थम्, व्याकरणबोधं विना काव्ये-श्लेषाद्यलङ्काराणां सौन्दर्यबोधो नहि भवितुमर्हति । अतः कस्यापिविषयस्याध्ययनार्थं व्याकरणस्य प्रमुखता सर्वैरेवाङ्गीकर्तव्या ।

व्याकरणेऽपि पाणिनीयव्याकरणमेव सर्वप्रमुखम् । अस्य प्राधान्यमनेनैवानुमेयं यत् प्रायशः संस्कृतव्याकरणनाम्नापाणिनीयव्याकरणमेव बुध्यते नहि ऐन्द्रं व्याकरणम् न वा चान्द्राशाकटादिकं किञ्चिदन्यद् व्याकरणम् । पाणिनीय व्याकरणवैशिष्ट्यकारणादेव संस्कृतस्य महत्त्व विश्वस्य सहस्रैरपि विपश्चिद्भिः सगर्वमङ्गीकृतम् । उदाहरणार्थं विलियमजोन्समहोदयेन संस्कृतभाषायाः स्वरूपरचना ग्रीकलैटिनभाषापेक्षयाऽपि प्रशस्ततरोक्ता । अस्मिन् प्रसङ्गे जोन्समहाभागस्याधोलिखितानि वचनानि उद्धरणयोग्यानि प्रतीयन्ते—

"The Sanskrit Language whatever be its antiquity, is of a wonderful structure; more perfect than the Greek, more than the Latin and more refined than other."

वस्तुतस्तु पाणिनीयव्याकरणस्य महत्ताद्वितीयैव । पाणिनीयव्याकरणस्यैतद् अद्भुतमेव वैशिष्ट्यं यदिदं व्याकरणं लौकिकसंस्कृतविषयकमेव न वर्ततेऽपि तु वैदिकविषयकमपि । पाणिनीयव्याकरणस्यस्वरवैदिकीप्रक्रियाभागो वैदिकसंस्कृतज्ञानार्थं क्त्यानुपयोगीति विशदं विवेचनम् नापेक्षते ।

संस्कृतव्याकरणस्य अनेकाअन्या अपि विशेषताः सन्ति या अन्य भाषाव्याकरणेषु प्रायशो नोपलभ्यन्ते ताश्च विशेषताः—संस्कृतव्याकरणस्य अपरिवर्तनशीलता, परस्परनियमाविरोधिता—परिपूर्णता वैज्ञानिकपद्धत्यादयश्च सन्ति। एतद् वैशिष्ट्य कारणादेव संस्कृत व्याकरणं वेदस्य मुखं सर्वेषु च व्याकरणेषु प्रमुखमुच्यते समालोचकैः विद्वद्भिरिति न्याय्या एव सरणिः।

---

१२

# भारतीयदर्शने ईश्वरस्वरूपम्

ईश्वरो भारतीयदर्शनशास्त्रस्य महतोऽतिमहनीयं तत्त्वम्। यद्यपीश्वरः सर्वदैव समोऽनधिको न्यूनः पूर्णश्च तथापि विविधशास्त्रेषु ईश्वरविषयिका विविधा विचारदृष्टयोऽवलोक्यन्ते ईश्वरसम्बन्धिन्याश्च विचारचर्चाया असम ऐतिह्यक्रमोऽपि लभ्यत इति किमु शास्त्रनिर्मातृणां न्यूनत्वमत्र हेतुर्यद्वा ईश्वरविषयकदृष्टेरूहापोहोवा कारणम्। अत्रेदं समीचीनं प्रतीयते यत् सर्वेष्वपि शास्त्रेषु स्वापेक्षामाश्रित्यैव ईश्वरतत्त्वस्य विवेचनं विहितमिति नहि तेषा न्यूनत्वमवगन्तव्यम्। ईश्वरविचारदृष्टेश्च विकासशीलताऽपि मानवप्रवृत्यनुसारं स्वाभाविक्येवपदपूर्ण एवायं मानवः। कथमस्येश्वरविचारस्य भारतीयदर्शने विकासक्रम उपलभ्यत इति साम्प्रतं प्रस्तूयते।

संहितासु ईश्वरसम्बन्धिनी वीजविचारदृष्टिः प्राप्यत एव। ऋग्वेदस्यनासदीयसूक्ते सदसद्विलक्षणे तत्वे जगन्मूलत्वारोपणं, हृसवत्यां ऋचि[1] आदित्यस्य सर्वमूलत्वेन वर्णनं च जगत्स्रष्टुरीश्वरस्यैव पृष्ठाधारं प्रस्थापयति। ऋग्वेद एव पुरुषसूक्ते 'सहस्रशीर्षा पुरुष' इत्यादिना कृतं पारमेश्वरं वर्णनमपि श्रीमद्भगवद्गीतायामनेकवाहूदरवक्त्रनेत्रमित्यादिनाचिवितस्य विराड्रूपस्य कियत् तुल्यमिति न विवेचनमपेक्षते। अतो निश्चितमेव ऋग्वेदीयं पुरुषसूक्तं भाविन्या ईश्वरचर्चाया दृढां पृष्ठिमारचयतीति निश्चयनं नाधिकम्। सामवेदे तु तदिहास भुवनेषु ज्येष्ठमित्यत्रापि[2] तच्छन्दः ब्रह्मण

1. ऋग्वेदसंहिता, ४/४०/५।
2. सामवेद, ६/३/१७।

परित्यज्य ईश्वरशब्दः परमात्मन एवार्थं प्रकाशयति। परं 'शरीरं यदवाप्नोतीत्यत्र ईश्वरशब्दः जीवार्थमेव बोधयति। बाहुल्येनात्रेश्वर शब्द ईश्वरस्य जगन्नियन्तृत्वम्, अन्तर्यामित्वं सर्वेश्वरत्वञ्च व्याख्यापयति।

वेदान्तसूत्रे लोकवत्तु लीलाकैवल्यमित्यादिसूत्रैरेव ईश्वरसम्बन्धिसिद्धान्तस्य विवेचनमवलोक्यते। एवञ्च 'मायामात्रन्तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' इत्यत्र प्रयुक्तः स्वप्नप्रपञ्चद्योतको मायाशब्दो यथाकथमपि ईश्वरसम्बन्धिनीम् मायाशक्तिम् प्रबोधयति।

आऋग्वेदाद् ब्रह्मसूत्रं यावत् शङ्करपूर्ववर्तीनि भारतीयदर्शनशास्त्रे यत्र तत्र यदीश्वरशब्दस्योल्लेखो दृश्यते तत्र कथमीश्वरस्य कर्तृत्वम्, कथमन्तर्यामित्वं कथञ्च मायावित्वं, कथमीश्वरस्योपास्यत्वं न वेति नहि कुत्रचित् प्रतिपादितम्। शङ्कराचार्यस्य गुरुवृन्दैर्गौडपादैरपि ईश्वरविषयको य उल्लेखः कृतः सोऽपि अपर्याप्त एव। अतश्च तत्र तत्र प्रतिपादित ईश्वरविषयको विचारो नहि सिद्धान्तधिया न च सर्वाङ्गीणतया निरूपित इति तद्विषयकप्रतिपादनस्याधिकमपि न्यूनत्वं शङ्कराचार्यैः पूरितमित्यत्र स्पष्टीकर्तुं प्रयस्यते।

## अपरब्रह्मरूपेणेश्वर विवेचनम्—

आचार्येण परापरब्रह्मरूपेण ब्रह्मवादस्य यन्निरूपणं कृतं तदीश्वरवादस्यैव प्रतिष्ठा करोति। न परापरब्रह्मणी भिन्ने, परं स्थितिभेदेनैव द्वैतत्वं तयोरिति शाङ्करोविचारोऽद्वैतवादस्य सिद्धान्तभूमिं द्रढयति। परं ब्रह्म निर्गुणमपरञ्च सगुणरूप ईश्वर इत्येव शाङ्करः सिद्धान्तः।

## ईश्वरस्यान्तर्यामित्वं शासकत्वञ्च—

ईश्वरः सर्वलोकान्तर्यामी शासकश्चेति सुविख्यातमद्वैतशास्त्रे। सर्वभूतानां हृद्देशस्थोऽपीश्वरः जीवकृतसदसत्कर्मभिर्निर्लिप्त इति मायाविनोऽपीश्वरस्य मायारहितत्वम्, इत्यद्वैतवादस्य विचित्रैव प्रहेलिका। ईश्वरस्यान्तर्यामित्वमनेनैव सिद्धं यदन्याय्यं कर्म कुर्वञ्जीवः केनचिदान्तरेण तत्वेन तस्मात् कर्मणो निवारयितुं प्रेर्यते। एतत् आन्तरं तत्वमेवेश्वरः। परं स्वाज्ञानवशाज्जीवः तामान्तरिकीं प्रेरणां उल्लंघ्य सर्वं स्वेच्छानुरूपमेव सम्पादयति।

## मायावित्वमीश्वरस्य—

ईश्वरो मायाशक्तिसम्पन्न एव जगन्नियन्ता जगद्रक्षकः संहारकश्च। परं मायावीश्वरो अप्यन्येषां कृते स्वयमेव मायां प्रसारयति परं न तया मायया स्पृष्टो भवति। एवञ्चेश्वरस्वरूपं शङ्कराचार्यैरैन्द्रजालिकमिव वर्णितम्। यथैन्द्रजालिकः स्वयं प्रसारितया मायया न स्पृश्यते तथैवेश्वरोऽपि अस्पृष्ट एव स्वकीयया मायया।

## ईश्वरस्यलीलासृष्टिः—

परमेश्वरो जगतः स्रष्टेति भगवती श्रुतिः। श्रुतौ च 'एकोऽहं बहु स्याम सोऽकामयत बहुस्यां प्रजायेय' इत्यादि वचोभिः परमात्मनः कर्तृत्वं सम्पादितम्। परमाप्तकामे परमात्मनि कथं सृष्टेः काम इत्याशङ्कनं प्रायः सम्भवति। तत्रेदं समाधानमद्वैतिनां यज्जगत्सृष्टिरीश्वरस्य लीलाया एव फलम्। लीला तु ईश्वरस्य स्वभाव एव। यथा लोके कश्चित् पूर्णाभिलाषो नृपो निष्प्रयोजनमेव स्वभाववशात् स्वकर्माणि विधत्ते राज्यानुकूलकर्तव्यपरायणताभावनया तथैवेश्वरोऽपि निष्कामतयैव संसारसृष्टिमुत्पादयति। यदीश्वरो निष्काम आप्तकामश्च तदा कथं विषमां सृष्टिं निर्मिमीत इत्याशङ्का। तत्रेश्वरो जीवानां पूर्वकृतकर्माण्याधृत्यैव सृष्टिवैषम्यमानयतीति नाऽत्रेश्वरस्याप्तकामत्वे दोषो न वा निष्पक्षकर्तृत्वे। निरपेक्षोऽपीश्वरो धर्माधर्मौ अपेक्ष्यैव सृष्टिक्रियासंलग्नः सञ्जायते। सृज्यमानप्राणिनां सदसत्कर्माण्याश्रित्यैव लोकानामुत्तममध्यमाधमभावश्च बोध्यः। अतो लोके यद्युत्तममध्यमाधमादयो भेदा दृश्यन्ते तदा नात्रेश्वरस्य पक्षपातपूर्णता ज्ञेया, अपितु ईश्वरस्य पर्जन्यवद् व्यवहार एव द्रष्टव्यः। यथा पर्जन्यो व्रीहियवादीनामुत्पादने साधारणो हेतुः व्रीहियवादिषु च वर्तमानं वैषम्यं तत्तद्वैषम्ये विशिष्टो हेतुस्तथैवेश्वरोऽपि देवमनुष्यादीनां सृष्टौ साधारणोहेतुर्विशिष्टस्तु वैषम्यहेतुस्तत्तज्जीवानां सदसत्कर्मसम्भार एव। अतः ईश्वरविषये सृष्टिवैषम्यदोषः नैर्घृण्यदोषश्च निर्मूल एव। वस्तुतस्तु परमेश्वरस्य नहि कश्चिद् प्रियोऽप्रियो वा यं प्रति तस्य अकारणमेव अनुग्रहः अननुग्रहो वा स्यात्। कश्चित् कथयतु चेत्, यद् ईश्वरस्य नहि कोऽपि प्रियः अप्रियो वा तदा कथं लोके एकस्य श्रेयांसि अपरस्य च अश्रेयांसि दृश्यन्ते। कथमीश्वरः एकस्य श्रेयस्कर्ता अपरस्य च कल्याणविरोधी। तत्र तु एवमेव वक्तव्यं यत् लोकस्य श्रेयसः अश्रेयसश्च हेतुर्जीवकृतकर्मोद्वह एव। ईश्वरस्तु निष्पक्षफलदातृत्वेन जीवानां प्रियाप्रियम् करोति, नतु स्वकीयया निरङ्कुशया इच्छया। अतो लोकेनेश्वरो लोकानां भिन्नस्थितेरुन्नत्यवनत्योश्च हेतुः।

यदुपरि चर्चितं तेन इदं सर्वथा स्पष्टं यत् ईश्वरः लोककर्माण्यनुसृत्यैव सृष्टिवैषम्यं—लोकस्थितिवैषम्यं च सम्पादयति। अत्रेयं विचारणा स्वाभाविकी यद् यदीश्वरः लोककर्माणि आश्रित्यैव लोकानामुन्नत्यादिकं सम्पादयति तर्हि का नामोपयोगिता ईश्वरानुग्रहस्य ईश्वरप्रसादप्राप्त्यर्थं प्रार्थनस्य वा यदीश्वरो न्यायप्रियस्तदा सत्कर्मणां फलं दास्यत्येव असत्कर्मणां च परिणामभोगानपि दास्यति। अत ईश्वरवन्दनं निरर्थकमेव। निरर्थकत्वाच्च सर्वमपि वैदिकं, पौराणिकं शाक्तं भक्तिं उपासनासाहित्यं च व्यर्थमेव सिद्ध्यति।

किमत्र न्याय्यमित्यत्र विचार्यते । ईश्वरानुग्रहप्राप्तिः प्रार्थना वा नहि कथमपि व्यर्था । उपासनाया इदमेव साक्षात् फल यत् तया जीवस्य चित्तं पवित्रतां याति । सगुणोपासकः ईश्वरं प्रार्थयन् स्वदुर्गुणैः दुर्मनायते ईश्वरं च प्रार्थयते यदहम् दुष्कर्मकर्ता न स्याम् । अन्यच्चेश्वरप्रसादप्राप्तेफलमीश्वरसान्निध्यलाभः ।

यदुक्तं कौषीतकिब्राह्मणे एष ह्येव साधु कर्मकारयति तं यमेभ्यः लोकेभ्य उन्निनीषत एष एवासाधु कर्म कारयति तं यमधोनिनीषते, (कौ० ब्रा० ३।८) तदीश्वरस्योन्नतावनतकर्मकारकत्वे कथमौचित्यम् । तत्रैतत्प्रतिपाद्यं यज्जीवः पूर्वकृत-कर्मानुसारमेव संस्कारवशात सदसत्कर्मंसु प्रवृत्तो भवति । ईश्वरस्तु साधारणः प्रेरक एव । अतो नात्रेश्वरदोष उद्घाटनीयः ।

## जीवेश्वरयोर्भेदः

शाङ्करवेदान्ते जीव ईश्वरो वा द्वावपि मायिकौ । ईश्वरो यदि समष्टिमूलको ज्ञानावच्छिन्नस्तदा जीवो व्यष्टिमूलकोऽज्ञानावच्छिन्नश्च । पञ्चदशीकृता विद्यारण्ये-नापि "मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ" इत्यभिधाय द्वयोरपि मायोपहि-तत्वं साधितम् । सर्वतन्त्रस्वतन्त्रेण वाचस्पतिमिश्रेणविद्या जीवाधिकरणरूपेण व्याख्याता । जीवस्थिता चाविद्या निमित्ततया विषयतायाश्च हेतोरीश्वराश्रितत्वा-दीश्वराश्रयोच्यते । प्रकटार्थविवरणकृता सर्वभूतप्रकृतिरूपिण्यां चिन्मात्रसम्बन्धिन्या-मनाद्यनिर्वचनीयायां मायायां चैतन्यप्रतिबिम्ब ईश्वरः तस्या एव च मायाया अविद्या-भिधेषु आवरणविक्षेपशक्तियुक्तेषु परिच्छिन्नानन्तप्रदेशेषु चैतन्यं प्रतिबिम्बो जीवः ।

संक्षेपशारीरककृता सर्वज्ञात्ममुनिना अविद्यायां चैतन्यप्रतिबिम्ब ईश्वरोऽन्तः-करणप्रतिबिम्बितश्च चैतन्यप्रतिबिम्बाजीव इत्युदीरितः ।

जीवेश्वरावुभावपि यद्यज्ञानोपहितौ तदा कथमेकः शासकोऽपरश्च शासितः । तत्रेश्वरस्य शासकत्वं निरतिशयोपाधिसम्पन्नत्वात् जीवस्य च शास्यत्वं हीनोपाधि-कारणात् बोध्यम् । यद्यपि जीव ईश्वरस्यांशमिव प्रतीयते पर नांशो, निरवयवस्ये-श्वरस्यांशासम्भवात् । जीवेश्वरयोरयमपि विशिष्टो भेदो यत् जीवः आत्मन्यध्यास-कारणात् ममत्वपरत्वेतिमिथ्याऽभिमानवशादहं सुखी, अहं दुःखी, इत्यादि—कथमनुभ-वति । परं न ईश्वरः सुखदुःखादिभोक्ता, स तु साक्षी एव । साक्षित्वाच्चेश्वरः यद् द्वासुपर्णेत्यत्रवर्णितं न कर्त्ता न भोक्ता न वा मोक्तव्यः । साक्षीश्वरस्तु जीवस्य समस्त-मेव क्रियाकलापं पश्यति न च केनाऽपि कर्मणास्पृष्टो भवति ।

सांख्यादिदर्शनेष्वपि ईश्वरवादस्य विविधाविचारा अवलोक्यन्ते ।

सांख्यसूत्रस्य—'ईश्वरेश्वरसिद्धिः सिद्धा' सूत्रे ईश्वरोल्लेखः स्पष्ट एव । तत्र व्यवस्थापकस्यैवेश्वरस्योल्लेखः प्रतिभाति । यद्यपि सांख्ये कर्तृत्वयुक्तईश्वरोऽवर्णित एव,

परं जगत्साक्षित्वेनेश्वरवर्णनं प्राप्यत एव। ईश्वरसान्निध्याच्च प्रकृतिः स्वव्यापारे लीना जायते।[1] एतच्च तथैव यथाऽयस्कान्तसान्निध्याल्लोहे क्रियाशीलता दृश्यते। अतएव सांख्याचार्येण विज्ञानभिक्षुणा सांख्यदर्शनस्य सेश्वरत्वमङ्गीकृतम्।[2] योगदर्शनेऽपि 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः,' इत्युक्त्वा ईश्वरतत्त्वं परिभाषितम्। अयमीश्वरोऽविद्याऽस्मितारागद्वेषाभिनिवेशेतिपञ्चक्लेशैः पुण्यकर्मभिश्चासंस्पृष्टः पुरुषविशेष एव। पातञ्जलं 'ईश्वरप्रणिधानाद्वा' इति सूत्रमपि ईश्वरस्य सगुणत्वमेव प्रतिपादयति। योगदर्शनशास्त्रिणाञ्चेश्वरः सदैश्वर्यसम्पन्नः मुक्तश्चास्ते। योगदर्शनसम्मतश्चाऽयमीश्वरो योगसम्मतात् केवलीपुरुषाद् भिन्नः। जीवः प्राकृतिकवैकारिकदाक्षिणिकबन्धनेभ्यो मुक्तः 'केवलीपुरुषः' सञ्जायते। परमीश्वरस्तु सर्वदैव मुक्तः। ईश्वरश्च योगदर्शने प्रणवसंज्ञयाऽप्युदीर्यते।

पूर्वमीमांसायां लौगाक्षिभास्करादिभिः 'ईश्वरार्पणबुद्ध्याक्रियमाणस्तु निःश्रेयसहेतुः (अर्थसंग्रहः १।१९६) इत्युक्त्वा ईश्वरविषये स्वधारणा स्पष्टीकृता। एवमेव प्रभाकरेणाऽपि ईश्वरसत्ता संभाविता। जैमिनिमतानुसारं तु धर्म एव विविधफलदायको न त्वीश्वरः।

वैशेषिकदर्शनस्य "तद्वचनादाम्नायस्य प्रामाण्यम्" (वै० सू० १।१।३), "संसारकर्मत्वस्मद्विशिष्टानां लिङ्गम्" इति सूत्रद्वयेऽपि ईश्वरस्य संकेतः प्राप्यते।

ब्रह्मेश्वरयोर्भेदः—ईश्वरोऽपरब्रह्म, ब्रह्म च परम्। ब्रह्म यदि शुद्धं मायोपाधिरहितं तदा ईश्वरः मायावी, सर्वलोकनियन्ता तटस्थश्च। सत्यसंकल्पवांश्चेश्वरो न तु ब्रह्म। ज्ञातृज्ञेयादि भेदोऽपि ईश्वरविषय एव न तु ब्रह्मणि। ईश्वर एवोपास्यो न तु ब्रह्म। अत एव ईश्वरं प्रति गमनमुपासनं वा सम्भाव्यते न तु ब्रह्म प्रति। ईश्वर एव च सुखदुःखादिरूपफलानां दाता न तु ब्रह्म। ईश्वर एव नारायणविष्णु—पुरुषोत्तमरूपेणावतरति। परापरब्रह्मणोः विद्या परापरेति द्विविधा। ईश्वरविषयिका परा विद्यैवसगुणविद्येति कथ्यते।

उपर्युक्तविवेचनेन ब्रह्मेश्वरयोर्भेदस्तु स्पष्टः परं भेदोऽयं वास्तविकश्चेत् तदा तु द्वैतमेव सिध्यति कथमद्वैतम्? किमियं प्रहेलिका? उत्तरयत्यत्र शङ्करः—यत् वास्तविकं पारमार्थिकं तु सत्यमेकमेव ब्रह्म, न तु ब्रह्मणः खण्डत्वसिद्धिः, परमज्ञानोपाधिकारणादेव द्वयोर्भेदः। अपरञ्च येऽज्ञानिनस्तेषां कृत एव ईश्वरः सर्वज्ञः सर्वव्यापी च। परं सति परमार्थबोधे ज्ञानिनः कृते नहि कश्चित् सर्वज्ञः न वा सर्वव्यापी।

---

1. तत्सान्निध्यादधिष्ठातृत्वं मणिवत्।१।९६।
2. सां० प्र० भा० ३।५७।

अतो विद्यैव मूलं द्वयोर्भेदस्य ।[1] अनेन तु अनीश्वरवादस्यैव पुष्टिः सम्भवतीति विप्रतिपत्तिश्चेत्, न, व्यावहारिकजगतः सृष्टेः शून्यत्वासिद्धत्वात् तस्य सत्यत्वापेक्षितत्वाच्च । अतो नेश्वरः प्रातिभासिकः शून्यरूपो वा । अनया तु दिशा नानीश्वरवादी शङ्कराचार्यः । अधुना सुस्पष्टमेवेदं स्याद् यद् वेदे सुवर्णितं सत् तत्वविचार एव विविधेषु भारतीयदर्शनसिद्धान्तेषु ईश्वरताया अनेकानि स्वरूपाणि धारयन् ईश्वरदर्शनस्य महनीये वेदान्ताभिधे शास्त्रे सर्वकर्तुः, सर्वनियन्तुः, सर्ववेत्तुर्मायाविनश्च परमेश्वरस्य स्वरूपे पर्यवसितः ।



१३

# भारतीयदर्शने ख्यातिनिरूपणम्

भारतीयदर्शनस्य विविधैस्तत्त्वान्वेषकैर्नामरूपात्मकस्य जगतो व्याख्यान सम्पादयद्भिःख्यातिवादस्य या विचारणा विहिता सा दर्शनशास्त्रस्य वैज्ञानिकीमेवानुशीलनसरणिं परिचाययति, इति सुविदितं तावद् भारतीयदर्शनशास्त्रविविदिषूणाम् । कोऽयं ख्यातिवादो नाम इति जिज्ञासिते, प्रकृतावसरे शुक्त्यादौ रजतभ्रमविषयकस्य राद्धान्तस्य विश्लेषणमेव ख्यातिवाद इति वाच्यम् । सामान्यतस्तु ख्यापनं ख्यातिरित्यभिधीयते । अत्रेद विमृष्टमुच्यते यत ख्यातिविषयिका विचारधारा नैका । एकेन श्लोकेन ख्यातिपञ्चकम् निरूपयतोच्यते—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।<br>
तथाऽनिर्वचनीयख्यातिरित्येतत् ख्यातिपञ्चकम् ॥

अनेन तु आत्मख्यातिः, असत्ख्यातिः, अख्यातिः, अन्यथाख्यातिरनिर्वचनीयख्यातिश्चेति ख्यातिपञ्चकं निदिश्यते । परमेकाऽन्यापि सत्ख्यातिरिति नाम्नी ख्यातिः । एवञ्च षड्विधेयं ख्यातिः । तत्रात्मख्यातिर्बौद्धानाम् योगाचारविदाम् विज्ञानवादिनाम्, असत्ख्यातिर्माध्यमिकानां शून्यवादिबौद्धानाम्, अख्यातिर्मीमांसकानाम्, अन्यथाख्यातिर्नैयायिकानाम्, अनिर्वचनीयख्यातिरद्वैतप्रचारकाणां शङ्कराचार्यप्रभृतीनाम् सत्ख्याति-

1. ब्र० सू० शा० भा० २।१।१४ ।

श्चाचार्यरामानुजादीनामिति दिङ्मात्रमेव निर्दिश्यते। भारतीयदर्शनस्य समन्वित-समाख्यार्थं का व्याख्या का न वेति निर्णायनाय सर्वासामपि पृथक् समालोचनमभिलष्यत इति निरूप्यते।

आत्मख्यातिवादस्य प्रवर्तको बौद्धो विज्ञानवादी। आत्मख्यातिवादिना तु बौद्धेन शुक्तिगतं रजतज्ञान बौद्धमेव निर्धार्यते। अतश्चेदं बुद्धिस्थं रजतं न सत्, नासद् न वा बाह्यम्। अनया तु धिया द्रष्ट्रा शुक्तौ यद् रजतं दृश्यते तन्न बहिस्थमपि तु आन्तरं बुद्धिस्थमेव। परं शुक्त्याधारितं रजतज्ञानमान्तरमिति न निष्पद्यते। शुक्तौ रजतभ्रमस्य काले बहिस्थस्यैव रजतस्य भ्रमात्। यद्याऽऽन्तरं रजत तदा किं नामाऽयं भ्रमः। अतस्तर्कापुष्ट एवात्मख्यातिवादोऽयम्। यद्युच्यते, अर्थाद् व्यतिरिक्तमपि ज्ञानं स्वयमेवानुभूयते, तन्न, आत्मनि क्रियाविरोधात्।

असत्ख्यातिवादस्य प्रवर्त्तको शून्यवादानुसारी बौद्धो माध्यमिकः। शून्यवादिना जगतः स्वरूपं शुक्त्यादिषु रजतादीनाञ्च स्थितिः शून्यमेवोच्यते। शून्यवादिनाम् मते अधिष्ठानशुक्तौ रजतस्यासत्वात् शुक्तौ रजतस्य भानम् विपरीतधर्मकल्पमेव नान्यत्। नेयं शून्यवादिविचारधाराऽपि श्रेयस्करी, रजतादीनामसत्वेऽङ्गीकरणे रजतादीनां व्यवहारस्यानिष्पन्नत्वात्।

अख्यातिवादिनस्तु प्राभाकरमीमांसकाः। प्राभाकरम् मतमनुसृत्य तु शुक्तौ रजतस्य ज्ञानं न भ्रमः। एतेषाम् मते शुक्तिरजतयोर्भेदाग्रह एव—रजतज्ञाने हेतुः। अत एते शुक्तौ रजतस्य ख्याति स्वीकुर्वन्त्येव नहि। प्राभाकराणामेतेषान्तु इयमेव ज्ञानप्रक्रिया यद् द्रष्ट्रा यदा शुक्तिमवलोकयेदं ज्ञानमनुभूयते—'इदं रजतमिति' तदाऽस्मिन् ज्ञाने द्विप्रकारकं ज्ञान जायते—एक तु ज्ञानं पुरोवर्तिनो यथार्थस्य रजतस्य द्वितीयञ्च रजतस्य स्मरणरूप ज्ञानम्। एवञ्च 'इद रजत' मित्यत्र इदमिति ज्ञानं प्रत्यक्षज्ञानम्, पूर्वदृष्टरजतसंस्कारजन्यसादृश्यमाश्रित्य जातञ्च शुक्तौ रजतसम्बन्धि-ज्ञान स्मृतिमात्रमेव। अत्राय तर्को ख्यातिवादिनोयत् शुक्तिरजतोदाहरणे प्रत्यक्षानु-भूतस्य पुरोवर्तिन 'इद रूप' यथार्थज्ञानस्य स्मृतिस्थरजतस्य च भेदाग्रहादेव शुक्तिः रजतवदवभासते। अयमेव मीमांसकानाम् भेदाग्रहः।

अतः ख्यातिवादिनां मते नहि इदमित्यनेन निर्दिष्टं पुरोवर्तिशुक्तिज्ञानम् मिथ्या न वा तत्र शुक्तौ जातं रजतज्ञानमेव वा। द्वावपि शुक्तिरजतौ अख्यातिवादिमते सत्या-वेवाङ्गीकृतौ। पुरोवर्तिशुक्तेः सत्यता तु सिद्धैव प्रत्यक्षानुभवत्वात्, परं स्मृतिस्थं रजतमपि न मृषा, स्मृत्याधारभूतस्य रजतस्य पूर्वतो दृष्टत्वात्। को हेतुस्तदा शुक्तौ रजतभ्रान्तेरिति भेदाग्रह एवेति प्रतिपादितम्। अथ च यदा द्रष्टुः कृते प्रत्यक्षानुभवस्य स्मृतेश्च, पुरोवर्तिनः शुक्तिपदार्थस्य स्मृतिस्थरजतस्य च भेदग्रहो जायते, न तदा शुक्त्यादौ रजतज्ञानस्यावसरः। अत्रेदं शिष्टं यत् कदाचित् 'पीलियादिनेत्ररोगका्र-

णादपि शुक्लशङ्खस्य यथार्थज्ञानं नहि सञ्जायतेऽपि तु शुक्लोऽपि शङ्खः पीत एव प्रतीयते। अत्रेद वैशिष्ट्येन निरूपणीय यत् वर्णरहितस्यैव शङ्खस्य प्रत्यक्षानुभवः सञ्जायते न तु शुक्लवर्णविशिष्टस्य पीतवर्णविशिष्टस्य वा। नेत्रगतदोषकारणाञ्च शङ्खगतशुक्लिमाऽऽवृता जायते शुक्लश्च शङ्खः पीतोऽनुभूयते। अत्र केषाञ्चिन्मतं यद् यदि वर्णरहितस्यापि शङ्खस्य प्रत्यक्षः सम्भवति तदा वर्णरहितस्य वायोरपि चाक्षुषः प्रत्यक्षः कथन्न स्यात् ? अतश्चैतेषां कथनं यत् पीतशङ्खस्याभासकाले कदाचिद् विशिष्टयैव शुक्लिमया युक्तः शङ्खो दृश्यते न तु सामान्यश्वेतिमया युक्तः शङ्खः। सामान्यशुक्लिमायास्तु बोधस्तत्र नेत्रदोषकारणान्न भवति। परमत्रोदयनाचार्यकृतेयमापत्तिः समीचीनैव प्रतीयते यत् सामान्यशुक्लत्वस्य ज्ञानाभावे शङ्खे कस्यापि प्रकारस्य शुक्लत्वज्ञानं नहि सम्भवति। वर्णरहितस्य शङ्खस्य प्रत्यक्षे स्वीकृते वायोरपि चाक्षुषप्रत्यक्षः स्यादिति शङ्कायां सर्वतन्त्रस्वतन्त्रैर्वाचस्पतिमिश्रैः सम्यगेव समाहितं यत् कस्यापि पदार्थस्य चाक्षुषप्रत्यक्षाय तस्य पदार्थस्य वर्णस्य सत्तैवापेक्ष्यते न तु तस्य वर्णस्य प्रत्यक्षोऽपि। नेयं वार्ता वार्या। न वायुर्वर्णं दधाति शङ्खवत्। इयमन्या वार्ता यत् नेत्रदोषकारणात् शङ्खश्वेतिमा दृष्टिपथं नायाति, परंत्विदं वक्तव्यं यत् शङ्खे श्वेतवर्णोऽस्त्येव नहि।

अख्यातिवादिसिद्धान्तसमालोचनावसरे कथनन्त्वेदमसमीचीनं स्याद् यत् प्राभाकरमीमांसकेन शुक्तौ रजतज्ञानस्य भेदाग्रहरूपा या कारणता प्रदर्शिता सा नोचिता। अत्रायं हेतुर्यत् भेदाग्रहणे तु सति कस्यापि विषयस्य ज्ञानं सम्भवत्येव नहि। एवञ्च यदा शुक्तौ रजतज्ञानं जायते तदा द्रष्टुः कृते स्मृत्याधारित रजत पुरो वर्तमाना च 'इदंरूपा' शुक्तिः उभयमपि भिन्नमेव। अन्यथा भेदे कथ रजतत्वमनुभूतं स्यात्। यदा च द्वयोः—पुरोवर्तिन्याः शुक्तेः स्मृत्याधारितस्य च रजतस्य भिन्नत्वेन ज्ञानमनुभूयते तदा द्वयोर्भेदग्रहस्तु स्पष्ट एव। अतोऽसङ्गत एव भेदाग्रहोऽख्यातिवादिन इति नाधिकम्।

अन्यथाख्यातिवादिनस्तु नैयायिकाः। अन्यथाख्यातिवादमाश्रित्य तु कस्यापि वस्तुनो धर्माणामितरवस्तुन्यारोप एवान्यथाख्यातिः। यथा च शुक्तिरजतोदाहरणे रजतधर्माणां शुक्तावारोपोऽन्यथाख्यातिरेव। यथा च सर्पधर्माणां रज्जावारोपोऽपि अन्यथाख्यातिः। अन्यथाख्यातिवादिना मते तु पूर्वदृष्टस्य रजतस्य स्मरणमेव द्रष्टुर्नेत्रयोर्दूरस्थरजतेन सह सम्बन्धं स्थापयति। इत्यञ्च 'इदं रजतमित्यादौ दूरवर्तिनो रजतस्य पुरोवर्तिना इदमित्यनेन सम्बन्ध एव शुक्तौ रजतस्यान्यथाभ्रमस्य निदानम्। कुमारिलमण्डनादयो मीमांसकाः, जैनाः, निम्बार्कानुयायिनः, चैतन्यसम्प्रदायविदश्चापि अन्यथाख्यातिमेव समर्थयन्तीति उल्लेख्यम्। नात्र तर्कसमीचीनता युज्यतेऽन्यथाख्यातिवादिनः। यदनेनोक्तं पूर्वदृष्टरजतस्य स्मरणमेव नेत्रयोर्दूरस्थेन रजतेन सह सम्बन्धं

स्थापयतीति तन्मृषैव। तत्रेयं वितर्कणा यत् भ्रमकालिकं रजतज्ञानं रजतस्य दूरस्यतां न साधयति। भ्रमकाले तु पुरोवर्ति तत्त्व 'मिदमेव' रजतत्वेन भासते। अत्रान्यदपि प्रमाणं यत् भ्रमनिराकरणे जाते—'इदम् रजतमित्यत्र' इदमित्यनेन सम्बद्धस्यैव रजतस्य निषेधो जायते, तदेव चोच्यते भ्रमनिवृत्तौ सत्यां शुक्तिरियं नेदं रजतमिति। दूरस्य तु रजतं यथावत् स्वस्थाने तिष्ठत्येव। अतोऽ यथाख्यातिवादिनः द्रष्टुर्नेत्रयोर्दूरस्थेन रजतेन सह सम्बन्धस्थापनं तस्य सिद्धान्तहानिमेव प्रतिपादयति।

षष्ठी चेयं सत्ख्यातिः। सत्ख्यातिवादस्य च प्रमुखप्रवर्तको विशिष्टाद्वैतसम्प्रदायस्य प्रवर्तको रामानुजाचार्यः। सत्ख्यातिवाददृशा शुक्तौ भासितं रजतं रज्जौ च भासितः सर्पोऽपि न मिथ्या। सत्ख्यातिवादिधिया भ्रमकालिकं रजतम् मिथ्याऽस्तु नाम परं द्रष्टुः पूर्वदृष्टस्य रजतस्य मिथ्यात्वं न कथमपि स्वीक्रियते। अन्यच्च सत्ख्यातिवादिनस्तर्कस्याश्रयः 'सर्वं सर्वात्मकमिति' सिद्धान्तः। एतञ्च सिद्धान्तमाश्रित्य रजतनिर्माणिकास्तत्त्वांशाः शुक्तावपि वर्तन्ते। एवमेव मृगतृष्णिकायामपि जलांशा वर्तन्त एव, परं न्यूनतया। अतो न सर्वथाऽभावो रजतादीनां शुक्त्यादिषु। एवञ्च सत्ख्यातिवादिभिः स्वकीयं सिद्धान्तं प्रतिपादयितुं पञ्चीकरणस्यापि वेदान्तसिद्धान्तस्याश्रयो गृहीतः। पञ्चीकरणानुसारमपि प्रत्येकमाकाशादिकं तत्त्वमितरैरपि समन्वितं यच्च—

"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्चपञ्च ते॥"

इत्यादिना व्याख्यातम् मनीषिभिः सदानन्दैः। परं यदा पञ्चीकरणन्यायेन 'सर्वं सर्वात्मकमिति' सिद्धान्तेन वा शुक्तिर्यदि रजतमपि तदा भ्रमे दूरीभूते सति 'शुक्तिरियं नेदं रजतमिति' ज्ञानं कथं सम्पद्यते। तत्र तु प्रतिपादयन्ति एते सत्ख्यातिवादिनः—यत् दृष्टिदोषादिहेतोरेव शुक्तिः रजतमिव प्रतीयते, धवलश्च शङ्खः पीतः प्रतीयते। परं दृष्टिदोषादिषु विनश्यत्सु शुक्तौ वर्तमानाः प्रामुख्यं गतास्तत्त्वांशाः प्रत्यक्षीभवन्ति। एवञ्च सति रजतत्वसाधकाः शुक्त्यन्तर्गता न्यूनास्तत्त्वांशाः आवृताः जायन्ते।

सत्ख्यातिवादिनस्तर्काः पुष्टा अपुष्टा वेति विचार्यते। सत्ख्यातिवादिनः 'सर्वं सर्वात्मकम्' इति सिद्धान्तः पञ्चीकरणसिद्धान्तो वा न तर्कपुष्टः। सर्वं सर्वात्मकमिति सिद्धान्ते तु स्वीकृते, रजते लौहे च, पयसि क्षीरे च, घृते मृत्तिकायाञ्च कोऽपि भेद एव न स्यात्। पञ्चीकरणमपि च भूतानामेव भवति न तु भौतिकानामपि पदार्थानाम्। भौतिकानां पञ्चीकरणे तु सति पूर्ववत् स्तम्भादिष्वपि रजतादीनां प्रतीतिः स्यात्। अपरञ्च रजतस्य तत्त्वांशाः शुक्तौ वर्तन्ते इति स्वीकृतेऽपि न शुक्तिः रजतं भवति यद् रजतता रजत एव न तु रजतस्य तत्त्वांशेषु। एवञ्च रज्जुसर्पोदाहरणेऽपि सर्पता सर्पोपादानरूपेषु तत्त्वेषु न वर्ततेऽपि तु सर्प एव। अतः पञ्चीकरणहेतोः शुक्तौ रजताभासस्यावसरो न्याय्य एव वक्तव्यः।

इदानीं वयं वक्तुं पारयामो यत् शुक्तौ यद् रजतमाभासते न तत् सत् नाऽसत् न चैतं न वा स्मृतिस्थं न दूरस्थञ्च । तच्च रजतमनिर्वचनीयम् । एतच्चाद्वैतवेदान्तिनामनिर्वचनीयख्यातिवादेनैव सिध्यति । ख्यातिमेनामाश्रित्य तदेवानिर्वचनीयं वस्तु यत्र त्रैकालिकं सत् न च त्रैकालिकमसत् न वा सदसदुभयम् । रजतस्य चेयमेव स्थितिः यदिदं न त्रैकालिकं सत् भ्रमहेतोः, भ्रमनिवृत्तावनवभासनात् । नासत्, भ्रमकालेऽवभासनात् । न चोभयम्, सदसदुभयात्मकस्य पदार्थस्य बोधाभावात्, रजतस्य च बोध्यत्वात् । अतोऽनिर्वचनीयख्यातिवादे न केवलं सद्विलक्षणतैवापेक्ष्यते, सा तु असति शशशृङ्गेऽपि वर्तते, परं न शशशृंगमनिर्वचनीयम्, न वाऽसद्विलक्षणतैवापेक्ष्यते, सा तु सति परमात्मनि अपि वर्तते, पर नायमनिर्वचनीयः, असतः शशशृङ्गदेः सतो ब्रह्मणो विलक्षणत्वात् । अतः शशशृङ्गादिकं नानिर्वचनीयं यत्र सतः सदसतोश्च वैलक्षण्य वर्तते पर नाऽसतः, न च ब्रह्मैवानिर्वचनीयं यत्तत्राऽसतः, सदसतोश्च वैलक्षण्यं परं न सतः । अत उपर्युक्तदृशा प्रातिभासिक रजतम् व्यावहारिकं जगदेव चानिर्वचनीयं नान्यत् किञ्चित् ।

अनिर्वचनीयख्यातिवादमन्तरेण शुक्तिस्थस्य रजतस्य स्थितिर्न सिध्यति । यद रजतं न सद् वक्तुं शक्यते भ्रमनिवृत्तौ रजताभासबाधात् । न चेदमसद् वक्तुं शक्यते । भ्रमकालेऽवभासनात् शशशृङ्गादीनाञ्च अनवभासनात् । अतोऽनिर्वचनीयख्यातिवाद एव रजतस्य शरणं नान्यत् ।

प्रातिभासिकस्य रजतस्योत्तरकाले निषेधोऽपि रजतस्यानिर्वचनीयतामेव साधयति । यत्र सतो निषेधो युज्यते न वाऽसतः । किं सद् ब्रह्म, असत् शशशृङ्गो वा कदाचित् केनाऽपि निषिध्यते ? न कदाऽपि । भ्रमनिवृत्तौ रजतं निषिध्यतेऽतस्तु रजतमनिर्वाच्यमिति निष्पन्नम् । अतश्चार्थापत्याऽपि रजतस्यानिर्वाच्यता सिद्धा । अत्रायमपरोऽपि तर्कोऽनुसन्धातव्यः, स चायं यत्र निषेधमात्रमेवानिर्वाच्यस्य सिध्यति, अपि तु प्रत्यक्षोऽपि अनिर्वचनीयस्यैव यथार्थस्य । अत्रायं हेतुर्यत् सद् ब्रह्म (परमार्थ सत्) देशकालापरिच्छिन्नत्वात् न कदापि प्रत्यक्षीकर्तुं योग्यम् । असतो वन्ध्यापुत्रस्य शशशृङ्गादेश्च प्रत्यक्षस्य तु कथैव का ।

चिद्रूपञ्चाधिष्ठानं रजतादीनामिति वेदान्तिकः सिद्धान्तः । रजतादयश्च अज्ञानाद्धेतोश्चिति अध्यस्ता जायन्ते । रजतादीनामनिर्वाच्यत्वात् एषामधिष्ठानेन चिता सम्बन्धोऽपि अनिर्वचनीय एव ।

अत्रेदमपि ऊह्यं यत् शुक्तिरजतोदाहरणे यद्यपि प्रातिभासिकस्यैव रजतस्य सामान्यतया भ्रमनिवृत्तौ बाध उच्यते तत् किमत्र न्याय्यम् ? वस्तुतस्तु व्यावहारिकस्यैव रजतस्य निषेधो जायते न तु प्रातिभासिकस्य । रजताभिलाषी भ्रमात् शुक्तिम्

व्यावहारिकं रजतम् मत्वा प्रवर्तते, न च प्रातिभासिकं रजतम् मत्वा। यदा च भ्रमनिवृत्तिः सञ्जायते तदा नेदं व्यावहारिकं रजतमपि तु प्रातिभासिकमित्येव मन्यते। अतो व्यावहारिकस्यैव रजतस्य निषेधोऽङ्गीकार्यो न तु प्रातिभासिकस्य। अतएवोक्तमिष्टसिद्धिकारेण—

'यत् हि यद्रूपं प्रतियोगि न तत् तेनैव रूपेण निषेध्यम्, किन्तु रूपान्तरेण।'

व्यावहारिकरजतस्य निषेधेऽन्योऽपि हेतुर्यत् निषेधस्तु त्रैकालिक एव भवति नांशिकः स च व्यावहारिकस्यैव रजतस्य भवितुमर्हति न तु प्रातिभासिकस्य, यत् प्रातिभासिकं रजतं भ्रमकाले दृश्यत एव। पर व्यावहारिकं तु रजतं शुक्तौ न कदाप्यासीत् न वर्तते न च भविष्यति। भ्रमादेव शुक्तौ व्यावहारिकरजतज्ञानस्याभासो भवति, प्रातिभासिकं तु रजतम्, अतस्तस्यैव भ्रमोत्पन्नस्य रजतस्य निषेधः सम्भवः।

इयमेवानिर्वचनीया ख्यातिर्या शुक्त्यादौ रजतादीनामनिर्वाच्यायाया अपि स्थितेर्निर्वचनं विधत्त इति वेदान्तविद्याविवित्सव स्वयमेवाकलयन्तु।

किं ब्रूमः, परमार्थसतः प्रतिपादयित्री, व्यावहारिकसतो जन्मदात्री, सदसन्निर्णयकर्त्री, संसारस्य साधयित्री, प्रातिभासिकस्वरूपनिर्मात्री, शुक्त्यादौ रजतादिस्वरूपव्याख्यात्री, अद्वैतरक्षयित्री चेयमेवानिर्वचनीयख्यातिर्या वेदान्तऽिण्डमधारिणीमिवाद्वैतशास्त्रसमृद्धिं समुद्घोषयति, इति तच्छास्त्रविदो विद्वांसः स्वयमेवालोचयन्तु।

---

१४

# वेदान्ते मोक्षस्वरूपम्

मोक्षविचारो भारतीयदर्शनस्य जीवनस्य च अत्युपादेयः सिद्धान्तः। मोक्षस्य परमोद्देश्यत्वात् साध्यत्वाच्च सर्वेऽपि दार्शनिकसिद्धान्ता मोक्षसाधकास्तत्पराश्च प्रतीयन्ते। अतो मुक्तेर्दार्शनिकी महत्ता स्पष्टैव। एवमेव भारतीयजीवनेऽपि मुक्तेरद्वितीयो महिमाऽनुभूयते। विविधैर्लौकिकैः सुखैः सुखिता अपि भारतीया आत्मिकसन्तोषमनुभवन्तः संसारबन्धान्मुक्तिं कामयमानाश्चावलोक्यन्ते। एवञ्चाध्यात्मिकैराधिदैविकैराधिभौतिकैश्च क्लेशैः क्लिष्टा जनास्तदुपायान्वेषणरता दृश्यन्ते। तदेवोक्तं सांख्याचार्येणेश्वरकृष्णेनापि—

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥[1]

कस्य मोक्षः सञ्जायते, किञ्चास्य मोक्षविचारस्य औचित्यम्, इति विचारणमपि मोक्षस्वरूपं स्पष्टीकर्तुमावश्यकम् । सर्वेष्वपि वेदान्तग्रन्थेषु जीवस्यैव मोक्षः प्रतिपाद्यते । कश्च जीवो नामेति जिज्ञासायां वेदान्तविदुषाम् मतैक्यन्न वर्तते । यथा—

१ अद्वैतसिद्धान्तप्रमुखप्रतिपादकेनाचार्येण शङ्करेण देहेन्द्रियमनोबुद्धयुपाधिभिरुपहितः परमात्मा एव जीवसंज्ञयाऽभिहितः ।[2]

२ अविद्यायामीश्वरस्याभास एव जीव उच्यते, सुरेश्वराचार्यस्यायमेव विचार आभासवाद इत्युच्यते ।

३ प्रकटार्थविवरणकृता प्रकाशात्मयतिना सर्वभूतप्रकृतिभूतायां चिन्मात्रसम्बन्धिन्याम् अनाद्यनिर्वचनीयमायायाञ्चैतन्यप्रतिविम्ब ईश्वरः मायायाश्च अविद्यानामसु आवरणविक्षेपशक्तियुक्तेषु परिच्छिन्नानन्तप्रदेशेषु चैतन्यस्य प्रतिविम्ब जीव इत्यभिधीयते विवरणसम्प्रदायस्यायं सिद्धान्तः प्रतिविम्बवादनाम्ना सुविख्यातः ।

४ अवच्छेदवादसिद्धान्तस्य प्रवर्तकेन वाचस्पतिमिश्रेण घटाकाशमिव अन्तःकरणावच्छिन्नं चैतन्यं जीवः, तदनवच्छिन्नञ्च चैतन्यमीश्वरोऽविद्यायाञ्च प्रतिविम्बितं चैतन्यं जीव इत्युदीरितः ।[3]

जीवसम्बन्धिनीसु उपर्युक्तासु सर्वासु परिभाषासु मायाऽविद्या वा जीवस्य जीवतायाः हेतुर्दृश्यते । अविद्याकारणादेव च जीवः केषाञ्चिन्मते आभासः, केषाञ्चिन्मते प्रतिविम्बः केषाञ्चिच्च मतेऽवच्छिन्नः प्रतीयते । अतोऽविद्यैव जीवस्य जीवतायाः कारणम् नाऽन्यत् अत्रैवेत्यपि अवधेय यत् मायाऽविद्येति भेदद्वयं शङ्कराचार्योत्तरवर्त्तिकालकृतमेव । शङ्कराचार्येण तु मायाऽविद्ययोर्भेदो नहि कुत्रचिदपि निश्चितः । एवञ्चाविद्यैव जीवत्वस्य कारणम्, जीवस्य वास्तविकं स्वरूपन्तु ब्रह्मैव । इदमपि अत्रैव निर्णेतुं शक्यते यदविद्यैव बन्धनस्यापिमूलम् ।

जीवस्यैवापर रूपं—साक्षी । कर्तृत्वभोक्तृत्वाभिमानरहितः साक्षी । अयन्तु साक्षी स्वयंप्रकाशरूप एव । परं जीवस्तु कर्तृत्वभोक्तृत्वाभिमानसहितः । अतो जीव एव मोक्षस्य विषयो न तु साक्षी । परं जीवो, 'जीवो ब्रह्मैव नापरः', इत्युक्तिमनुसृत्य वस्तुतः (स्वरूपतः) ब्रह्मैव । ब्रह्म च शुद्ध-बुद्ध-मुक्तस्वभावम् । अतो जीवस्य मोक्ष-

1. सांख्यकारिका १ ।
2. पर एवात्मा देहेन्द्रियमनोबुद्धयुपाधिभिः शरीरः ।
3. ब्र० सू० शां० भा० १।१।६ ।

विषयकविचारस्य किमौचित्यमिति जिज्ञासायान्तु इदमेवास्माभिरवधार्यते यज्जीवस्यैव सत्ता यदा आविद्यिकी व्यावहारिकी च तदा जीवमुक्तेरपि विचार आविद्यिको व्यावहारिकश्च न तु पारमार्थिकः। संक्षेपतः, यदा जीवस्य स्वभावतो मुक्तस्वरूपत्वात् बन्धनमेव निर्मूलम् तदा मुक्तिरपि कल्पितैव। एतदेव प्रतिपादितम् मानसोल्लासकृता सुरेश्वराचार्येणापि—

बन्धमोक्षोपदेशादिव्यवहारोऽपि मायया

इत्यञ्च यथा असत्यपि सर्पे भ्रान्तिकारणात् रज्जौ सर्पभानात् भयादिकस्य बन्धनमनुभूयते तथैव मुक्तस्वरूपेणापि जीवेन अविद्याकारणात् बन्धनमनुभूयते। अतो बन्धनमेव यदाऽविद्यिकम् तदा मोक्षोऽपिकथन्नाविद्यिकः स्यात्। इदानीम् वयम् मुक्तिविषयकं विचारं प्रस्तुमः।

भारतीयदार्शनिकैर्मोक्षस्य विचारो वैविध्येन वर्णितः। न्यायदर्शनस्याचार्यैर्दुःखानामात्यन्तिकीनिवृत्तिरेव मोक्ष इत्यवधारितम्। सांख्यदर्शने तु प्रकृतिपुरुषयोः सम्बन्धस्थापनमेव बन्धनम् तयोः सम्बन्धबन्धस्य त्याग एव च मोक्षः। योगदर्शने तु विवेकजे ज्ञाने सति असति वा बुद्धिसत्त्वपुरुषयोर्यत् शुद्धिसाम्य तदेव कैवल्यमुक्तम्। मीमांसादर्शने च प्रपञ्चसम्बन्धस्य विलय एव मोक्षः। अद्वैतवेदान्ते तु अविद्यानिवृत्तिरेव मुक्तिः। एतन्मतानुसारन्तु जीवस्य यदाऽविद्यानिवृत्तिः सञ्जायते तदा स नितान्तनिर्मलस्वान्तः आत्मनः ब्रह्मणो वा साक्षात्कारं करोति। एषैवावस्था आत्मबोधस्य, ब्रह्मज्ञानस्य, स्वरूपज्ञानस्य, आत्मसाक्षात्कारस्य परमात्मसाक्षात्कारस्य वाऽवस्थोच्यते।

अविद्यानिवृत्तौ सत्यां जीवः 'ब्रह्मविद् ब्रह्मैव भवति' इति श्रुतिवाक्यानुसारम् ब्रह्मरूपतामेवाधिगच्छति। मुक्तावस्थायां जीवस्य ब्रह्मस्वरूपत्वात् मोक्षोऽपि पारमार्थिकः, कूटस्थो नित्यो व्योमवत् सर्वव्यापी, सर्वविकाररहितः, नित्यतृप्तः स्वप्रकाशस्वभावश्च वर्तते। मुक्तावस्थायामविद्योपाधिनाशे सति जीवस्य सुखदुःखादिधर्मा विनश्यन्ति। मुक्तश्च जीवो ब्रह्मस्वरूपत्वप्राप्तिकारणात् ब्रह्मणश्च आनन्दस्वरूपत्वात् आनन्दस्वरूपतामेव प्राप्नोति।

अतोऽद्वैतिनाम् मुक्तिर्नैयायिकाना शुष्कमुक्तेर्भिन्ना सच्चित्स्वरूपत्वाच्च बौद्धानां शून्याधारितनिर्वाणतोऽपि विलक्षणा मन्तव्या। अत्रैवेदमपि ऊह्यम् यन्मुक्तपुरुषस्य कृते जगतः सत्ता न नश्यति अपि तु मुक्तस्य द्वैतदृष्टिरेव विनश्यति—'ज्ञाते द्वैतं न विद्यते।' अविद्याभिमानरहिता मुक्ताः पुरुषा नाऽप्रियघटनया शोकाकुला जायन्ते न वा प्रियवृत्तेन हृष्टाः। मुक्तस्तु जीवोनिर्लिप्तत्वात् लौकिकान् विषयान् पश्यन्नपि न पश्यति। तदेवोक्तमद्वैतम् प्रतिपादयता श्रीशङ्कराचार्येण—

सुषुप्तवज्जाग्रति यो न पश्यति द्वयं च पश्यन्नपि चाद्वयत्वतः ।
तथा चकुर्वन्नपि निष्क्रियश्चयः स आत्मविन्नान्य इतीह निश्चयः ।

अत्रायमाशयो वैशिष्ट्येनोल्लेखनीयो यत् मुक्तः पुरुषः सांसारिकाननेकान् विषयान् पश्यन्, शृण्वन् अपि च वासनानिर्लिप्ततया न पश्यति न वा शृणोति । नहि किमपि विषयवस्तु अवलोक्य मुक्तस्य हृदि हर्षोऽनुभूयते न वा प्रसादः । तदेव श्रुतिप्रतिपादितम्—

"स चक्षुरचक्षुरिव सकर्णोऽकर्ण इव तदेजति तन्नैजति ॥"

मुक्तो जीवः कर्मकृत् ? अकर्मकृत् ? अशुभकर्मकृद् ? वेति जिज्ञासायान्तु इदमेवाद्वैतवेदान्तिकमुत्तरं यन्मुक्तेन मानवेन सहजरूपेण शुभकर्मणामेव सम्पादनं विधीयते यद्वा शुभाशुभकर्माणि प्रति तेन औदासीन्यमनुभूयते । एतदेव वेदान्तसारकृता सदानन्देनापि प्रतिपादितम्—

तस्य ज्ञानात् पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति ।

अद्वैतवेदान्तशास्त्रे मुक्तानां ब्रह्मलोकगमनं स्वर्गलोकगमनम् वाऽनौचित्यसिद्धम् । परब्रह्मविषये गन्तृत्वस्य गन्तव्यत्वस्य गतेर्वा कल्पना न हि समीचीना यद् ब्रह्म तु सर्वगत प्रत्यगात्मा च वर्तते । यदा मुक्तो जीवः ब्रह्मस्वरूप एव भवति तदा तस्य कुत्रापि गमनं कथं सङ्गतमिति न जानीमः । यदा कूटस्थमचलञ्च ब्रह्मैवाद्वैतं केवलञ्च सत्यं तदा तस्य कुत्रापि गमनं तत् प्रति वा कस्यापि गमनकल्पनं निराधारमेव वक्तव्यम् ।

## जीवन्मुक्तिर्विदेहमुक्तिश्च

मुक्तावस्थायां जीवस्य ब्रह्मस्वरूपत्वात् मुक्तेरेकरूपता स्वतःसिद्धा परं तत्रापि स्थितिभेदात् जीवन्मुक्तिर्विदेहमुक्तिरिति भेदद्वय कल्प्यते । मुक्तेरस्य भेदस्य आश्रयो ऽद्वैतिनां कर्मसिद्धान्तः । प्रारब्धसञ्चित-सञ्चीयमानकर्मसु प्रारब्धकर्मणः, जातेऽपि तत्त्वज्ञाने क्षीणत्वात् तत्फलभोगार्थं मुक्तेनापि जीवेन तत्फलभोगं यावत्शरीरं धार्यत एव । इयमेवावस्था जीवन्मुक्त्यवस्थोच्यते । कुम्भकारचक्रदृष्टान्तेनाय सिद्धान्तोऽद्वैतवादिभिः सम्यग्व्याख्यातः । सकृच्चालितमपि कुम्भकारचक्रं यथा वेगस्य समाप्ति यावत् चलत्येव एवमेव मुक्तपुरुषस्यापि जीवनचक्रं प्रवृत्तफलवतां प्रारब्धकर्मणां भोगकारणात् नोपशाम्यति शरीरञ्च धारयत्येव मुक्तः पुरुष इत्याशयः । अयमेव सिद्धान्तः सांख्याचार्येण कपिलेनापि व्याख्यातः । अतम् एव मुक्तः जीवन्मुक्त इत्युच्यते । यदा चास्य जीवन्मुक्तस्य प्रारब्धकर्मणां भोगानन्तरं शरीरपातः सञ्जायते तदा

देहपातकारणात् जीवन्मुक्त एव विदेहमुक्त इत्युच्यते। अतः प्रारब्धकर्मभोगस्तत्समाप्तिश्च मुक्तेरुक्तभेदद्वयस्य मूलम्।

अत्र—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"

इत्यनेन सञ्चितसञ्चीयमानकर्मणां क्षय एव प्रतिपाद्यते न तु प्रारब्धकर्मणाम्।

आधुनिकविचारशालिनो बहवः समालोचका अद्वैतवेदान्तस्य मुक्तिविचारधारां पलायनवादस्य पोषिकाम् व्यक्तिवादस्य च समर्थनकर्त्रीम् मन्यन्ते। एते आधुनिकाः अद्वैतिनाम् मुक्तिविचारे व्यक्तिवादमाक्षिप्य सामाजिकदृष्ट्याऽस्य सिद्धान्तस्यानुपयोगित्वं च साधयन्ति। परन्नैतत् समुचितम्।

अद्वैतवादिनां कर्मसिद्धान्त एव उपर्युक्ताक्षेपाणां सर्वथा निराकरण कर्तुं शक्नोति। अद्वैतवेदान्ते मुमुक्षोश्चित्तशुद्ध्यर्थं यज्ञादिसत्कर्मणां या महत्ता स्वीक्रियते सा मुक्तिसिद्धान्तस्य सामाजिकम् महत्त्वमेव प्रस्थापयति। मुमुक्षुणा सम्पाद्यमानानां सत्कर्मणां प्रभावः समाजे स्वाभाविकः। किमधिकम् मुक्तः (जीवन्मुक्तः) अपि पुरुषः सहजरूपेणैव शुभकर्माणि सम्पादयति। अतोऽप्यधिकन्तु एतत् यत् मुक्तात्मानः लोकश्रेयसे पुनरपि जन्म गृह्णन्ति समाजकल्याणञ्च सम्पादयन्ति। अनया विचारणयाऽद्वैतवेदान्तस्य जीवनदर्शनपक्षोऽपि सर्वथा स्पष्ट एव। अद्वैतवेदान्तमनुसृत्य तु जीवनस्येदमेव दर्शनम् यदद्वैतिना अननुरक्तया एकात्मवाददृष्ट्या च कार्याणि क्रियन्ते, न तु स्वार्थकामनया रागद्वेषभावनया वा। अतो नाऽस्माकमयमाक्षेपोऽपङ्गतो वक्तव्यः यदद्वैतवेदान्ते पलायनवादिताया असामाजिकतायाश्चारोपं साधयन्तो विचक्षणा अद्वैतसिद्धान्तात् पलायिताः सामाजिकैरादर्शैश्चापरिचिता दयनीयाश्च प्रतीयन्ते। अतश्च ऐहिकामुष्मिकश्रेयस्कारिणीयम् मुक्तिविचारधाराऽद्वैतवेदान्तिनामिति सर्वथा निर्णीत एव पन्थाः।

---

१६

# वेदान्ते पुनर्जन्मवादः

पुनर्जन्मवादसिद्धान्तस्य समस्याया यदधुना स्वदेशे विदेशेषु चालोचनं दृश्यते तन्न नवीनमपि तु अस्माकं भारतीयदर्शनसाहित्ये प्राचीनकालादेव पुनर्जन्मवादपर-

लोकवादविषयिका विवेचना सर्वतः सम्प्राप्यते । भारतीयानां कर्मवादसिद्धान्तः पुनर्जन्मवादसिद्धान्तस्यैव पोषको यत् स्वस्वकर्माण्यनुसृत्यैव जीवस्य विभिन्नयोनिषु जन्म जायते ।

वेदान्तदर्शनपरम्परामनुसृत्य पुनर्जन्मसिद्धान्तं विवेचयद्भिरस्माभिरिति त्ववश्यमेव स्वीकरणीयं यत् कूटस्थोऽचलः शाश्वतोऽजश्चात्मा जन्ममरणविरहित एव । एतदेव श्रीमद्भगवद्गीतायां निगदितम्—

न जायते म्रियते वा कदाचित्,
नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणः,
न हन्यते हन्यमाने शरीरे ॥

"यदुत्पादि विनाशि तत्" इति सिद्धान्तानुसारं उत्पन्नस्यैव विनाशः सम्भाव्यते न त्वनुत्पन्नस्य । अनुत्पन्नस्य च जन्मनः प्रश्न एवासमीचीनः । अतो जन्मनो मृत्योश्च विषयः जीव एव नत्वात्मा । एवञ्च पुनर्जन्मादिकथापि जीवस्यैव विषये सङ्गता नत्वात्मनि । जन्ममरणादिविषयः कश्चायं जीव ? इतिजिज्ञासा स्वाभाविकी । अत्र त्विदमेव परिभाषणं सम्यक् समुचितम् यद् वासनावासिता चेतनैव जीवः, जीवस्यस्याधारश्चात्मा । एतदेव योगवासिष्ठकारेणापि प्रतिपादितम्—

'चेतनं वासनातत्त्वं स्वात्मतत्त्वेऽवतिष्ठति' । अयमेव जीवोजन्मनःमृत्योश्च विषयः । किञ्च मृत्योः स्वरूपम् ? इति प्रश्ने त्विदमेव समाधानं यद् विविधप्रकारकासु नाडीषु यदा संकोचो विकासश्च जायते तदा शरीरस्थितस्य प्राणवायोःस्थितिरस्तव्यस्ततां याति । अस्यैवायं परिणामो यदान्तरिकः श्वासः काठिन्येन बहिरागच्छति । बहिर्भूतश्च श्वासः काठिन्येनान्तः प्रविशति । अस्यामेवावस्थायां शरीराद् बहिर्निसृतः प्राणवायुराकाशे व्याप्नोति वासनामयश्च जीवस्तथैवापरं शरीरं गृह्णाति यथा पक्षी प्राचीनवृक्षं परित्यज्य अपरमाश्रयते । श्रीमद्भगवद्गीतायान्तु जीवस्य जन्मग्रहणप्रकारं स्पष्टयन्नुक्तं यद् यथा नरो जीर्णानि वस्त्राणि परित्यज्य नवानि गृह्णाति तथैव देही जीवोऽपि जीर्णानि शरीराणि त्यक्त्वा नवानि गृह्णाति—

वासांसि जीर्णानि यथाविहाय
नवानि गृह्णाति नरोऽपराणि
तथा शरीराणि विहाय जीर्णा—
न्यन्यानि संयाति नवानि देही ॥

परमत्रेयं विचारणा स्वाभाविकी यत् जीव एकं शरीरं परित्यज्य तत्काल-मेवापरं शरीरं गृह्णाति यद्वा किञ्चित्कालानन्तरम्। अत्रास्ति समाधानम् अस्माकं शास्त्राणाम्। तच्चेद यत् पूर्वजन्मकृतकर्मानुसारं शुभाशुभलोकानुपभृज्यैव जीवोऽपर जन्म गृह्णाति। तदेवोक्तं गीतायाम् —

प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः।

ये पुण्यवन्तो जनास्ते स्वर्गादील्लोकान् प्राप्नुवन्ति ये चापुण्यवन्तस्ते नरका-दीन्। ये च पुण्यापुण्यकर्मयुक्ता मध्यमकोटिकाः जनास्ते स्वर्गनरकयोर्द्वयोरपि वासना-मनुभवन्ति। इदन्तु अविस्मर्तव्यं यत् स्वर्गनरकादिकानां भोक्ताऽविद्यावासितो जीव एव।

एवमविद्यावासितो जीवः पुण्यापुण्यलोकानुषित्वा पुण्यकर्मसु क्षीणेषु स्वकर्मा-नुसारं सम्पन्नासम्पन्नगृहेषु जन्म गृह्णाति।

"ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति सिद्धान्तेनापि उपर्युक्तमेव तथ्यं समर्थितं जायते। एते च जीवाः स्वकर्मानुरूपमेव विभिन्नयोन्यन्तर्गतं जन्म गृह्णन्ति।

अविद्यावासितजीवातिरिक्तं तत्त्वज्ञानी जीवन्मुक्तोऽपि प्रारब्धकर्मभोगार्थं जन्मग्रहणं करोत्येव। परं प्रारब्धकर्मभोगानन्तरं जीवन्मुक्तस्य जन्मग्रहणस्यावसरो-ऽनुपपन्न एव। मुक्तस्तु जीवो 'ब्रह्मविद् ब्रह्मैव भवति', 'जीवो ब्रह्मैव नापरः' इति सिद्धान्तानुसारं ब्रह्मस्वरूपतामेव प्राप्नोति। अतस्तस्य जन्मनः प्रसङ्गोऽनुचित एव वक्तव्यः। जन्मनो मूलं कर्मवासना, सा च परब्रह्मणिज्ञाते सति सर्वथैवोच्छिद्यते। यथा निगदितमपि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्तेचाऽस्य कर्माणि तस्मिन् दृष्टे परावरे॥

'भूयो न स आवर्तते न स आवर्तते', 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इत्याद्युक्तयोऽपि ज्ञानिनोऽजन्मतामेव प्रतिपादयन्ति।

———

१६

# वेदान्ते सद्वादः

सत्तत्त्वविषयको राद्धान्तो वेदान्तशास्त्रस्य प्राणभूत एव सिद्धान्तः। औपनिषदमन्तं प्रमाणं मन्यमानैर्गौडपादशङ्कराचार्यप्रभृतिभिर्वेदान्तिभिः सत्तत्त्वमेवाश्रित्य स्वोपज्ञस्य अद्वैतसिद्धान्तस्य प्रतिपादिनाऽसद्वादिनां बौद्धानां निराकृतिरास्तिकदर्शनस्य च प्रतिष्ठाऽकारि। अनेन सद्वादस्य महिमा वेदान्तडिण्डिमप्रचारितस्य द्वैतवादमर्दनकारिणोऽत एव निषेध-क्रिया-प्रमुखस्य सिद्धान्तशिरोमणेरद्वैतस्यापेक्षयाऽप्यधिक इति अकस्मादेव निष्पद्यते। अतो वस्तुतस्तु वेदान्तिनां सद्वाद एव साक्षाद् वैदिकः प्रमुखश्च सिद्धान्तः अद्वैतवादस्तु तस्याङ्गभूत एव वक्तव्यः। अत्रैतदेव प्रमाणं यद् वैदिकवाङ्मये सच्छब्दस्यैव व्यवहारः प्राचुर्येण दृश्यते न त्वद्वैतस्य।

कोऽयं सद्वादो नाम ? यस्मिन् खल्वखिलस्य विश्वस्य कारणता, अध्यासरूपस्य प्रपञ्चस्याधिष्ठानता आस्तिक्यस्य च निधानमास्ते तत्तत्त्व सत् तद्विषयकश्च विचारः सद्वादः। कुतोऽयमिति विषये नाधिकस्य गवेषणस्यापेक्षा यद् 'एकं सद् विप्राः बहुधा वदन्ति' इति ऋग्वेदीयं सत्तत्त्वनिरूपणं सत्तत्त्वस्य प्राचीनमैतिह्यक्रमं निर्दिशति। शतपथादि ब्राह्मणग्रन्थेषु च कारणत्वेन यद् ब्रह्म वर्णितं दृश्यते तदपि सद्रूपमेव। ऋग्वेद एव नासदीयसूक्तेऽपि वर्तमानस्य सतोऽनीकादसतश्च विलक्षणस्य सत्तत्त्वस्य प्रतिपादनं विधाय सतः सूक्ष्मतायाः प्रतिष्ठापना कृतैवेति सुनिर्णीतं सायणादिभिः। ऐतरेयाद्यारण्यकेषु च सच्चिदानन्दरूपः परमात्मा एव जगतः कारणत्वेन निर्धारितः वेदान्तविद्याप्रमाणभूतासु चोपनिषत्सु 'सच्च त्यच्च, इत्यादिकमुक्त्वा सच्चिदानन्दरूपेण च ब्रह्मवर्णनं निष्पाद्य तत्त्वमिदं व्याख्यापितम्। प्रश्नोपनिषदि तु सत्तत्त्वस्य वर्णनं मूर्तस्य सतोऽर्थे (प्र० २/५) विद्यमानस्य च सतोऽर्थे (प्र० २/२) कृतम्। उपनिषत्सारभूतायां गीतायां 'सदसच्चाहमर्जुन' (९/१९) 'नाऽभावो विद्यते सतः' (२/१६), 'सदसत्तत्परं यत' (११/३७), 'सत्तन्नासदुच्यते' (१०/१२)—इत्यत्र सत्शब्दस्य प्रयोगो विद्यमानस्य सत एवार्थे दृश्यते। गीतायामेव 'ॐ तत्सदिति निर्देशः' (१७/२३), 'सदित्येतत् प्रयुज्यते (१७/२६) इत्यनयोः स्थलयोः सत्शब्दस्य प्रयोगो ब्रह्मणोऽर्थे विहितः। अथ च गीतायामेव 'प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते' (१७/२६) इत्यभिधाय माङ्गलिककर्मणोऽर्थेऽपि सत्शब्दः प्रयुक्तः। तत्रैव 'यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते' (गीता—१७/२७) इति प्रतिपाद्य यज्ञादिक्रियाः स्थितेरर्थे सच्छब्दः प्रयुक्तः। 'कर्म चैव तदर्थीयं सदित्येवाभिधीयते' (१७/२७) इत्यत्र च स्पष्टमेव यज्ञादिक-कर्मणोऽर्थे ईश्वरनिमित्तककर्मणश्चार्थे सच्छब्दप्रयोगः प्राप्यते। पुराणेषु च सच्छब्दप्रयोगः क्वचित परमात्मनोऽर्थे, क्वचित् शक्त्यर्थे

क्वचिच्च विद्यमानस्य सतोऽर्थे पौनःपुन्येन दृश्यते। तन्त्रैतरीयहित्ये च शक्त्यर्थे सत्शब्द-प्रयोगोऽवलोक्यते। योगवासिष्ठे च 'आदावन्ते च यन्नित्यं तत् सत्यमिति, प्रतिपाद्य परमार्थसत्तत्त्वं व्याख्यायते। भारतीयवाङ्मयस्य सिंहावलोकनपद्धतिपर्यवेक्षणेनेदं सुस्पष्टमेव यद् दर्शनशास्त्रे धर्मशास्त्रे च विविधार्थपरः सच्छब्दप्रयोगो दृश्यते। इमेऽत्रोल्लिखिताश्च एतेषु विशिष्टाः सच्छब्दप्रयोगाः वक्तुं शक्यन्ते—

१. जगत्कारणस्य सूक्ष्मातिसूक्ष्मस्य परमतत्त्वस्यार्थे सच्छब्दप्रयोगः।
२. विद्यमानस्य सतोऽर्थे सच्छब्दप्रयोगः।
३. ईश्वरार्थे सच्छब्दव्यवहारः।
४. ब्रह्मणोऽर्थे सच्छब्दव्यवहारः।
५. शुभकर्मणोऽर्थे प्रयोगः।
६. आत्मनोऽर्थे सच्छब्दप्रयोगः।
७. यज्ञार्थे सच्छब्दप्रयोगः।
८. सत्यार्थे सच्छब्दप्रयोगः।

एतेषु सर्वेष्वपि सच्छब्दप्रयोगेषु प्रामुख्येन परमतत्त्वार्थवतः सच्छब्दस्य विद्यमानार्थकसच्छब्दस्य चाश्रयं नीत्वा वेदान्तिकः सद्वादः प्रतिष्ठित इति प्रतीयते। परमत्रेदमपि स्वीकरणीयमेव यद् गौडपाद-शंकराचार्यप्रभृतिभिश्च वेदान्तिभिन केवलं एकं सदित्याश्रयस्य सदर्थस्य न वा विद्यमानस्य सदर्थस्यैव वाऽऽधारमाश्रित्य सत्तत्त्वविषयकस्याद्वैतमूलस्य सद्वादस्य प्रतिष्ठापना कृताऽपि तु कस्यचिद् विलक्षणस्यैवेति वक्ष्यामो वयम्। पूर्वं गौडपादमेव नीयताम्। आचार्येण गौडपादेन 'सतो हि मायया जन्म युज्यते न तु तत्त्वतः' (गौ० का० ३/२७) इत्यत्र सत्तत्त्वमेव जगतः कारणत्वेनोद्घोषितम्। सत्तत्त्वविषयकश्च सिद्धान्त-प्रतिपादयित्राऽऽचार्येण यदा 'सतो हि मायया जन्मेत्युक्त्वा सत्तत्त्वं जगन्मूलमुक्तं तदा विद्यमानस्य जगतोऽस्तित्वं स्वप्नमिव गन्धर्वनगरमिव चोदीरितम्। सद्विषयिका एषा योजना वेदान्ते विलक्षणैव। सत्तत्त्वज्ञानेन आचार्येण ब्रह्मेत्यभिधयैव निर्दिष्टम्। नेयं सर्वथा वेदान्तिनः शङ्कराचार्यस्य सरणिरिति ज्ञास्यतेऽत्रैव शाङ्करसिद्धान्तस्य विवेचनावसरे। वैदिक एव शङ्कराचार्यस्य सिद्धान्त इति सम्यगस्ति सघोषितं वेदान्तवाङ्मये। परमिदमपि वेद्यमेव यत् सत्तत्त्वाश्रितस्याद्वैतवादस्य प्रस्थापकः शङ्कराचार्य एवाङ्गीक्रियते समालोचकैरिति को हेतुः शङ्कराचार्यस्य प्रतिष्ठायाः? मन्मते तु सत्तत्त्वप्रतिपादकत्वमेव शङ्कराचार्यस्य महिम्नो हेतुः वैदिके तु वाङ्मये परमतत्त्वसाक्षात्कारं कृतवतां ऋषीणां प्रसङ्गवशाद् यत्र तत्रागता उपरिनिर्दिष्टा बीजविचारा एव दृश्यन्ते नत्वद्वैतस्य सद्वादस्य वा सिद्धान्त-प्रतिपादनमिति सतोऽसतश्च जगदुत्पत्तिसाधकैर्वैदिकवचनैरिद स्पष्टमेव, यत् क्वचिद् यदि 'एकं सदित्यादिकमुक्त्वा सत् तत्त्वं जगतो मूलकारणत्वेनोच्यते, तदाऽन्यत्र 'असद्'

एव जगत्कारणत्वेन वर्ण्यते ( छा० ६।२।१, तै० उ० २।७.१) अतो वस्तुतस्तु शङ्कराचार्य एव अद्वैतसिद्धान्तप्राणभूतस्य सत्तत्त्वस्य प्रतिष्ठापकोनाऽन्यः कश्चित्। सत्तत्त्वप्रतिष्ठापकन चानेनाचार्येण 'यद्विषया बुद्धिर्न व्यभिचरति तत सत् 'सत्यमिति यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति 'एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः 'सदाख्येन' ब्रह्मणा, 'परमार्थ-सत्य ब्रह्म', 'परमार्थतत्त्वं' ब्रह्म, 'एकमेव हि', 'सवदैकरूपं', 'सत्संस्थानमात्रमिदं सर्वम्', 'सतोऽन्यत्वे अनृतत्वम् इत्यादिक प्रतिपाद्य सत्सम्बन्धिनी विचारदृष्टिः प्रदर्शिता। इदमेवात्र समाख्यानमेपक्ष्यते यच्छङ्कराचार्येण वस्तुतः सत् शब्दस्य प्रयोगः परमार्थसत्यस्य ब्रह्मण एवार्थे निष्पादितः। अत एवाचार्येण सच्छब्दस्यार्थे सत्यशब्दस्य (शा० भा०, तै० उप० २।१) ब्रह्मशब्दस्य (शा० भा० केनोप० १।५, शा० भा० गीता—२।१७) च प्रयोगो विहितः। अत्रेद कथनमपि नाप्रासङ्गिकं यच्छङ्कराचार्येणार्थद्वयाय ब्रह्मशब्दस्य प्रयोगः कृतः—एकस्तु निर्गुणब्रह्म-प्रतिपादनाय, अपरश्च सगुणब्रह्मण यद्वेश्वराय। तत्र परमार्थसतोऽर्थे निर्गुणब्रह्मण एव व्यवहाराऽभ्युपगन्तव्यः इत्थञ्चेदमपि निष्पन्नमेव यत् शाङ्करसिद्धान्तमनुसृत्य सद्ब्रह्मैव प्राप्तव्यं वस्तु तदेव चैकं सत्यम्। तदुक्तमप्याचार्येण 'ब्रह्मावगतिर्हि पुरुषार्थः।'

यदुक्तम् परमार्थं सद् ब्रह्म ब्रह्मैवैक सत्यमिति चेत्, का स्थितिस्तर्हि लौकिकस्य प्रत्यक्षं दृश्यमानस्य जगतः? किमिदं जगत् सत्? असद् वा? नेदं सद्भवितुमर्हति यन्नेदं शाश्वत नित्यमनन्तादिकञ्च, यत् परिभाषितम्। न चेदमसदेव प्रतीयते यद् व्यवहारेऽस्य जगतोऽस्तित्वं सर्वथैवानुभूयते लौकिकैः। किमिदमुभयम्? तदपि न, यत् किमपि वस्तु सदसदुभय न भवितुमर्हति, यत् परस्परविरोधात्मक सदसद्द्वयम् न चेदं सदसदुभयभिन्नं, यदिदं परमार्थदृष्ट्याऽसदलोकदृष्ट्या च सद् वर्तत एव। तत् किमिदं विचित्रं जगदिति विवेचयन्नाह शङ्करः—तस्मात् प्राग् ब्रह्मात्मताप्रतिबोधा-दुत्पन्नः सर्वो लौकिको वैदिकश्च व्यवहारः।

इयमेवाऽऽशयताऽत्र यद् ब्रह्म ज्ञानात् पूर्वमेव जगतो व्यावहारिकी सत्ता यदज्ञानवशादेव नामरूपात्मकस्य जगतो व्यवहारो दृश्यते न तु सति ज्ञाने, "ज्ञाते द्वैतं न विद्यते" इत्युद्धरणात्। अतो यदि जगतः सत्ता व्यावहारिकी तदाऽज्ञानमूला बुद्ध्याश्रिता च। अस्माच्च शाङ्करवेदान्ते जगत् न तत् सत् यन्नित्यमविकारि सार्व-भौमादिकञ्च। परं यदि जगत् सन्नास्ति तदाऽसत्तु स्यादेव। जगदसदस्ति न वेति निर्णयनाय ज्ञातव्यमेतद् यत्किमसदिति? शङ्कराचार्येण तु 'यद्विषया बुद्धिर्व्यभिचरति तदसदिति निष्पाद्य असद्विषयको विचारः परिभाषितः। एतत् परिभाषणमाश्रित्य तु जगदसद् वक्तुं शक्यत एव, परमार्थबोधे सति जगद्बुद्धिव्यभिचारात्। पारमार्थिक-सतश्चभिन्नत्वादपि जगदसत् सिध्यत्येव यत् सद् यदि स्वयम्भूः शाश्वतमबाधितञ्च

तदा सद्भिन्नत्वाज्जगत् परतन्त्रं, परिवर्तनशीलं, बाधितञ्चात एव शङ्कराचार्येण 'सतोऽन्यत्वे अनृतत्व' मित्युक्त्वाऽपि 'असत्' परिभाषितम् (शा० भा० छा० उ० ७।३।२) विकारत्वाद् दृश्यत्वाच्चापि जगदसदिति निर्णेतुं शक्यते। वेदान्ते दृश्यं जगद्विकारमात्रमेव (दृश्य नाम विकारः—शा० भा० तै० उ० २।७) इति शंकराचार्यवचनात्। विकारश्च तथैवासद् यथा छान्दोग्य श्रुत्यनुसारं मृत्तिके० त्येव सत्यमन्यच्च विकारजातं वाचारम्भणमात्रमेव। अत एव वेदान्तिना 'सर्वो विकारः कारण व्यतिरेकेणानुपलब्धे रस' दिति प्रतिपादितम्। अत्रेदमप्यूह्यं यद् वेदान्ते जगद् विवर्त्तरूपेणैव स्वीक्रियते न तु विकारेण। यच्चोक्तं विद्यारण्येन 'सत्यत्वं बाधराहित्य-मिति तदपि जगदसदित्येव प्रमाणयति, जगतः श्रुत्यनुभवतर्कसिद्धबाधात्। अतो यदि जगदसत्, तदाऽस्य जगतो विषये सदसद्विलक्षणत्वप्रतिपादिकाऽनिर्वचनीयता कथं घटितेति आपन्नम्। तत्त्वेवमेव समाधेयं यदलीकादमतः सतश्च परमार्थादेव जगतो विलक्षणता न तूपर्युक्तादसतः अतो यदि जगन्मिथ्या तदा नालीकत्वादपितु जगद्विषयकबुद्धिव्यभिचारादेव। एवञ्च जगतोऽसत्त्वमेव मिथ्यात्वम्। परं यदि जगद् असत्तदा जगतो विषयेऽनिर्वचनीयतासिद्धान्त स्यापि वैयर्थ्यं स्यादिति कथमयं सदसद्वैलक्षण्य-प्रतिपादिकाया अनिर्वचनीयतायाः दुन्दुभिनादः। तत्तु जगतो विषयेऽलीका सतः परमार्थसतश्च भ्रान्तिर्माभूदिति प्रयोजनादेव प्रतीयते।

शंकराचार्यप्रभृतिभिर्वेदान्तिभिः प्रतिपादितस्य जगन्मिथ्यात्वसिद्धान्तस्य न्यूनत्वमन्विष्यन्तो मधुसूदनसरस्वती प्रभृतयः परवर्तिनोऽद्वैतिनस्तदनुसारिणो दासगुप्तादयश्चालोचकाः द्वैतसिद्ध्यापत्तेर्मिथ्यात्वस्यापि मिथ्यात्वमावश्यकं मन्यन्ते। एषां तु पक्षो यत् वेदान्तप्रतिपादितस्य मिथ्यात्वस्य मिथ्यात्वं न सेत्स्यति चेत् तदा जगतोऽस्तित्वं सेत्स्यति। अतोऽद्वैतसिद्धयर्थं मिथ्यात्वस्यापि मिथ्यात्वमपेक्षितम्, येन जगतोऽसत्यत्वं सिध्येत। तन्न, जगन्मिथ्यात्वस्याज्ञानिनां कृत एवोपयोगित्वात्। येषामज्ञानिनां कृते जागतिकी प्रतीतिर्भवति तेषां कृत एव तन्निराकरणम्। तेषां कृत एव च द्वैतभयं भवितु युज्यते न तु ज्ञानिनां कृते। अथ च यदा परमार्थबोधे सति जगतो मिथ्यात्वं सिद्धयति तदा पूर्वकालिकस्य (अज्ञानदशायाः) नामरूपात्मकस्य तु जगतो मृषात्वमानुषङ्गिकमेव, अतो मिथ्यात्वस्यापि मिथ्यात्वं किं निमित्तमिति वयं न जानीमः। अपरञ्च यथा जगन्मिथ्यात्वप्रतिपादनेन प्रकारान्तरेण जगत्सत्यत्वस्वीकरणाद् द्वैतशंका सम्भवति तथैव मिथ्यात्वस्य मिथ्यात्वप्रतिपादनेनापि द्वैतभयं सम्भवेदित्यपि केषाञ्चिन्मतम्। अतोऽनर्थपरम्परैवैषेति शांकर एव सिद्धान्तः समीचीन इत्यभ्युपगन्तव्यम्।

अत्रेदं निष्कृष्यते यच्छाङ्करवेदान्तरीत्या प्रतिपादितं मिथ्यापि जगत् परमार्थ-

दृशाऽसदपि सद् व्यावहारिकदृष्ट्या सदेव न तु गौडपादादीनामिव स्वप्नमिव गन्धर्व-नगरमिव वाऽसत् । एवञ्च गौडपादशंकराचार्ययोर्जगद्विषये वैचारिको भेदः ।

वेदान्ते सद्विषयकं विवेचनमनुसरद्भिरेकमन्यदपि सत् प्राप्यते पारमार्थिक-व्यावहारिक-सद्भ्यामतिरिक्तम् । तच्च 'मृगतृष्णिकादौ सद्बुद्धिः अनुवर्तमाना' (शा० भा० गीता०—२।१८) 'मृग तृष्णाद्यपेक्षया·······सत्यम्' इत्युक्त्वा शंकराचार्येण व्याख्यातम् । इदमेव वेदान्तस्य प्रातिभासिकं सत् । शुक्तौ रजतस्य भ्रमः, मृगमरीचिकादयो भ्रमाश्च प्रातिभासिकसत्ताया एवोदाहरणानि सन्ति । शुक्तौ यद् रजतं प्रतिभासते न तद् व्यावहारिकं किमुत पारमार्थिकम् । अपरञ्च रजतप्रतिभासनमपि शुक्त्यधिष्ठानमाश्रित्यैव युज्यते नाऽन्यथा । एवमेव मृगतृष्णिकादयोऽपि नहि निरास्पदा भवन्ति, इति शंकराचार्यकथनमनुसृत्य मृगतृष्णिकादीनां कृतेऽधिष्ठानस्यापेक्षाऽनिवार्यतया स्वीकृता तदा व्यावहारिकजगतः कृतेऽधिष्ठानापेक्षा नितान्तमेवावश्यकी । तच्च जगतोऽधिष्ठानं सद् ब्रह्मैव ।

वेदान्तिनां यदधिष्ठानरूपं सद् ब्रह्म तन्नाभावरूपम्, अत एव शंकराचार्येण 'ब्रह्मावसानोऽयं प्रतिषेधः नाऽभावावसान' इति प्रतिपादितम् ।

अतो वेदान्तिभिः पारमार्थिकसद्रूपब्रह्मणि प्रतिपादिते सत्यपि केषाञ्चित् पद्मपुराणादिप्राचीनग्रन्थानाम् दासगुप्ताराहुलसांकृत्यायनादीनाञ्चाधुनिकयुगसमालोचकानां शांकरदर्शने प्रच्छन्नबौद्धस्यारोपो निराधार एव । यन्नाऽद्वैतवेदान्तदर्शने जगद्विज्ञानवादवादिनामिव विज्ञानमात्रमेव न वा शून्यवादिनामिव शून्यमेव । अतश्च दासगुप्तामहोदयानां Brahman was very much like the Shunya of Nagarjuna इति कथनमपि न प्रामाणिकतामावहति । एवमेव च योगवाशिष्ठस्यापि 'यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां वरम् । विज्ञानमात्रं विज्ञानविदां यदमलं पदम्' इति कथनात् सतो ब्रह्मणः शून्येन सह तुलनमपि न समीचीनम् । अत एव शंकराचार्येण सद्ब्रह्मविषये ब्रह्मासदिति कल्पयतां भ्रान्तिरुल्लिखतोक्तमिदं निम्नांकितम्—

"दिग्देशगुणगतिफलभेदशून्यं हि परमार्थं सदद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति" 'दुर्जनरमणीयां वाचं जल्पति सुगतविज्ञानवादसमानोऽयं वेदान्तवाद इत्युट्टङ्कितम् ।

वेदान्तिभिर्यस्य परमार्थस्य सतो ब्रह्मणः प्रतिपादनं कृतम् तत् सत्यं, चिदानन्दघनस्वरूपम्, अनाश्रितम्, ज्ञातृज्ञेयादिभेदरहितम्, अदृश्यम्, अभौतिकम्, शाश्वतमेकरसञ्च । नहि तत्र नानात्वं लोकानाम्, न वा तत्राधिगमो शास्त्रज्ञानाम् । ये तदनुपम रसस्वरूपमनुभवन्ति त एव ज्ञातुम् पारयन्त इति विरमामो वयम्, नाऽयमात्मा प्रवचनेन लभ्य इति कथनादस्माकमसामर्थ्यादिति सुधियः स्वदमेव समालोचयन्तु ।

---

१७

# वेदान्ते वृत्तिनिरूपणम्

वृत्तिविचारो भारतीयवाङ्मयस्य प्राणस्वरूपः सिद्धान्तः। वैयाकरणा, दार्शनिका, आलङ्कारिका, राजनीतिविशारदादयश्च स्वशास्त्ररीत्या वृत्तेर्विवेचनं चक्रुरिति नाऽविदितं तत्तच्छास्त्रविदां शेमुषीजुषाम्। दर्शनशास्त्रे च नैयायिकादीनां वृत्तिविषयको विलक्षण एव नयः। अत्र तु मण्डूकप्लुतिमनाश्रित्य वेदान्तशास्त्रव्याख्यातवृत्ते राद्धान्तस्य निर्णयायैव प्रयस्यते।

वेदान्ते वृत्तेः (अलौकिकवृत्तेः) स्थितिर्मुक्तेः पूर्वा वर्तते। सोपानारोहणन्यायेन वृत्तेरधिगमं विना मुक्तिप्राप्तिरसम्भवैव मन्यते मनीषिभिः। अतो वृत्तिविचारणां विना सकलोऽपि वेदान्तविचारप्रपञ्चो निःसार एव वक्तव्यः। वेदान्ते वृत्तिरिति अन्तःकरणस्य स्थितेरभिधानम्। इयं वृत्तिरन्तःकरण एव जायते, तत्रैव स्थितिं याति तत्रैव च लयम्। संस्कारा वृत्तिं निर्मिमते वृत्तयश्च संस्कारानिति चक्रमनवरतं चलत्येव। अत्रैवेदमप्यूह्यं यदद्वैतवेदान्तसम्प्रदायविद्भिराचार्यैर्यत्रालौकिकी वृत्तिः स्वीकृता तत्रैका लौकिकी वृत्तिरपि प्रतिपादिता। इदमेवाऽस्या वृत्तेर्लौकिकत्वं यल्लौकिकपुस्तकचषकादिविषयाणां विषयतामापाद्येयं तद्रूपतां गृह्णाति। सा चेयं प्रक्रिया यत्तैजसमन्तःकरणमिन्द्रियद्वारेण बहिर्निर्गत्य बाह्यविषयाणामाकारं प्राप्नोति। तदिदमन्तःकरणस्य बाह्यविषयाकारोपादानमेव वृत्तिरिति निगद्यते। एतच्च तथैव यथा तडागोदकं छिद्रान्निर्गत्य कुल्यया च क्षेत्रकेदारान् प्रविश्य केदारानुरूपाकारतां याति।[1] तदित्यं घटते यत् पुस्तकादिपदार्थसाक्षात्कर्तुरन्तःकरणञ्चक्षुरादिद्वारैर्बहिर्निर्गत्य पुस्तकाद्याकारेण परिणमते। अतश्चान्तःकरणस्याय परिणामविशेष एव वृत्तिरित्युच्यते।

संशय-निश्चय-गर्व-स्मरणत्वेन वृत्तेर्भेदचतुष्टयी स्वीकर्तव्या। तत्र संशयस्याधानं संकल्पविकल्पात्मके मनसि, निश्चयस्याध्यवसायशालिन्यां बुद्धौ, गर्वस्याभिमानस्वभावेऽहङ्कारे स्मरणवृत्तेश्चाधानमनुसन्धानात्मके चित्ते स्वभावतयैवालोचयितुं शक्यते। यद्वा एकस्यैवाऽन्तःकरणस्य वृत्तेश्चतुष्टयतामाश्रित्यान्तःकरणस्य चतुष्टयता निरूप्यते शास्त्रकृद्भिरित्यपि नाऽसमीचीनः पक्षः। तत्र स्थाणुर्वा पुरुषो वेति संशयरूपिणी वृत्तिः, इदं पुस्तकं तवैवेति निश्चयरूपिणी, विपश्चिदहमिति गर्वरूपिणी, सोऽयं देवदत्त इति वृत्तिश्च स्मरणरूपिणी व्याख्याता विद्वद्भिः।

---

1. वेदान्तपरिभाषा, १।

किं नामवृत्तेर्महत्त्वम्? का चाऽस्योपयोगिता? इति स्वभावतयैव जिज्ञास्यम्। तत्र लौकिक-वृत्तेस्त्रिविधं महत्त्वं प्रदर्शितं शास्त्रे, तच्चेत्थम्:—

१. 'विवरणकृता प्रकाशात्मना वृत्तिहेतोरेव जीवस्य विविधविषयकज्ञातृत्वं साधितं यज्जीवोऽन्तःकरणस्य वृत्तिमारुह्यैव विषयैः सह सम्बद्धो जायते ज्ञातृत्वादिकञ्चानुभवति। अनया रीत्या वृत्तिं विना जीवचैतन्यस्य कदाचिदपि सम्पर्को भवितुं नार्हति। अतश्चिता सह विषयसम्बन्धं स्थापयितुं वृत्तिर्नितान्तमेवापेक्षिता।

२. अन्तःकरणोपाधिको जीवो वृत्तिद्वारा बहिरागत्य, विषयचैतन्य-ब्रह्म-चैतन्ययोरभेदविधानेन बाह्यं विषयवस्तु प्रकाशयति। एवञ्चेयं वृत्तिर्विषयचैतन्यब्रह्मचैतन्ययोरभेदनिर्मात्री।

३. अविद्याऽऽवृतो जीवो विषयान् प्रकाशयितुमक्षम एव सर्वथा। स च वृत्तिसाहाय्येनैव विषयप्रकाशने समर्थो यद् वृत्तिरेव जीवस्यावरणभङ्गं विधाय तस्मिन् विषयावभासनसामर्थ्यमुत्पादयति। यथा युयुत्सौ वीरे सङ्ग्रामे समायाते भीरुर्भटोऽपसरति यथा च कटसंवेष्टने जाते घटप्रत्यक्षः सम्भवति तथैवाऽविद्याऽऽवरणस्य भङ्गे सति वस्तुबोधः सञ्जायते।

इदानीमलौकिकीं वृत्तिमाश्रित्य किञ्चिदुच्यते। अलौकिकं परमात्मानं विषयीकृत्येयमधितिष्ठत्यत एवेयमलौकिकी। सा 'चाहं ब्रह्मास्मी'ति महावाक्यस्वरूपिणी। यदाऽऽध्यात्मिको गुरुः 'तत्त्वमसि' इति महोपदेशवाक्येनाधिकारिणं शिष्यम् परमात्मतत्त्वं बोधयति, तदा शिष्यो नित्य-शुद्ध-बुद्धमुक्तसत्यादिस्वरूपिणीम् 'अहं ब्रह्मास्मी'त्यखण्डाकाराकारितामनुभूतिमनुभवति। इयमनुभूतिरेव 'अहं ब्रह्माऽस्मि' इत्यलौकिकी वृत्तिर्नाम। यथा लौकिकी वृत्तिर्घटादिकं स्वविषयतां प्रापयति, तथैवेयमहब्रह्मास्मीति वृत्तिरपि ब्रह्मतत्त्वं स्वविषयतामानयति। जडवृत्तिरियं कथं सच्चिदानन्दस्वरूपब्रह्मतत्त्वं स्वविषयतामानयति, इति नहि शङ्कनीयम्, यद् यदाऽन्तःकरणवर्तिन्यामस्यां वृत्तौ ब्रह्मणश्चित्तत्त्वस्य प्रतिबिम्बं पतति, तदेयं चित्तत्त्वयुक्ता वृत्तिरेव प्रत्यगभिन्नचैतन्यस्वरूपब्रह्मणो विषयतामापाद्य चैतन्यस्याज्ञाननिवृत्तिं विधाय चैतन्यस्य ब्रह्मस्वरूपप्राप्तौ स्पष्टमेव साहाय्यमादधाति। अतश्च वृत्तेरस्या विषयता न तु शुद्धब्रह्मणि, अपि तु अज्ञानविशिष्टप्रत्यगभिन्नपरब्रह्मण्येवेति बोध्यम्। अत एव सुबोधिनीकृता नृसिंहसरस्वतिनाऽपि सुबोधितम्—

"सा चिद्वृत्तिर्न शुद्धब्रह्मस्वरूपिणी, किन्त्वज्ञान-विशिष्टप्रत्यगभिन्नपरब्रह्म-विषयिणी।"[1]

---

1. सुबोधिनी, पृ० ३९।

उपर्युक्तप्रक्रिययाऽज्ञाननिवृत्तिं विधाय परमात्मानञ्च प्रकाश्य क्वेदं वृत्ति-र्गच्छति काचाऽस्या गतिर्भवतीति जिज्ञासा दृष्टान्तद्वयेन शाम्यतीति मन्ये। तदित्थं यदग्निर्यथा काष्ठेन्धनं सन्दह्य स्वयमेव शाम्यति यथा चोदरस्थदूषितजलस्य शान्त्य-र्थम् पीतमुष्णोदकं दूषितजलं प्रशाम्य स्वयमपि शाम्यति तथैवाऽज्ञानबाधं विधाय चित्तवृत्तिरपि साकल्येन शान्तिमधिगच्छति। एवञ्च सत्यज्ञानबाधे, शान्ते च वृत्ति-व्यवहारेऽद्वैतस्वरूपं परं ब्रह्ममात्रमेवावशिष्यते, इति वृत्तिव्यापारस्वीकारेणवाद्वैत-सिद्धिनयः समीचीन इति विदुषां मतमेव सुमतम्।

वृत्तेरभावे वृत्तिप्रतिबिम्बितचैतन्याभासस्य स्वरूपविषयेऽपि विमर्शो विधेयः। तत्त यथा दीपप्रभाऽऽदित्यमण्डलमवभासयितुमसमर्था सती आदित्यमण्डलप्रभयाऽभि-भूता जायते, तथैव वृत्त्यभावे तत्प्रतिबिम्बितचैतन्याभासोऽपि परब्रह्मस्वरूपेणैवा-वतिष्ठते। अत्र दर्पणनिदर्शनस्य चरितार्थताऽपि द्रष्टव्या। तच्च यथा दर्पणे भग्ने सति तत्रत्यः प्रतिबिम्बोऽपि नश्यति, तथैव चैतन्याभासाधारभूतवृत्तेरभावे वृत्तिवर्ती चित्प्रतिबिम्बोऽपि न तिष्ठति, आधारं विनाऽऽधेयस्यासिद्धत्वाच्चैतन्याभासस्य ब्रह्म-चैतन्यमात्रतयाऽवशिष्टत्वाच्च।

मोक्ष एव चरमः साध्यश्चेत् काऽपेक्षा तर्हि वृत्तेरङ्गीकरणस्येति नहि कश्चि-त्तर्कः, यदज्ञात-ब्रह्मसाक्षात्कारार्थं वृत्तिव्याप्तिरपेक्ष्यत एव, वृत्तेरज्ञाननिवृत्तिकारक-त्वात्। किमिदं वृत्तिव्याप्यत्वं नाम ? इति यदन्तःकरणवृत्तिरविद्याऽऽवरणनिवृत्ति-निमित्तमज्ञानावच्छिन्नञ्चैतन्यं व्याप्नोतीत्येतद् वृत्तिव्याप्यत्वम्। अतश्च वृत्तेर्व्याप्यत्वम् ब्रह्मणश्च व्यापकत्वम्। परमेतत्तु सर्वथैव निष्पक्षं यद् ब्रह्मतत्त्वस्वरूपफलप्रकाशन-प्रयोजनाय वृत्तेर्व्याप्यत्वमनपेक्षितमेवेति सम्यगेव विवेचितं विद्वद्वरेण्यैर्विद्यारण्यैः :—

फलव्याप्यत्वमेवाऽस्याः शास्त्रकृद्भिर्निवारितम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥[1]

एतामेव विचारपद्धतिमाश्रित्य सदानन्दप्रभृतिभिरनेकैरपि वेदान्तिभि-र्'यन्मनसा न मनुते' (केन० उ० १।५) 'मनसैवाऽनुद्रष्टव्यम्' (बृ० उ० ४।४।१९) इत्यनयोर्विरोधोऽपि समन्वितः। यद् वृत्तेरज्ञाननिवर्तकत्वात् 'मनसैवाऽनुद्रष्टव्यम्' इति विप्रतिपत्तिरहितं ब्रह्मसाक्षात्काररूपफलं प्रति साक्षादहेतुत्वाच्च 'यन्मनसा न मनुते' इति वचने च नहि काचिदसाधुता प्रतिभाति।

लौकिकालौकिकभिदा विमृष्टस्य वृत्तिद्वयस्य समीक्षातुलयाऽपि स्वरूपं तुलयितुं योग्यम्। वृत्तिद्वयमपि अन्तःकरणाधिष्ठितं विषयस्वरूपेणाकारितमिति निर्विवादम्। अज्ञातं घटं पटं वा विषयीकृत्य लौकिकी चेद् वृत्तिर्घटपटाद्याकारतां याति, तदाऽहं

1. पञ्चदशी, ६।९०।

ब्रह्मा' स्मीत्यलौकिकी वृत्तिरपि अखण्डब्रह्माकारत्वं प्राप्नोतीत्यत्र कश्चिच्छङ्कालुर्भवितुमर्हति, अखण्डब्रह्मण आकाराभावाद् वृत्तेश्च तस्मात् तदाकाराकारितत्वाऽनङ्गीकारादिति तन्न, अखण्डब्रह्माकारेण ब्रह्मस्वरूपस्योपात्तत्वात्। यत् प्रागेव सङ्केतितमनयोरयमेव भेदः प्राधान्येन यदेका (लौकिकी वृत्तिः), लौकिकान् पुस्तकचषकादीन् विषयान् विषयीकरोति, वृत्तिश्चापरा (अलौकिकी) परब्रह्ममात्रम्। अपरञ्च लौकिकवृत्तेः कृत्यद्वयमुररीकृत्य मनीषिणोऽस्या लाभमपि लेभिरे। तत् प्रथमतस्तु लौकिकी वृत्तिरियञ्चषकादिकं कमपि विषयं विषयतामापाद्य तद्गताज्ञानं निरस्यति, ततश्च स्वगतचित्तत्वस्याऽऽभासेन जडं चषकादिकं विषयमपि प्रकाशयति, इति द्विविधमस्य करणीयम्। पर नेयं सरणिरलौकिक्या वृत्तेः। यद्यपाऽलौकिकी वृत्तिः परब्रह्मतत्त्वं विषयीकृत्य तद्विषयकमज्ञानं बाधत इति तु सत्यम्, परमिय स्वतःप्रकाशस्वरूपं परब्रह्म प्रकाशयितुमशक्तैव खलु। एतदपि विद्यारण्यैः 'स्वय प्रकाशमानत्वान्नाभास उपयुज्यते'[1] इत्यभिधाय सम्यगेव सम्पादितम्।

वृत्तिरियमलौकिकी निर्विकल्पकसमाधिवर्तिनी न तु सुषुप्तिवर्तिनीति बहुशो वेदान्तविद्याविशारदैर्विवेचितम्। अयमेव निर्विकल्पक-सुषुप्त्योर्भेदोऽवलोकनीयः। पर यद्येवं, तर्हि 'तदानीमेतावीश्वर-प्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवतः।[2] इति कृत्वा सुषुप्तावपि कथं वृत्तेरस्तित्वमुद्घोषितं, कथञ्चेदं फलितम्—सुखमहमस्वाप्समिति। इय विरोधधीः सैनिकविदुषो जैकबमहोदयस्य मनस्यपि उदपादि, यत्तेनाऽऽलोचयतोक्तम्—

"The statement here in text and commentary as the nonexistance of the Vrtti in sound sleep, seems to be in opposition to that in section eight where it is said Isvara and Prajna experience pleasure during sound sleep, Ajnanavrttibhih."[3]

एवञ्च यदि जैकबदृशा दृश्यते, तदा विरोधप्रतीतिस्तु प्रतीयत एव। परं नेयं प्रतीतिर्वास्तविकी यत् सुषुप्तौ तु वृत्तिरज्ञान एव लीयते 'सुखमहमस्वाप्स' मिति सुखञ्चाज्ञानवृत्तिसंस्कारहेतोरेवानुभूयतेऽत एव 'चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवतः।' इत्युट्टङ्कितं सदानन्दैः। निर्विकल्पे तु या चित्तवृत्तिरनुभूयते, सा परमात्मज्ञानानुभवरूपैवेति सुस्पष्ट एवानयोर्विरोधः। तत्र (निर्विकल्पे) साधकस्य चित्तवृत्तेः परमात्मनि एकीभावेन स्थितिरिति वृत्तेरेकाग्रवृत्तिरेव मुक्तेर्भित्तिः स्वीक्रियते मुनिवृत्तिभिर्मुमुक्षुभिः। लोकेऽपि चाञ्चल्यविक्षिप्तचेतसो जनाः संसाराब्धिलोललहरीभिर्लब्धा दोलायमानाश्च दृश्यन्त इति वृत्तिरेव भुक्तिमुक्तिप्रदायिनीति सुधियः समालोचयन्तु।

---

1. पञ्चदशी, ६।९२।
2. सदानन्दः, वेदान्तसारः, (८)।
3. Jacob, G. A. The Vedantasara, p. 158.

# संस्कृतवाङ्मयम् (तत्स्वरूपं महत्त्वञ्च)

'संस्कृतं नाम दैवीवागन्वाख्याता महर्षिभि' रित्येकः पक्षः श्रद्धालूनाम्। परं संस्कृतस्यापरोऽपि व्यावहारिकः पक्षोऽतिशयेन गरीयानिति नातिशयोक्तिः प्रयुज्यते। कदाचिदेव कोऽपि विषयः स्याद् यस्य बीजानि संस्कृतभाषायामुपलब्धे साहित्ये नोपलभ्यन्ते वस्तुतस्तु संस्कृतसाहित्यपरिधौ वैदिकसंस्कृतादिसंस्कृतरूपाण्यपि परिगणितुं शक्यन्ते, परमत्रास्माकं प्रयासो लौकिकसंस्कृतसाहित्यस्य स्वरूपावबोधस्य तन्महत्त्वावलोकनस्य चास्ति।

संस्कृतवाङ्मयमतिविस्तृतं ससारञ्च। ग्रीकलैटिनभाषयोरपि साहित्यम् संस्कृतसमं समृद्धं नास्ति। अस्माकं संस्कृतवाङ्मये दर्शनशास्त्रस्य धर्मशास्त्रस्य, साहित्यशास्त्रस्य, राजनीतिशास्त्रस्य, नीतिशास्त्रस्य, अर्थशास्त्रस्य, समाजशास्त्रस्य, मनोविज्ञानशास्त्रस्य, भूगर्भशास्त्रस्य, इतिहासस्य, ज्योतिषशास्त्रस्य, विज्ञानस्य, भाषाविज्ञानस्य, सैन्यविज्ञानस्य, व्याकरणशास्त्रस्य, आयुर्वेदशास्त्रस्य, किमधिकम्, परामनोविद्या (Parapsycology) प्रभृतीनाम् बहूनामपिविषयाणाम्, येषां जन्मदातार अमेरिकादिदेशवासिनः आत्मनो मन्यन्ते, प्रचुरम् विवेचनमस्माकमुपनिषदादिग्रन्थेषु स्पष्टमेव दरीदृश्यते।

उपर्युक्तानां दर्शनशास्त्रादिविषयाणामुल्लेखः संस्कृतवाङ्मये कुत्र वर्तत इति जिज्ञासा नान्वेषणमर्हति। अस्मिन् विषयेऽत्र पार्थक्येन विचारचर्चा औचितीमेवावहति।

## संस्कृतवाङ्मये दर्शनशास्त्रम्—

संस्कृतवाङ्मये दर्शनशास्त्रस्य प्राधान्यम्। आध्यात्मिकं विवेचनन्तु संस्कृतसाहित्यस्य प्राण एव। उपनिषत्साहित्यादारभ्याद्यावधि दर्शनशास्त्रस्यासंख्याः ग्रन्थाः समुपलभ्यन्ते। किमधिकम्, वेदान्त–सांख्ययोग-न्यायवैशेषिक–पूर्वमीमांसा–जैन–बौद्ध–चार्वाकादि दर्शनपद्धतीनाम् विपुलं साहित्य संस्कृतभाषायामवलोक्यते। स्वकीयोक्तिपुष्टये उपनिषदादिकानाम् ग्रन्थानाम् सङ्केतः प्रबन्धकलेवरमात्रवर्द्धकत्वादनावश्यक एव स्वीकरणीयः। संस्कृतवाङ्मये समुपलब्धं दार्शनिकं विवेचनन्न केवलं भारतीयेभ्य एव रोचते, अपितु एतत् इङ्गलैण्ड–फ्रांस–जर्मनादिदेशानाम् दार्शनिकानामपि मनांसि मोहयति। एतद्विषयकमहत्त्वप्रदर्शिका विवक्षा अत्रैव किञ्चिदवसरमपेक्षते।

## संस्कृतवाङ्मये धर्मशास्त्रम्—

भारतीयधर्मदर्शनयोरेतद्वैशिष्ट्यम् यदनयोः समन्वयोऽत्यावश्यकः। परमद्वयोः पृथक् सङ्केतो वैज्ञानिकाध्ययनविचारेणैव क्रियते। वस्तुतस्तु द्वावपि एकैकस्य

पूरकावेव । वाल्मीकिरामायण–महाभारतादयोऽस्माकम् सहस्राधिकाः धर्मग्रन्था सन्ति, येषु लौकिकपारलौकिकयोर्धर्मयोः नैपुण्येन सम्पादितम् विवेचनमुपलभ्यते । काणेप्रभृतिभिर्बहुभिः समालोचकैः धर्मशास्त्रस्यैतिह्यमपि आङ्गलभाषायां लिखितमस्ति । सर्वेषामपि धर्मग्रन्थानामुल्लेखोऽत्र न सम्भवो नाप्यावश्यकः ।

## संस्कृतवाङ्मये साहित्यशास्त्रम्—

संस्कृतसाहित्येनास्माकं पारिभाषिकं तात्पर्यम् । यदनुरूपं साहित्यशास्त्रेण रसालङ्कारादिविवेचनसंबन्धितस्यसाहित्यस्याशयो गृह्यते । एतद् विषयोपस्थापकाः ग्रन्था एव लक्षणग्रन्थाः कथ्यन्ते । साहित्यदर्पणः, रसगङ्गाधरः, ध्वन्यालोकः, काव्यप्रकाशः, कुवलयानन्दादयश्चसाहित्यशास्त्रस्य ये लक्षणग्रन्थाः सन्ति, तेषु साहित्यशास्त्रस्य मौलिकी प्रतिष्ठा दृश्यते । भारतवर्षस्यान्यभाषापण्डितैरपि संस्कृतसाहित्यलक्षणान्याश्रित्यैव स्वकीयसाहित्यस्य समालोचनम् विहितम् । का कथा विदेशिनाम्, येषामाङ्गलभाषाद्यालोचनासाहित्ये, संस्कृतसाहित्यशास्त्रे सम्यग्विवेचितस्य रससिद्धान्तस्य विश्लेषणमपि न स्पष्टम् । रसस्य ये दशभेदाः संस्कृतसाहित्यशास्त्रे विवेचिता वर्तन्ते तेषामुल्लेखोऽपि आङ्गलादिभाषासाहित्ये सम्यक् नास्ति ।

## संस्कृतवाङ्मये राजनीतिशास्त्रम्—

कौटिल्यस्यार्थशास्त्रं राजनीतिशास्त्रस्य प्रख्यातम् प्रशस्तञ्च ग्रन्थरत्नम् विद्यते । अस्मिन् वर्णिता राजनीतिर्जगत्प्रसिद्धा । मुद्राराक्षसप्रभृतिषु संस्कृतनाटकेष्वपि राजनीतिशास्त्रस्य स्पष्टमुपादेयञ्च विवेचनमुपलभ्यते । पञ्चतन्त्रादिषु ग्रन्थेषु तु राजनीतेः सुस्पष्टं सोदाहरणञ्च चित्रणमतिशयेन स्पष्टमेवेति अखिलेऽपि संसारे प्रख्यातोऽयम् मणिरूपः ग्रन्थः ।

## संस्कृतवाङ्मये नीतिशास्त्रम्—

यथा राजनीतिशास्त्रं तथैव नीतिशास्त्रमपि संस्कृतसाहित्ये सुवर्णितम् वर्तते । भर्तृहरेः नीतिशतकम्, शुक्रनीतिः, विदुरनीतिः, कामन्दकीयनीतिशास्त्रमेते नीतिशास्त्रस्य शताधिकाः ग्रन्थाः सन्ति । न केवलं नीतिग्रन्थेषु अपितु शिशुपालवधादिमहाकाव्येष्वपि नैतिकसिद्धान्तानाम् विशदं विवेचनं वर्तते । पञ्चतन्त्र–हितोपदेशादिष्वपि नीतिशास्त्रीयम् पर्याप्तम् विवेचनं दृश्यते ।

## संस्कृतवाङ्मये अर्थशास्त्रम्—

कौटिलस्यार्थशास्त्रे राजनीतिशास्त्रमिवार्थशास्त्रस्यापि प्रायशः वर्णनम् प्राप्यते । पुराणेष्वपि अर्थशास्त्रसम्बन्धिनी चर्चा प्रायेणायाति । अतः सांस्कृतमर्थशास्त्रमाश्चर्यजनकम् ।,

## संस्कृतवाङ्मये काव्यादिसाहित्यस्यसर्जना—

कलाविषयको विकाशः कस्यापिदेशस्य समुन्नतेरेव प्रमाणम्। काव्यमपि कलैव। भारतीयः काव्यकलास्वरूपोऽपि अतिशयेन महान्। संस्कृतसमुपासकानाम् कालिदास-श्रीहर्ष–माघ–भारविप्रभृतीनां कवीनाम् कृतयो रघुवंश–नैषधीयचरितशिशुपालवध-किरातार्जुनीयाद्याः काव्यसंसारे शिरोऽवतंसायन्ते। कविषु कालिदासेन, तस्यापि च अभिज्ञानशाकुन्तलेन विश्वेऽपूर्वा ख्यातिरुपलब्धा। बाणविरचितः संस्कृतस्योपन्यासः कादम्बरी कस्य चेतो न मोहयति। भवभूतेरुत्तररामचरिते करुणरसस्य यादृशी रस-राजता दृश्यते सा कस्य हृदयन्न व्यामोहयति। शूद्रकविरचिते मृच्छकटिके सामाजिक-जीवनस्य यत् यथार्थमय स्वाभाविकञ्च चित्रणमुपलभ्यते तदतीव लोकरञ्जकम् वर्तते। अम्बिकादत्तव्यासस्योपन्यासे शिवराजविजये च रचयितुर्या रचनाचातुरी दृश्यते साप्यपूर्वैवेति नासमीचीनं किञ्चिदुच्यते। अतएवेदमुच्यते यत् संस्कृतभाषायाम् काव्य-नाटकोपन्यासादिसाहित्यस्य यद्वर्णननैपुण्यमवलोक्यते तदन्यत्र दुर्लभमेव।

## संस्कृतवाङ्मये समाजशास्त्रम्—

केचित् साम्प्रतिकाः समाजशास्त्रमाधुनिकविषयम् मन्यन्ते। परन्नैषा वार्ता। पर्याप्तः समाजशास्त्रीयो विषयः सस्कृतवाङ्मये वर्तते। स्मृतिग्रन्थेषु सामाजिकसम्ब-न्धानाम् संस्थानाञ्च विधिपूर्वकं वर्णनं स्पष्टमेवास्ति।

## संस्कृतवाङ्मये मनोविज्ञानम्—

मनोविज्ञानमाधुनिककालेऽतिरुचिकरो विषयः। केचन समालोचका अस्यापि विकासमाधुनिककालिकमेव मन्यन्ते। नैषा स्थितिः। लङ्कावतारसूत्रादिग्रन्थेषु व्याख्यातो बौद्धानां विज्ञानवादसिद्धान्तः प्राचीनाद्वैताचार्यैः गौडपादाचार्यैः स्वकीयायाम् गौडपादकारिकायाम् सुस्पष्टीकृतः स्वप्नवादसिद्धान्तश्च फ्रायडप्रभृतीनाम् मनोवैज्ञा-निकसिद्धान्तानाम् स्पष्टतया परिचयं ददाति।

## संस्कृतवाङ्मये भूगर्भशास्त्रम्

संस्कृतवाङ्मये भूगर्भविद्याया अपि प्रायशः सङ्केताः प्राप्यन्ते। पौराणिके साहित्ये भूगर्भविद्यासम्बन्धिनी वह्वी सामग्री समवलोक्यते। किमधिकम्, कालिदास-विरचिते मेघदूतेऽपि भूगर्भविद्यापरकम् वर्णनम् सुस्पष्टमेव दृश्यते।

## संस्कृतवाङ्मये ज्योतिषशास्त्रम्

भारतीयं ज्योतिषशास्त्रम् विश्वविख्यातम्। अस्यापि विषयस्य संस्कृतवाङ्मये शताधिकाः ग्रन्थाः सन्ति। एतेऽपि ज्योतिषशास्त्रविषयकाः ग्रन्थाः द्विविधाः—एके

गणितसम्बन्धिनोऽपरे च फलितसम्बन्धिनः। सूर्यसिद्धान्तादयो ग्रन्थाः गणितप्रधानाः ग्रन्था एवञ्च जातकालङ्कारप्रभृतयो ग्रन्थाः फलितप्रधानाः ग्रन्थाः।

## संस्कृतवाङ्मये विज्ञानम्—

आधुनिको वैशिष्ट्येन वैज्ञानिको युगः। अणु परमाण्वादिविषयकमनुसन्धानं यदधुना प्राथमिकताम् प्राप्नोति तस्यापि वर्णनाऽस्माकं न्यायदर्शनादिग्रन्थेषु—स्पष्टमेवावलोकते। केचित् कथयन्तु चेत्—प्रायोगिकविज्ञानस्यास्माकं संस्कृतग्रन्थेष्वभाव, एव, तदाऽस्माकमेतदुत्तरं यदग्निवाणादीनामस्त्रशस्त्राणाम् बहुविधविमानानाञ्च गत्यादिवर्णनं प्राचीनाम् वैज्ञानिकतामेव स्पष्टीकरोति। योद्धम्विज्ञानन्तु महाभारतादिग्रन्थेषु प्राप्यत एव।

## संस्कृतवाङ्मये भाषाविज्ञानम्—

भाषाया उत्पत्तेः विकाशस्य, अर्थपरिवर्त्तनस्य, ध्वनिपरिवर्त्तनस्य, एवञ्च रूपपरिवर्त्तनादीनाम् विषयाणामध्ययनम् भाषाविज्ञानस्य क्षेत्रे समागच्छति। भाषाणान्तुलनात्मकमध्ययनमप्यस्य विषयः। एतद् भाषावैज्ञानिकमध्यध्ययनम् संस्कृतभाषायाम प्राप्यत एव। प्रातिशाख्येषु, निरुक्त, ऐन्द्रसम्प्रदायादिव्याकरणग्रन्थेषु, कात्यायनरचितवार्तिकेषु एवञ्च पतञ्जलिरचितमहाभाष्यादिग्रन्थेषु प्राचीनभाषाविज्ञानस्य स्वरूपमवलोक्यत एव। परमत्रैतदपि वक्तव्यं यत् तात्कालिकम् भाषाविज्ञानम् व्याकरणेन मिश्रितमासीत्।

## सैन्यविज्ञानम्—

सैन्यविज्ञानम् विश्वविद्यालयेषु आधुनिको विषयः। परमस्माकम् महाभारतरामायणादिग्रन्थेषु प्राचीन-सैन्यविज्ञानस्य स्पष्टमेव वर्णनम् प्राप्यते। महाभारतीयचक्रव्यूहरचना प्राचीनसैन्यविज्ञानस्यैवोदाहरणम्। एवमनेकान्यपि तत्र उदाहरणानि प्राप्यन्ते।

## व्याकरणशास्त्रम्—

संस्कृतभाषायामुपलब्धस्य व्याकरणशास्त्रस्य तु कथैव का। समग्रेऽपि विश्वे तादृशम् समृद्धम् व्याकरणम् कस्या अपि भाषायाः नहि दृश्यते यादृश संस्कृतभाषायाविस्तृतमिदम् व्याकरणम्। महाभाष्यकारेण पतञ्जलिनोक्तमस्य विस्तारस्य विषये—

"द्वादशवर्षैर्व्याकरणं श्रूयते"

अष्टाध्याय्यादयो व्याकरणग्रन्था अपि अनेका मूलग्रन्थाः, अपरे च टीकाग्रन्थाः सन्ति। नह्यत्र परिगणनमावश्यकमेषाम्।

## संस्कृतवाङ्मये आयुर्वेद शास्त्रम्—

आयुर्वेदशास्त्रसम्बन्धिनोऽपि ग्रन्थाः संस्कृते न्यूना न सन्ति । माधवनिदानादयो ग्रन्था आयुर्वेदशास्त्रे शताधिकाः सन्ति । शल्यचिकित्सापि संस्कृतायुर्वेदशास्त्रे वर्तत एव । परमयं खेदजनको विषयो यद् भारतीयाः स्वदेशस्य समृद्धमुपयोगिनमायुर्वेद-शास्त्रमनादृत्य पाश्चात्यैः प्रचारितम् चिकित्साशास्त्रमेव बहुमन्यन्ते ।

## संस्कृतवाङ्मये विधिशास्त्रम्—

संस्कृतम् विधिशास्त्रमतिप्राचीनम् प्रतिष्ठितञ्च विद्यते । मनुस्मृत्यादिग्रन्थेषु वयम् विधिशास्त्रस्य सम्यक् समुल्लेखम् प्राप्नुमः । याज्ञवल्क्यस्मृतेः टीका मिताक्षरा तु विधिशास्त्रज्ञानाम् मध्येऽद्यापि अत्युन्नतम् महिमानमादधाति ।

## संस्कृतवाङ्मये इतिहासः—

भारतीयस्येतिहासस्यापि वर्णनं संस्कृते विद्यते । रामायणमहाभारतावस्माक-मितिहासग्रन्थावेव स्तः । तदतिरिक्तमस्माकम् पुराण ग्रन्थेष्वपि प्राचीनेतिहासस्य वर्णना स्पष्टतयाऽवलोक्यते ।

अत्रास्माभिः सङ्केतविधया एतदेव निर्दिष्टम् यत् संस्कृतवाङ्मये साहित्य-राजनीति-नीतिशास्त्रार्थशास्त्र-समाजशास्त्र-मनोविज्ञान-भूगर्भशास्त्र- ज्योतिषशास्त्रादी-नाम् विवेचनम् प्रायशः समुपलभ्यते ।

परमस्य नायमाशयो यत् आधुनिकैः तत्तत्शास्त्रेषु यादृशमनुसन्धानं क्रियते तत् सर्वमुक्तपूर्वम् । अत आधुनिकानामपि गवेषणाकार्यम् सर्वथा स्तुत्यम् ।

## संस्कृतभाषायाः व्यावहारिकता—

यस्याः संस्कृत भाषायाः साहित्यमतिशयेन समृद्धम् सा व्यवहारयोग्यापि वर्तते नवेति जिज्ञासापि स्वाभाविकी । अत्रेदम् निवेदनम्, यदस्याः व्यवहारयोग्यताया उदाहरणानि प्राचीनग्रन्थेषु स्पष्टमेवोपलभ्यन्ते । रामायणमहाभारतकाले निश्चितमेव संस्कृतभाषा साधारणजनानाम् भाषा आसीत । वाल्मीकिरामायणनुसारं हनुमता अशोकवाटिकायाम् सीतया सह संस्कृतभाषायामेव भाषितुम् निश्चितम् । यदुक्तं हनुमता रामायणे—

"वाचं चोद्दाहरिष्यामि मानुषीमिह संस्कृताम् ।
यास्कोऽपि वैदिकसंस्कृतादितराम् संस्कृतभाषामेव"—

भाषामुक्तवान् । पाणिनिनापि संस्कृतभाषैव लोकभाषोक्ता । महाभाष्ये तु एकः सारथिः एकेन वैयाकरणेन सह सूतशब्दस्य व्युत्पत्तिविषये विवादं करोति ।

अनेनैतत् सम्यक् स्पष्टम् भवति यत् संस्कृतमस्माकं देशस्य व्यावहारिकी भाषाऽऽसीत् । परमद्यायम् शोचनीयो विषयः यद् या संस्कृतभाषास्माकं राष्ट्रस्य भाषाऽऽसीत् सा भारतीयानाञ्चेतः सु तत् स्थानं नहि प्राप्नोति यदपेक्षितम् वर्तते । नायम् शासनस्य दोषो, यत् प्रायेण श्रूयते । नहि कापि भाषा केनापि शासनेन मरणम् प्राप्यते न वा जीवनमिति दृढो मे विश्वासः । अस्येदम् स्पष्टम् प्रमाणम्, यद् यवनशासकैराङ्गलशासकैश्च बहुकालं यावत् निरस्कृतापि संस्कृतभाषाऽधुनापि स्वकीयम् महिमानन्न जहाति । शासनेन वृत्तिप्रदानादिकार्येण याङ्कामपि भाषाम् प्रति लोके रुचिरुत्पाद्यते, एतत्तु सत्यमेव भण्यते । कस्तर्हि दोषभाक् संस्कृतसम्बन्धिन्या अव्यावहारिकताया यद्वाऽस्याः मृतभाषापदप्रदानस्य ? वयम् संस्कृतज्ञाएवेति मे उत्तितीर्णा । ये वयम् संस्कृतसंताव्याजेन वृत्यादिकम् प्राप्नुमस्त एवास्या समुन्नतिविषये दत्तचित्ताः न सन्ति । किमधिकम्, अस्मभ्यमेवास्याः व्यवहारो न रोचते । अस्मासु कियन्त एव सन्ति, येऽस्याम् भाषायाम् पत्रव्यवहारं कुर्वन्ति, कक्षायामध्यापयन्ति, सभादिषु चाभिभाष्यन्ति । संस्कृतज्ञैस्तु सहैतादृशोव्यवहारो नितरामपेक्षितएव । अतोस्माकम् संस्कृतज्ञानामयम् प्रथमो दोषः, यद् वयमस्याः व्यवहारन्न कुर्मः । अपरश्चापि दोषोस्माकम् संस्कृतज्ञानामेव । कस्यापि भाषायाः जीवनं तस्याः साहित्यमनुसृत्य तिष्ठति । साहित्यञ्चलोकोपकारकत्वेन लोकस्य वास्तविकी युगप्रधानाञ्च स्थितिम् व्यनक्ति आदर्शपथञ्च स्थापयति । अत इदं वक्तुं युज्यते यद् साहित्यस्य जीवनमभिलषद्भिः साहित्यिकैः युगानुसारमेव साहित्यसर्जना कार्या । येषु विषयेष्वद्य लोकानाम् रुचिर्दृश्यते, ये चोपादेयाः, तेषामेव चिन्तनम् संस्कृतज्ञैः कार्यम् । एतदेव संस्कृतजीवनस्य साधनम् । कैश्चित् संस्कृतज्ञैरुपयुक्तां दृष्टिमाश्रित्य साहित्यन्निर्मीयते इति कृते ते प्रशंसायोग्याः । अन्यच्च संस्कृतसमुन्नत्यै प्राचीनसंस्कृतग्रन्थानाम् समालोचनमपेक्ष्यते । यत्रास्माभिर्भारतीयैः स्वकीयस्य संस्कृतसाहित्यस्यालोचना यत्किञ्चिद्रूपेणैव क्रियते तत्र पाश्चात्यैः सम्पादितस्यालोचनासाहित्यस्य परिगणनमपि न सरलम् । प्रशंसाभाजस्ते पाश्चात्या अस्मिन् विषये ।

अपरञ्चेदं लज्जास्पदम् यद् वयं भारतीयाः स्वकीयस्य संस्कृतसाहित्यस्य मूल्यन्न विचारयामः । संस्कृतसाहित्यस्य महत्वम् विचारयद्भिः पाश्चात्यैः संस्कृतसाहित्यम् जीवनस्य सारत्वेनैव गणितम् । संस्कृत साहित्यसमीक्षकेन जर्मनदेशीयेन शोपेनहरेण विदुषा संस्कृतसाहित्यांशभूतस्य उपनिषत्साहित्यस्य मूल्यं परिगणयन्ता स्पष्टमेवोक्तम्—

"In the whole world there is no study except that of the originals, so beneficial so elevating as that of the Aupnikhat. It has been the solace of my life and it will be the solace of my death."

शोपेनहरस्योपरि निर्दिष्टस्याशंस्यायमेवाशयः, यत् सः विश्वसाहित्ये उपनिषत्साहित्यम् सर्वोपरि महत्त्वमदात् । शोपेनहरप्रभृतयः पाश्चात्यजगति बहवः संस्कृतसाहित्यप्रशंसकाः सन्ति ।

अतएवास्माभिर्भारतीयैर्विविधविषयसंपृक्तस्य संस्कृतसाहित्यस्यमहत्त्वमवधेयम्, संस्कृते व्यवहर्तव्यम्, संस्कृतसाहित्यस्य समालोचनं कर्तव्यम्, संस्कृतसमुन्नत्यै च सर्वथा सर्वदा च प्रयतनीयम् ।



१९

# अस्माकं राष्ट्रभाषा

विचाराणाम् प्रकटीकरणस्य साधनम् भाषा । भाषा-विभाषा-राजभाषादिरूपेण भाषाणाम् बहूनि रूपाणि दृश्यन्ते । अभिव्यक्तिसाधनभूतया भाषया साहित्यिक्यपि भाषा भाषाऽभिधया वक्तुं शक्यते, यथा पर्वतीया भाषा यथा च वनवासिनाम् शवरादीनाम् भाषा । विभाषा नाम प्रान्तीय भाषोपभाषा वा । विभाषा कस्यापि प्रान्तविशेषस्य विशिष्टभाषारूपेणास्ते, यथा वङ्गप्रदेशीयानाम् वङ्गीया भाषा । महाराष्ट्र प्रदेशीयानाम् महाराष्ट्री पंजावप्रान्तीयानाञ्च 'पंजाबी' । येय राज्यभाषा सा राज्यव्यवहारस्य भाषा वर्तते । यथेदानीमपि भारतवर्षे प्राधानयेन आङ्गलभाषैव राज्यभाषात्वेन विराजत इति लज्जास्पदमेवास्माकम् भारतीयानां कृते । केयं राष्ट्रभाषा नाम ? राष्ट्रभाषा न केवलं क्षेत्रविशेषस्य प्रदेशविशेषस्य वा भाषा न वा केवलं राज्यकार्यस्यैव भाषाऽपि तु समग्रस्यापि राष्ट्रस्य भाषा वर्तते । राष्ट्रभाषायै कृतेऽधोलिखितानि वैशिष्ट्यान्यपेक्ष्यन्ते ।

प्रथमम्— सैव भाषा राष्ट्रभाषापदवीम् प्राप्तुमर्हति या राष्ट्रस्याधिकाधिकनागरिकाणाम् भाषा स्यात् ।

द्वितीयम्—सैव भाषा राष्ट्रभाषाया औचित्यमावहति यस्याव्याकरणिकी सम्पत्तिः समृद्धा सुव्यवस्थिता च राजते ।

तृतीयम्— यस्याः भाषायाः विशालं कोशसाहित्यम् वर्तते सैव राष्ट्रभाषाभवितुं योग्या ।

चतुर्थम्— यस्याम् भाषायाम् साहित्यसृष्टिः सम्भाव्यते या च राष्ट्रस्य संस्कृति दर्शनञ्च व्याख्यातुं समर्था सैव राष्ट्रभाषायाः शोभनम्पदम् प्राप्तुमर्हति नाऽन्या ।

इदानीमस्माकं स्वतन्त्रराष्ट्रस्य भारतवर्षस्य राष्ट्रभाषा 'हिन्दी' वर्तते । परं हिन्दीभाषायां राष्ट्रभाषायां सत्यामपि सर्वेऽपि भारतीया एनां राष्ट्रभाषारूपेण स्वीकरणेऽनेकविप्रापत्तीन् प्रदर्शयन्ति । अस्यैवैतत् फलं यदिदानीयावत् हिन्दी भारतवर्षस्य शासनव्यवहारस्य भाषायाः पदेऽनासीनैव । मद्रास–बंगाल–महाराष्ट्रप्रभृतीनाम् प्रान्तानाम् वासिनो जनाः हिन्दीतो वैशिष्ट्येन बिभ्यति । मद्रासादिप्रदेशीयाः हिन्द्यपेक्षयाऽऽङ्गलभाषामधिकम् महत्त्व प्रददति । एते च हिन्दीभाषाया अस्वीकरणे हिन्दीविषयिकीं स्वकीयामज्ञतां कारणरूपेण प्रस्तुवन्ति । परन्नतदुचितम्, यदेतैर्मद्रासादिप्रदेशीयैर्जनैर्विदेशीयानामाङ्गलभाषाया यदि ज्ञानमधिगतन्तदास्वदेशस्यातिप्रधानायाः हिन्दीभाषाया अध्ययनं किं दूरुहन् । अतो येषां केषामपि प्रान्तानां वास्तव्या हिन्दी भाषां ज्ञातुं सारल्येन समर्था इति निर्विवादम् ।

पूर्वं हिन्दी सर्वैरपि भारतीयैर्नागरिकैः राष्ट्रभाषारूपेण राज्यव्यवहारभाषारूपेण च स्वीकर्त्तव्या, इत्यस्माकं पक्षः ।

इदानीम यदा मद्रासादिराज्येषु हिन्दीभाषायाज्ञातारो नोपलभ्यन्ते साधारण्येन तदा राज्यानाम् पारस्परिको व्यवहारः केन्द्रीयशासनस्य च राज्यैः सह व्यवहारप्रक्रिया हिन्दीभाषायां कथ सम्भवेदित्यस्या समस्याया इदं समाधानम् यत् सर्वैरपि अहिन्दीभाषिभिपत्रव्यवहारकाले स्वपत्रस्यानुवादो हिन्दीभाषायामपि प्रेषितव्यः । एतत्कृते प्रत्येकस्मिन्नपि राज्येऽनुवादकानाम् व्यवस्था न कठिना । अत्रैवेदमपि वक्तव्यम् यत् हिन्दी-भाषिगोत्तरप्रदेशेनाऽपि स्वपत्रस्यानुवादस्तत्तत्प्रान्त भाषास्वपिप्रेषितव्यः । एवमेव केन्द्रीयशासनेनापि स्वकीयो पत्रव्यवहार आङ्गलभाषायां न कृत्वा हिन्दी भाषायामेव कर्त्तव्यः पत्राणामनुवादश्च तत्तत्प्रदेशानाम् भाषायामपि प्रेषणीयः । अनेन प्रकारेणाङ्गलभाषाम् विनाऽपि केन्द्रीयशासनस्य राज्यशासनस्य च व्यवहारे कापि बाधा न सम्भविष्यति । परमेषा व्यवस्थाऽपि तावत्कालपर्यन्तमेवास्माभिः स्वीकरणीया यावत्कालपर्यन्तमहिन्दीभाषिभिः प्रान्तैर्हिन्दी भाषायाः ज्ञानन्न सम्पाद्यते । साधारणतया सर्वैरपि हिन्दीभाषायां ज्ञातायां सत्या सर्वोऽपि राजकीयो व्यवहारो हिन्दीभाषायामेव सम्पादनीयः ।

किं संस्कृतमपि राष्ट्रभाषापदे विराजितुं समर्थेत्यपरः प्रश्नः । वस्तुतस्तु संस्कृतम् प्राचीनकालेऽस्माकं राष्ट्रभाषाऽऽसीदेवेति सर्वथा सिद्धम् । संस्कृते राष्ट्रभाषायै अपेक्षितानि वैशिष्ट्यानि साकल्येनोपलभ्यन्ते । परमिदमप्यत्रैव स्वीकार्यं यदिदानीं संस्कृतस्य ज्ञातारो बहवो न सन्ति, यदा च न केवलम् भारतीया एवापितु जर्मनादि-

विदेशीया अपि अस्या सौष्ठवमवलोक्य मुग्धाः सञ्जाता इति को न जानाति। अतश्चेद् हिन्दी सर्वेषां व्यवहारस्य भाषा भविष्यति तदा संस्कृतमपि राष्ट्रभाषा पदे शोभितुं सर्वथा समर्था भविष्यतीत्यस्माकं विश्वासः। दाक्षिणात्यास्तु हिन्द्यपेक्षया संस्कृतमेवराष्ट्रभाषापदेऽलङ्कर्तुमभिलषन्ते।

संस्कृतस्य राष्ट्रभाषापदे स्थापनात् पूर्वं संस्कृतस्यानिवार्याध्ययनं स्नातकोपाधिपरीक्षापर्यन्तमत्यन्तमपेक्ष्यते। एवं सति संस्कृतस्य राष्ट्रभाषापदे शोभनं सर्वथाऽसम्भवं भविष्यतीति निर्विवादम्। भारतीयदर्शनस्य, संस्कृतेश्च संरक्षिकायां संस्कृतभाषायां राष्ट्रभाषायां सत्यां भारतीयानां सुखसम्पत्तेः सर्वथा वृद्धिर्भविष्यतीति न सन्देहास्पदम्। एवञ्च संस्कृतभाषायाः राष्ट्रभाषायाः पदे समासीनायां सत्यां द्विप्रकारको लाभो भविष्यति। एकस्तु संस्कृतस्य समृद्धेन भाषापक्षेण सम्प्राप्तो लाभोऽपरश्चास्याः भाषायाः धार्मिकेन, दार्शनिकेन, सांस्कृतिकेन च पक्षेण सम्प्राप्तो लाभः।

एतद्वयमपि सर्वथा जानीमो यत् संस्कृतस्य भाषासम्बन्धिमाहात्म्यं न केवलमनेकभाषाभाषिभिर्भारतीयैरेव स्वीक्रियत अपितु वैदेशिकैरपि। संस्कृतं विश्वस्यसर्वासामपि भाषाणाम् मूलम् वर्तत इत्यपि पक्षः सङ्गत एव। या चास्याः भाषायाः धार्मिकी, दार्शनिकी सांस्कृतिकी च स्थितिः साऽपि सुस्पष्टैव, यद् भारतीयधर्मस्य प्रतिपादकाः स्मृति-पुराणादयः ग्रन्थाः संस्कृति-दर्शन प्रतिपादकाश्चोपनिषद्ग्रन्थाः, दर्शनसूत्रग्रन्थाः, शङ्कराचार्यप्रभृतीनाम् महापुरुषाणाञ्चाद्वैतवादादिदर्शनपद्धतीनाञ्च व्याख्यातारः ग्रन्था अस्यां संस्कृतभाषायामेकोपलभ्यन्ते। अतः संस्कृते राष्ट्रभाषापदेसमासीने भारतवर्षस्य सांस्कृतिकः, भौतिक आध्यात्मिकश्च विकासोऽवश्यम्भावीति दृढोऽस्माकं विश्वासः।

---

२०

# संस्कृतस्योन्नतेरुपायाः

विश्वस्मिन् विश्वे सर्वेऽपि मानवजातेरभ्युदयं कामयमानाः संस्कृतस्योन्नतिमभिलषन्ते, इति तु सर्वथा सुविदितमेव सर्वेषाम्। संस्कृतस्यायणं लौकिकविषया-

णामधिगमेन सह पारलौकिकमप्यर्थं साधयति, इत्यन्यो वरीयः प्रयोजनीयो लक्ष्यः संस्कृतभाषासमुपासकानाम् । संस्कृतस्य महत्त्वजिगीषया एतदपि सुस्पष्टमेव यत् संस्कृतस्योन्नयनं विना कस्यापि देशस्य समग्रोऽभ्युदयः सर्वथाऽसम्भव एव दृश्यते । संस्कृतस्य महत्तामेवाङ्गीकृत्य वैदेशिकैरपि विद्वद्भिरस्या अनुशीलनम् विधाय एतद्-वर्तिरत्नसारं सङ्गृहीतमिति को न जानाति । मैक्समूलर-शोपेनहर-विल्सन-ग्रिफिथ-कोलब्रुक-डायसनप्रभृतयः वैदेशिकाः संस्कृतसमुपासकाः किन्न प्रमाणरूपा अस्मिन् विषये, ये संस्कृतस्याध्ययनाय सर्वथा तत्परा आसन् भाषाञ्चैनां बहुमन्येरन् । परं दीनाः वयं वराकाः भारतीयाः ये संस्कृतभाषायाः वाङ्मयस्य च महत्त्वं जानन्तोऽपि तस्याः महनीयताञ्च् प्रचारयन्तोऽपि स्वयं तस्या अभ्युत्थानाय न प्रयतामहे । अतोऽस्माकं भारतीसमुपासकानां भारतीयानामेतत् प्रथमं कर्तव्यं यद् वयमस्याः समुन्नयनाय सर्वविधं प्रयासं कुर्याम । क एते उपायाः संस्कृतसमुन्नतेरित्येवाऽत्र प्रस्तूयते ।

पूर्वन्तु संस्कृतभाषायाः विदुषां लेखकानाञ्चेदं विधेयं यत्तैः स्वकीयास्तु रचनास्तु सामयिकीनामेव विचारवल्लरीणाम् योजनाकरणीया । समयानुकूल्यमविचार्य लिखिते साहित्ये केषाञ्चिदेव पाठकनामभिरुचिर्दृश्यते नहि सर्वेषाम् । अतः संस्कृत-साहित्ये रुचिमुत्पादयितुमेतदत्यावश्यकं यत्लेखकः युगवर्त्तिराजनैतिक-सामाजिक सांस्कृतिकविचाराणाञ्च समुल्लेखो लघुकथोपन्यासादिषु सरलसंस्कृते रोचकशैल्यैव कर्तव्यः । अनेनैव साहित्यस्योद्देश्यस्यापि पूर्त्तिः सम्भाव्यते ।

अपरञ्च संस्कृतस्योन्नतिं कामयमानानां संस्कृतज्ञानामिदं महत्कर्तव्यं वर्तते यत्त स्वकीये जीवनव्यवहारे संस्कृतस्योपयोगं अधिकाधिकं कुर्युः । अनेन कार्यद्वयं सेत्स्यति—एकन्तु संस्कृतविदुषां संस्कृतभाषाया अभ्यासः सम्पत्स्यते, द्वितीयञ्च संस्कृतभाषायाः व्यवहारेण इतरेऽपि जनास्अस्याः भाषामस्वन्धिरामणीयकं साहित्यि-कञ्च सौष्ठवमनुमन्यैनां प्रति लालायिता भविष्यन्ति संस्कृतसमुपासकानां तदुन्नयन-मभिलषताञ्चेदमपरं कार्यमस्ति यत्ते संस्कृतप्रचाराय स्वकीयं समयमर्थञ्चैतत्कृते यथाशक्ति अर्थयेयुः । ये खलु संस्कृतस्य जिज्ञासवस्तेषामध्यापनमपि संस्कृतज्ञानां कर्तव्यम् ।

ये भारतीयसंस्कृतिसमुपासकाः धनिनः श्रेष्ठिनस्तेषां संस्कृतस्योन्नत्यै इयमेव महती सेवा यत्ते स्वकीमर्थं संस्कृतविद्यालयेभ्यः, संस्कृतपुस्तकालयेभ्यः, संस्कृतछात्रे-भ्योऽध्यापकेभ्यश्च प्रदेयुः । अधुना विड़लादयः श्रेष्ठिनः संस्कृतस्योन्नतिं कामयमाना एतत्कृते स्वकायमर्थमप्यर्पयन्तीति ते बहुशोधन्यवादार्हाः । कस्यापि भाषायाः साहित्यस्य चोन्नयनाय पत्र-पत्रिकाणां योगदानम् महत् स्वीक्रियते । अतो ये धनिनस्ते पत्रिकादीनां प्रकाशनविषयकमर्थकाठिन्यमपनयेयुरितिनिवेदनमस्थाकम् । अधुना संस्कृतविद्वद्भिः डा० रामजी उपाध्यायमहोदयैः आर्थिकनरौविध्यमनु भवद्भिरपि सागर विश्वविद्या-

लयात् यत् सागरिकानाम्न्याः बहुमूल्यपत्रिकायाः प्रकाशनं सम्पाद्यते, तदतिशयेन प्रशंसनीयम् । एतादृशीनां पत्रिकाणां कृते धनाढ्यैः विद्वद्भिश्च यथानुकूल्यं साहाय्यमवश्यमेव देयम् । इदमिदानीं वैशिष्ट्येनोल्लेखनीयं यत् संस्कृतस्योत्थानमुद्घोषयन्तोऽपि आधुनिकाः शासनाधिकारिणः तत् साहाय्यं न ददति यदपेक्ष्यते । अतः राज्यशासनस्येदमादिमं कर्त्तव्यं वर्तते यत्तेन संस्कृतस्य उत्थानाय अधिकाधिकमार्थिकं साहाय्यं देयम् । नो वयं स्वार्थधिया संस्कृतस्योन्नत्यै राज्यशासनाद् धनमभिलषाम अपितु संस्कृतस्य रक्षणेन भारतीयसंस्कृतेः अपि रक्षा सम्भवतीति तथ्यानुसारं संस्कृतमितरभाषाभ्योऽधिकं सहयोगं प्रोत्साहनञ्चापेक्षते, इत्यत्र न सन्देहस्यावकाशः ।

न केवलं संस्कृतस्याभ्युदयायैवापितु मानवस्य सांस्कृतिकविकासायापि संस्कृतस्यानिवार्यशिक्षणमत्यावश्यकम् । यदाऽस्माकं कृते वैदेशिकानामाङ्गलभाषाया अध्ययनं सुकरं वर्तते तदा स्वकीयाया अति रमणीयायाः संस्कृतभाषाया अध्ययनं किं कठिनम् । राज्येन अधिकारपदान्यपि संस्कृतज्ञेभ्यः प्राथमिकतया देयानीत्यपि नानुचितमाशास्महे । अधुना तु, का वार्त्ता प्राथमिकतायाः, संस्कृतज्ञानां कृते अधिकारपदप्रदानस्य विचारः, अन्येषाम् भाषाविदाम् समकक्षतामनुसृत्यापि नहि क्रियते । अप्रकाशितस्य संस्कृतसाहित्यस्य प्रकाशनमपि संस्कृतस्योन्नत्यै अत्युपादेयं कार्यं वर्त्तते । भारतवर्षस्य धार्मिक-सामाजिक-सांस्कृतिकपरिस्थितीनामेकत्रोपलब्धिः संस्कृतसाहित्य एव सम्भवति । अतोऽप्रकाशितानां संस्कृतग्रन्थानां प्रकाशनमपि संस्कृतसमुपासकानाम् प्रधानं प्रतिपाद्यं वर्त्तते ।

अस्माकीनेयं दृढा धारणा वर्त्तते यदुपर्युक्तोपायानां व्यवहारेण संस्कृतस्याभ्युदयोऽवश्यम्भावी । एतानुपायाननुचिन्त्य प्रयासोऽपि विधीयते संस्कृतस्य श्रद्धालुभिः, परं नायं प्रयासः पर्याप्त इत्युक्त्वा वयमस्या देववाण्याः साकल्येनाभ्युत्थानमभिलषामः ।

———

२१

# वर्तमानशिक्षापद्धतेर्दोषाः परिष्काराश्च

कस्यापि राष्ट्रस्य मानवस्य वा विकासस्य प्रथमं सोपानं शिक्षा । शिक्षाया अभावे तु मानवो न मानवोऽपितु पशुरेव । तदेवोक्तमपि :—

येषां न विद्या न तपो न दानम्
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि-भारभूताः
मनुष्यरूपेण मृगाश्चरन्ति ॥

यदा चाशिक्षिताः मानवाः पशवः एव तदा का कथा राष्ट्रस्य । अशिक्षितनागरिकाणान्तु राष्ट्रं केवलं नाममात्रेणैव राष्ट्रं न तु वास्तुतो राष्ट्रम् । अतीवाश्चर्यास्पदञ्चेदं यदाधुनिकाराष्ट्रनेतारः शिक्षायां मौलिकपरिष्कारानकृत्वैव राष्ट्रस्य विकासं कामयमाना अवलोक्यन्ते । वर्तमाने वैज्ञानिकेयुगे प्राचीना शिक्षापद्धतिः कथ सफलीभवितुं शक्नोति यदद्यतनो जनो जीवनस्य विविधेष्वपि क्षेत्रेषु नवातिनवान् प्रकाशनसाधनानि प्रयुञ्जानो दृश्यते । शिक्षापद्धतौ च परिष्काराभाव एवात्र हेतुर्यदद्य शिक्षासम्वन्धिन्योऽनेकाः समस्याः दरीदृश्यन्ते । आसां समस्यानाञ्च कृते कदाचित् छात्रेषु, कदाचित् अध्यापकेषु कदाचिच्च उपकुलपतिषु दोषारोपण क्रियते । परन्नैषा वार्ता, नायं कस्यापि दोषः, अयं सर्वस्तु वर्तमान-शिक्षापद्धतेरेव दोषः । प्राधान्येन वर्तमानशिक्षापद्धतेरधोलिखिता दोषा वक्तुं शक्यन्ते—

१. प्रथमस्तावत् विद्यार्थिनां विषयचयनसम्वन्धी दोषः । आधुनिकास्तु छात्राः प्रायशो गतानुगतिकपद्धत्यनुसारं विज्ञानम्, जीवविज्ञानम् (Biology) कलादिविषयांश्च स्वाध्ययनस्य विषयत्वेन गृह्णन्ति परं तेषु विषयेषु मौलिकगतेरभावात् साफल्यं नहि प्राप्नुवन्ति ।

२. द्वितीयः पाठ्यक्रमसम्वन्धी दोषः । वर्तमानपाठ्यक्रमे नैतिकशिक्षायाः समुचितं स्थानं न वर्तते । अपरञ्च आधुनिकशिक्षापद्धतिर्वैज्ञानिकी व्यावहारिकी च न वर्तते । आधुनिकास्तु समाजशास्त्रार्थशास्त्रादिविषयाणां छात्राः प्रायशः सैद्धान्तिकरूपेणैव एषां विषयाणामध्ययनं कुर्वन्ति न तु व्यावहारिकरीत्याऽनुशीलयन्ति एतान् विषमान् । अत एव एतादृशेषु विषयेषु छात्राणां परिपूर्ण ज्ञानं न दृश्यते । अन्यच्च अधुना पाठ्यक्रमे ये ग्रन्थाः निर्धार्यन्ते, तेषु वहवोऽपेक्षितस्तरेण हीना एव सन्ति । अस्योस्तु इदमेव स्पष्टं कारणं यदद्यतनाः पाठ्यक्रमाधिकारिणः प्रायशः रुचिचार्येव पुस्तकानां निर्धारणं कुर्वन्ति, न च पुस्तकानां योग्यत्वं विचारयन्ति ।

३. तृतीयस्तु विद्यालयेषु प्रवन्धविषयको दोषः । महानयं दोषः । अधुना तु अनेकेष्वपि विद्यालयेषु प्रवन्धव्यवस्था सुष्ठु न वर्तते । वहुधा प्रवन्धका विद्यालयेषु तेषामेवाध्यापकानां नियुक्तिं कुर्वन्ति ये प्रवन्धकमहोदयस्य समक्षं सदैव करबद्धाः भवन्तस्तेषां गुणगानं कुर्वन्ति प्रवन्धकञ्च इष्टदेवमिवमन्यन्ते । एतेषामध्यापकानामपि प्रमुखं कर्त्तव्यमध्यापनं न भूत्वा प्रवन्धकेष्टदेवसेवनमेव भवति । चरित्रहीनाः लुब्धाश्चैते

अध्यापकाः न केवलं आत्मानमेव पातयन्ति अपितु छात्रैः सह अन्यायं कुर्वन्तः समाजस्य घोरशत्रवः सञ्जायन्ते ।

बहवः प्रबन्धकाः प्रधानाचार्यश्च क्रीडादिधनस्य (Games Fund etc.) कथं दुरुपयोगं कुर्वन्ति, इत्यपि नास्ति रहस्यपूर्णमिदानीं यत् प्रायश एव प्रधानाचार्याः प्रबन्धकाश्च विद्यालयवित्तस्य दुरुपयोगं कुर्वन्तः न्यायालयेन दण्ड्यमानाश्च दृश्यन्ते । अराजकीयविद्यालयानां प्रधानाचार्यास्तु प्रायः प्रबन्धकानां पतिव्रतापत्नीत्वेनैव व्यवहरन्ति । विस्तृता खल्वियं कथा । किमधिकम्, दिनप्रतिदिनशासनेऽपि प्रधानाचार्याः यत् कार्यं कुर्वन्ति तदपि प्रबन्धकादेशानुसारमेव, नाऽन्यथा । वर्तमानशिक्षापद्धतेरयमपि प्रबन्धदोषः यत् अद्य विद्यालयेषु छात्राणां कृते पर्याप्तं सौविध्यन्न प्रदीयते । बहुषु विद्यालयेषु तु सर्वेषां विषयाणां कृते कक्षाव्यवस्था न दृश्यते । छात्राश्च शिशिरर्तावपि छादनरहिते स्थले एव पाठ्यन्ते । प्रायशो विद्यालयेषु पुस्तकालयानामपि व्यवस्था सम्यग् न दृश्यते । पुस्तकालयस्तु कस्यापि विद्यालयस्य प्रमुखमंगम् । यस्मिन् विद्यालये शोभनः पुस्तकालयो न वर्तते तस्मिन् विद्यार्थिनः रिक्तकालांशेषु इतस्ततः चलचित्रभवनादिषु भ्रमयन्ति । अस्मिन् विषये संस्कृतस्य दशा वैशिष्ट्येन उल्लेखनीया । संस्कृतविषयस्यकृते स एव कक्षो विद्यालयेषु निश्चीयते यः सर्वेभ्योऽन्येभ्यः विषयेभ्योऽवशिष्टम् । एवञ्च यदाकदाचित् यदि कक्षः प्राप्यतेऽपि तदा तत्र विद्युद्वीजनादिकस्य व्यवस्था कदाचिदेव दृश्यते । एतादृशी एव स्थितिरस्या सर्वोन्नतायाः संस्कृतभाषायाः, यदेषा सर्वत्र एव दयनीया दृश्यते ।

४. वर्तमानशिक्षापद्धतेश्चतुर्थो दोषः परीक्षाप्रणालीसम्बन्धी । अद्यतनी परीक्षाप्रणाली तु सर्वथैव दोषपूर्णा, यदद्य एके यदि लिपिकरणेन प्रथमाश्रेणीं प्राप्नुवन्ति तदाऽन्ये परीक्षकचरणवन्दनेन, धनदानादिसेवनेन वा साफल्यं लभन्ते । अद्य एतादृशास्तु अल्पा एव सन्ति ये स्वाध्यायर्जितज्ञानेन परीक्षायां श्रेण्यादिसफलतां प्राप्नुवन्ति । अतो वर्तमाना शिक्षाप्रणाली सर्वथैव दोषपूर्णा सिध्यति, यदनया परीक्षार्थिनो योग्यतायाः वास्तविकी परीक्षा न हि कर्तुं शक्यते । आधुनिकपरीक्षाप्रणाल्यां निरीक्षकाणामपि का दुर्गतिर्दृश्यते, इत्यपि सर्वथा ज्ञातम् एव । अद्य तु निरीक्षका यदि परीक्षाभवने परीक्षार्थिनां कृते अनुचितसाधनप्रयोगे बाधमुत्पादयन्ति तदा स्वतोऽनस्य कृत एव अवसरमुत्पादयन्ति मृत्युं च आमन्त्रयन्ति । नाऽस्मिन् विषये उदाहरणानामस्त्यपेक्षा, यदद्य तु एके निरीक्षकाः परीक्षार्थिनां छुरिकाणां विषया जायन्ते तदा एके बहूनां अन्ये च यष्टिमिस्ताडिता अवलोक्यन्ते अपशब्दानान्तु कथैव का । ये निरीक्षकाः परीक्षार्थिनामनुचितसाधनप्रयोगे बाधां कुर्वन्ति तेषां कृते परीक्षार्थिनो यदेष्टमपशब्दानां व्यवहारं कुर्वन्ति अध्यापकाश्च मौनभावेन सर्वं शृण्वन्ति । अतो दयनीयैवाद्य अध्यापकनिरीक्षकाणां दशा । अस्या एव दशाया अयमपि

दुष्परिणामः सञ्जातो यद् अनेकेषु विद्यालयेषु शासनस्य रक्षापुरुषैरपि निरीक्षणकार्यं सम्पाद्यते। एते च पुलिसनिरीक्षका विभागस्यप्रकृत्यनुसारं एकं सिगरेटपाकिटमेव उत्कोचरूपेणाङ्गीकृत्य परीक्षार्थिनां कृते लिपिकरणादिकस्य स्वच्छन्दतां ददति। शिक्षाया एतादृशी स्थितिः सर्वथैव निन्द्या इति विषये न कस्यापि वैमत्यं भवितुं शक्यते।

५. आधुनिकशिक्षापद्धतेरयमपरः पञ्चमो दोषो यदधुना अध्यापकानां विद्यार्थिनाञ्च मध्ये कक्षाया अतिरिक्तं सम्पर्को न हि सञ्जायते। एतदेव कारणं यदद्यतना अध्यापकाश्छात्राणां समस्यानां विषये किमपि वक्तुमवसरं नहि लभन्ते। एवमेव छात्रा अपि स्वकीयं काठिन्यं स्वगुरून् प्रति निवेदयितुं न शक्यन्ते। एतत् छात्राणामनुशासनहीनताया अपि कारणमस्ति। अपेक्षितनिदेशनाभावे अध्ययनभ्रष्टाश्छात्राः यत्र तत्र अनुचितान्येव कर्माणि कुर्वन्ति।

६. शिक्षापद्धतेः षष्ठो दोषः वर्तमानकालिकाध्यापकानां शिक्षणसम्बन्धी। विशेषतया संस्कृताध्यापकाः प्राचीनपद्धत्यैव इदानीमपि अध्यापयन्ति। आधुनिकाश्च विद्यार्थिनः पुरातनप्रणाल्या अध्यापितां संस्कृतभाषां प्रति स्वकीयां अरुचिमेव प्रदर्शयन्ति।

७. आधुनिकशिक्षापद्धतेः सप्तमोऽयं दोषो यत् अद्य तु छात्राणां हितैषिणो वरदानरूपाश्च छात्रसंघा अभिशापरूपा एव सन्ति। अद्य तु छात्रसंघाधिकारिणः प्राधान्येन विद्यार्थिनां कृते सौविध्यं लाभांश्च अचिन्तयित्वा विद्यालयस्य विश्वविद्यालयस्य वा प्रबन्धेऽपि विघ्नान्येव प्रायश उत्पादयन्ति। एभिश्छात्रैः छात्रसंघकोषस्य दुरुपयोगः क्रियते। अन्यच्च एते कदाचित् प्रदर्शनं कुर्वन्ति स्वकीयमुचितमनुचितं वा कार्यं साधयितुं, कदाचित् अनशनं कुर्वन्ति, कदाचित् 'धरना' धारयन्ति, कदाचित् 'घेरावं' कुर्वन्ति कदाचिच्च अधिकारिणां कृत्रिम शवं दाहयन्ति। अतोऽद्यतनास्तु छात्रसंघाः न छात्रहितरक्षका अपितु छात्रहितभक्षका एव विद्यन्ते।

८. भारतवर्षे शिक्षापद्धतेश्चायमष्टमो दोषो यदद्य अनेकेषु विद्यालयेषु विश्वविद्यालयेषु च आङ्गलभाषा एव शिक्षणस्य माध्यमरूपेण शोभते। स्वकीयाया राष्ट्रभाषाया माध्यमेऽसति राष्ट्रभाषां राष्ट्रं च प्रति हीनतायाः भावना एव वृद्धिमेति।

उपर्युक्तेनास्माकं वर्तमानशिक्षाव्यवस्थाया संक्षिप्तेनालोचनेनेदं स्पष्टं यत् कदाचित् विद्यार्थिनां विषयचयनसम्बन्धी, कदाचित् पाठ्यक्रमविषयकः, कदाचित् परीक्षापद्धतिसम्बन्धितः, कदाचित् छात्राध्यापकयोः सम्पर्काभावरूपः, कदाचित् विद्यालयानां प्रबन्धकानां कदाचिच्च छात्रसंघाधिकारिणां दोषो दृश्यते। कथमेतेषां दूषणानां निवारणं स्यादित्यस्माकमत्र विचारणस्य प्रयासः।

प्रथमस्तावद् योऽयं छात्राणां विषयचयनसम्बन्धी दोषस्तद्विषयेऽस्माकमिद वक्तव्यं यत् पूर्वं शासनद्वारा विविधविषयकप्रश्नप्रच्छनेन छात्राणां रुचेर्ज्ञान प्राप्तव्यं तदनन्तरमेव च विभिन्नेषु विषयेषु तेषां प्रवेशस्य व्यवस्था कार्या। अनेन प्रकारेण छात्रा यस्य कस्यापि विषयस्य चयनं कृत्वा बहुशोऽत्रसफलतायादर्शनं नहि करिष्यन्ति। अपरस्तावत् पाठ्यक्रमसम्बन्धी दोषः। मन्मत्यनुसारन्तु प्रथमकक्षात् आरभ्य एम० ए० कक्षापर्यन्तमेव स्तरानुसारं नैतिकशिक्षणमनिवार्यं भाव्यम्। अनेन प्रकारेण छात्राः जीवनस्य नैतिकमूल्यं ज्ञातुं समर्थाः भविष्यन्ति। अनेन च ते जीवने अनुशासनस्य माहात्म्यमपि ज्ञास्यन्ति। अन्यच्च भारतीया शिक्षाप्रणाली इदानीं अपेक्षानुसारं व्यावहारिकी नैव वर्तते। मन्मत्यनुसारन्तु समाजशास्त्रादिविषयाणां व्यावहारिकाध्ययनातिरिक्तं संस्कृतभाषाया अपि व्यावहारिकमध्ययनं सम्भाव्यते। पाठ्यक्रमे संस्कृतभाषायाः व्यवहारस्यकृतेऽपि अनिवार्या व्यवस्था स्यात्। अनेन संस्कृतस्य भाषणादिव्यवहारेण छात्रेषु संस्कृतं प्रति विशिष्टा रुचिः स्वयमेव उत्पत्स्यते। अपरञ्च पाठ्यक्रमे तेषां ग्रन्थानामेव निर्धारणं स्यात् ये वस्तुतो विद्यार्थिनां कृते समुचिताः सन्ति नाऽन्येषां क्षिप्राशिपादिप्रकारैः समर्थितानाम्। असमीचीनग्रन्थानां निर्धारणे तु छात्रान् प्रति महतः शत्रुत्वस्यैव व्यवहारः क्रियते यत् तान् स्तरहीनान् ग्रन्थान् अधीत्य छात्रा असाफल्यमेव प्राप्नुवन्ति।

विद्यालयानां विश्वविद्यालयानां वा प्रबन्धविषयको दोषोऽतिशयेन विचारणीयः। अत्रैतत् नितान्तमावश्यक यत् सर्वेष्वपि राज्येषु शिक्षायाः राष्ट्रियकरणं स्यात्। राजकीयविद्यालयानां प्रबन्धव्यवस्था तत्तद् राज्यैरेव करणीया न तु प्रबन्धकैः। एवञ्च राज्यप्रबन्धकैर्योग्याध्यापकानामेव नियुक्तिः कार्या नाऽन्येषाम्। अन्यच्च छात्राणां कृते विद्यालयेषु सर्वेष्वपि क्षेत्रेषु समुचितं सौविध्यं देयं येन तेषां चित्तं तेषु तेषु क्षेत्रेषु आकृष्टं स्यात्। अनेन छात्रेषु अनुशासनभावना स्वत एव विकासमेष्यति। अद्य तु छात्राः योग्याध्यापकानां पुस्तकालयादिसुविधानाञ्च अभावे यत्र तत्र यथाकथञ्चित् समयमेव यापयन्ति। अतश्छात्राणां कृते सर्वेष्वपि विद्यालयेषु अध्यापकानां, पुस्तकालयानां, क्रीडनमनोरञ्जनादिकस्य च समुचिता व्यवस्था सम्यक् करणीया। संस्कृतभाषायाः कृते च प्रत्येकस्मिन् अपि विद्यालये विशिष्टा व्यवस्था कार्या येन छात्राः संस्कृताध्ययनार्थं प्रोत्साहनं लभेयुः। संस्कृतस्य कृते विशिष्टा व्यवस्था अस्मादपि कारणादुचिता यदेषा खलु भाषा न केवलं जीविकादायिनी एव अपितु भारतीयसंस्कृतेः संस्काराणाञ्चापि पोषणकर्त्री। अतः संस्कृतस्य विशिष्टं योगदानं न केनापि भारतीयमानवेन अनुचितं पक्षपातपूर्णं च वक्तुं शक्यते। किञ्चिदत्रैव विश्वविद्यालयेषु अध्यापकानां नियुक्तिविषयेऽपि वक्तव्यम्। विश्वविद्यालयेषु यादृशोऽध्यापकानां नियुक्तिप्रकार इदानीं दृश्यते सोऽपि असमीचीन एव। पञ्चदश-विंशति मिनटेषु कस्यापि

योग्यताया निर्णयोऽसम्भव एव । अत्रविषये तु अयमेव प्रकार उचितः यत् साक्षात्कारा द्विमासपूर्वं त्रिमासपूर्वंवा प्रत्याशिनां ग्रन्थाः शोधपत्राणि वा विशेषज्ञानां समीपे प्रेषितव्यानि येन नियुक्तिसंमित्याः विशेषसदस्याः प्रत्याशिनां ग्रन्थानवेक्ष्य योग्याध्यापकानां निर्णयं कर्तुं समर्थाः स्युः । साम्प्रतं तु नियुक्तिविषये प्रायशः कूटनीतिरेव प्रमाणम् । अध्यापनमद्य गौणमेव दृश्यते । एवञ्चाद्यतना अध्यापकाः प्रायशः कूटनीतिव्यवहारमेव प्रथमं कर्त्तव्यं मन्यन्ते न तु अध्ययनाध्यापनादिकं, इति नातिशयोक्तिर्मन्तव्या । अस्यैवायं परिणामः प्रायशो दृश्यते यदद्य विश्वविद्यालयाः शनैः शनैः कूटराजनीतिगृहपदवीमेव प्राप्नुवन्ति ।

येयं दृष्ट्वा निरीक्षकाध्यापकानां प्राणघातिनी आधुनिकी शिक्षा प्रणाली तद्-विषये बहवोऽपि प्रस्तावाः प्रस्तूयन्ते । केचित् कथयन्ति यत् परीक्षार्थिनो यदि सपुस्तकाः परीक्षाभवने आगच्छन्ति तदैतत् अनुचितं न कथनीयम् । एषान्तु इयं कथनं यत् प्रश्न-पत्ररचयितृभिः एतादृशप्रश्ना एव प्रश्नपत्रे देयाः येषां समाधानं पुस्तकेष्वपि साक्षात् नोपलभ्यते एतदतिरिक्तञ्च परीक्षकास्तेभ्योऽङ्कानि न देयुः यैः पुस्तकेभ्यो लिपि कृत्वा उत्तराणि लिख्यन्ते । परमेषा परीक्षणपद्धतिर्नोचिता । यदनया पद्धत्या परीक्षा-र्थिनां स्मरणशक्तेः धारणाशक्तेश्च परीक्षणमसम्भवमेव भविष्यति । अस्माकन्तु इयं योजना यत् त्रिमासानन्तरं विद्यार्थिना परीक्षा कार्या । एवञ्च एकस्मिन् सत्रे जातानां त्रैमासिकीनां परीक्षाणां आधार एव विद्यार्थिनो वार्षिकः परिणामो दातव्यः । आसु परीक्षासु परीक्षार्थी यद्यनुत्तीर्णो भवति तदा तस्मै पुनरपि अवसरो दातव्यः । अनेन प्रकारेण छात्रः कदापि नैराश्यभाजनं नहि भविष्यति । अद्य तु निराशो भूत्वैव परी-क्षार्थी अनुचितसाधनानां प्रयोगं करोति । निरीक्षकश्चेत् अनुचितसाधने बाधमुत्पाद-यति तदा 'मृतः किं न करोति' इत्युक्तेविषयः परीक्षार्थी निरीक्षकं प्रति सर्वथैव दुर्व्यवहारं करोति । एवञ्च यदस्माभिरिदानीमेव प्रतिपादितं यदा छात्राणामध्यापन-व्यवस्था विद्यालयेषु प्रबन्धादिव्यवस्था च श्रेष्ठा भविष्यति तदाऽनुचितसाधनानां प्रयोगस्यापि अवसरः कादाचित्कत्वादेव आगमिष्यति, न तु सर्वदा सर्वत्र च ।

छात्रेषु नैतिकविकास सम्पादयितुं अनुशासनभावनाञ्च वर्धयितुं छात्राध्याप-कानां मध्ये सम्पर्कः अतीवावश्यकः । अध्यापनातिरिक्तमपि अध्यापकानां छात्रैः सह सम्पर्कोऽपेक्ष्यते । अनेन च विधिना छात्राः स्वकीयं विविधविषयकं काठिन्यं स्वगुरून् प्रति निवेदयिष्यन्ति । अध्यापकाश्च स्वकीयममूल्यं सहयोगं छात्रेभ्यो दास्यन्ति । अनेन छात्राणां स्वकीयान् अध्यापकान् प्रति समादरभावः स्वाभाविकः । एवञ्चानुशासन-भावनाऽपि अध्यापकानां सहयोगेन सहजतया एव दूरीभविष्यति ।

ये छात्रसंघा इदानीं राजनीतिसंघाः स्वार्थपूर्तिकर्तृसंघाश्च सञ्जाताः सन्ति तेषां काप्यपेक्षा न वर्तते । अतो ये छात्रसंघाश्छात्रहितैषिणो न सन्ति तेषां स्थगनमेव सर्वथोचितम् ।

अपरञ्चेदं वक्तव्यं यदद्यतनाश्छात्राः प्राचीनकालवत् परिश्रमप्रिया न सन्ति । अतोऽध्यापकैरपि सरलातिसरलपद्धत्याऽध्यापनं कार्यम् । संस्कृतविषये इदं वैशिष्ट्येन वक्तव्यं, यदाधुनिकाश्छात्राः प्राचीनप्रणाल्या शिक्षितां संस्कृतभाषां सरलतयाग्रहीतुं न शक्नुवन्ति । अत आधुनिकैस्तु संस्कृताध्यापकैः संस्कृतस्य शिक्षणं सरलातिसरल-शैल्या कर्तव्यम् ।

एतत्तु लज्जास्पदमेव यदद्य भारतवर्षे शिक्षणस्य माध्यमस्तु राष्ट्रभाषा हिन्दी न वर्तते । अत्रास्माकं प्रस्तावो यत् सर्वेषामपि विषयाणां शिक्षणं हिन्दी भाषया माध्यमेनैव स्यात् । अत्र हिन्दीभाषाविदुषां लेखकानाञ्चापि इदं महत्कर्तव्यं वर्तते यत्तैः सरलहिन्दीभाषायामेव ग्रन्था लेख्याः । अन्यच्च विविधविषयाणां ग्रन्थानामनुवादोऽपि विद्वद्भिः लेखकैश्च सम्पादनीयः ।

अन्यच्चाद्यतनी शिक्षा अतिशयेन व्ययसाध्या वर्तते । मन्मतन्तु इदं यद् भारतीयशासनेन शिक्षायाः कृते पर्याप्तो व्ययो न क्रियते । अतः अमेरिकादिदेशानामिव भारतवर्षेणाऽपि शिक्षायाः कृते पर्याप्तं धनं देयं येनोच्चतरमध्ययनमपि कर्तुं विद्यार्थिनः काठिन्यं न अनुभवेयुः ।

शिक्षायाः वर्तमानपद्धतौ यदि उपर्युक्ताः परिष्काराः भविष्यन्ति तदैतत् सुनिश्चितं यत् न तत्र छात्राः प्रदर्शनं करिष्यन्ति, न 'धरनाम्' धरिष्यन्ति, न 'घेराव' करिष्यन्ति, नानशनं करिष्यन्ति, सर्वथा च अनुशासनभावनया शोभिताश्छात्राः शिक्षा-संसारं अलंकरिष्यन्ति ।



२२

# छात्राणामनुशासन समस्या

य समस्तस्यापि संसारस्यानुशासकाः ज्ञानचक्षुषः गुरवस्तेषां छात्राणामनुशासनसमस्याऽतीवाश्चर्यास्पदा । परं किमनेनैतत् स्पष्टं यद् वर्तमानायाश्छात्राणामनुशासनहीनताया उत्तरदायित्वभारोगुरुजने वर्तते । नैतत्समीचीनम् । अद्यतनस्तु गुरुशिष्यसम्बन्ध औपचारिक एव । अतश्छात्राणामनुशासनसमस्यायै कृते अध्यापकेषु दोषारोपणन्नोचितम् । यदा तु प्राचीनकाले वास्तविको गुरुशिष्य सम्बन्ध आसीत्-

दात्वन्तेवासिनःगुरुम् परमात्मानमिवामन्यन्त, मातापितृन् देवानिव अपूज्यन्त, धार्मिकान् भगवद्रूपानिव स्वीचक्रुः देवांश्च श्रद्धाभक्तियुतेनचेत साऽर्चयामासुः । परमाधुनिकी दशा सर्वथैव विपरीता । आधुनिकास्तु छात्राः गुरुं तृणमिव मन्यन्ते वृद्धान् मूर्खानिव गणयन्ति, धर्मं कपोलकल्पनाम् इव मत्वानिराकुर्वन्ति, आचारम्पापमिव घृणास्पदम् मन्यन्ते, विद्वांसम् मूर्खमिव निन्दन्ति, दुष्टं सज्जनमिव पूजयन्ति । किमधिकं, स्वकर्त्तव्यमपि भारमेव मत्वा न पालयन्ति । जीवनस्य विविधानां क्षेत्राणाम् परीक्षणेनेद सुनिश्चित यद्च्छात्राणामनुशासनहीनताया सर्वत्रैव दुःखप्रदः परिणामो दृश्यते ।

छात्राणामनुशासनहीनताकारणादेव पाठशाला अपि पशुशाला इव वर्तन्ते, प्रचुराऽपि सम्पत्तिराशिः धूलिधूमरायते, अत्युन्नता अपि प्रासादाः श्मशानत्वं भजन्ते । किं बहुना, यदधुना स्पष्टमेव अनुशासनहीनाश्छात्राः प्रभूतामपि वैभवराशिमल्पकाल एव विनाशम् प्रापयन्ति ।

परं किञ्छात्राणामनुशासनहीनतायाः स्वरूपचित्रणमेवानुशासनसमस्यायाः समाधानम् । नैवम् न सर्वथा छात्रा एवानुशासनहीनतायै कृते सदोषाअपित्वन्येऽपि । मम मते त्वनुशासन हीनतायाः बहून्यपि कारणानि सन्ति यथा—

१. विद्यालयेषु छात्राणां कृते तादृशं सौविध्यन्न दीयते यादृशमपेक्ष्यते । आधुनिकेषु बहुष्वपि विद्यालयेषु अध्यापकानाम् व्यवस्थाऽपि समुचिता नास्ति । यदिकेषुचिद् विद्यालयेषु क्रीडाक्षेत्रापि न सन्ति तर्हि केषुचित् समृद्धाःपुस्तकालया न सन्ति—केषुचिच्च शुल्कमाधिक्येन नीयते । एतदादीनि असौविध्यान्यनुभवन्तश्छात्राः नैराश्यगतित्वादनुशासनहीना जायन्ते ।

२. वर्तमान काले विभिन्नाः राजनैतिकाः सङ्घाश्छात्राणाम् साहाय्येन स्वकीयान् स्वार्थान् साधयन्ति । छात्राणाञ्च शक्तेर्दुरुपयोगं कर्तुं तान् विभिन्नप्रकारानुपद्रवान् कर्तुं प्रेरयन्ति । एते राजनैतिकाः गुरवो जनकल्याण घोषयन्तोऽपि न राष्ट्रहितैषिणो अपितु राष्ट्रघातका एव । केवलं भाषणपाण्डित्य एव कुशलाः राजनैतिकाश्छात्रैरन्यैश्च जनैस्तथैव न श्रोतव्याः न गणनीयाश्च यथा धीमन्त उन्मत्तं न शृण्वन्ति यथा च सन्तोऽसज्जनञ्च न गणयन्ति ।

३. अध्यापकानां राजनीति क्षेत्रे प्रवेशोऽपि छात्राणामनुशासनहीनतायाः निदानम् । अध्यापकश्छात्रस्यादर्शः । अतोऽध्यापकानामनुकरणाच्छात्राअपि राजनीतिक्षेत्रे प्रवेशं कुर्वन्ति । यदा राजनैतिकसङ्घेषु प्रविशन्तोऽध्यापकाएवाध्यापनकर्मण्यकुशलाः दृश्यन्ते तदा का कथाऽपक्वबुद्धीनां छात्राणाम्, येऽध्ययनं गौणमेव मन्यन्ते ।

४. छात्राणामनुशासनहीनताया अपरं कारणं शासनस्य क्रौर्यपूर्णव्यवहारो वर्तते, तत्रापि वैशिष्ट्येन पुलिसविभागस्य कर्मचारिणाम्। पुलिस विभागस्य रक्षापुरुषा अधिकारिणो वा परिस्थितीनामध्ययनमकृत्वैव छात्राणामुपरिदण्डवर्षणम् दम्ववर्षणमश्रुगैसादीनाञ्च प्रयोगङ्कुर्वन्ति। अनेन क्रौर्यपूर्णव्यवहारेण प्रतिवर्षमेवासंख्याश्छात्राः मृत्युम् प्राप्नुवन्ति।

५. विश्वविद्यालयेषु विद्यालयेषु वा पुलिसविभागस्याधिकारिणाम् प्रवेशोऽपि छात्रानुत्तेजयति। उत्तेजिताश्च छात्रा अधिकारिणः स्वकीयान् शत्रुनिव मन्यन्ते। कदाचित् उपकुलपतीनाम् प्रधानाचार्याणाम्वाऽऽज्ञामृतेनैव ते पुलिसाधिकारिणो विश्वविद्यालयेषु विद्यालयेषु वा प्रविशन्ति छात्रानध्यापकांश्चताड़यन्ति, इति कस्यापि देशस्य कृतेऽतीवलज्जास्पदम्।

६. वर्तमानपाठ्यक्रमस्यस्थितिरपि छात्राणामनुशासनहीनताया उत्तरदायिनी। वर्तमानपाठ्यक्रमानुसारं प्रायशश्छात्राणां कृते नैतिकशिक्षणस्याभावे, छात्रा नैतिकमूल्यानामङ्कने नितान्तमसमर्था एव सन्ति।

७ पाश्चात्यसभ्यतायाः संस्कृतेश्चावाञ्छनीयः प्रभावोऽपि वर्तमानकालिकछात्राणामनुशासनहीनतायाः कारण वर्तत। भौतिकदृष्टिप्रधानया पाश्चात्यसंस्कृत्या सभ्यतया च प्रभाविताः भारतीयाश्छात्राः भौतिकसाधनानामधिकाधिकांप्राप्तिमेव जीवनस्योद्देश्यम् मन्यन्ते। अत आध्यात्मिकदृष्टेरभावे भौतिकसमृद्धीनां कृतेप्रतियोगिनांछात्राणामनुशासनहीनता स्वाभाविकी।

८. छात्रैः सह अध्यापकानां सम्पर्काभावोऽपि छात्राणामनुशासनहीनतायाः कारणम् वक्तुं शक्यते। अतः पाठ्यक्रमातिरिक्तं छात्रा अध्यापकानाम् जीवनव्यवहारसम्बन्ध्युपदेशं ग्रहीतुमसमर्था एव भवन्ति।

९. छात्रा अध्ययनमुद्देश्यममत्वाऽन्येषु बहुविधेष्वनपेक्षणीयेषु कार्येषु स्वसमयम् व्यर्थमेव यापयन्तीत्यपि छात्रेष्वनुशासनभावनाया अनुदयस्य कारणम्। छात्रेषु अनुशासनभावस्य उपर्युक्तादीनि बहून्यपिकारणानि भवितुं शक्यन्ते। मन्मते छात्रेष्वनुशासनभावनामुत्पादयितुम् वर्द्धयितुञ्चाधोलिखिता उपायाः भवितुमर्हन्ति—

१. विश्वविद्यालयेषु विद्यालयेषु वा छात्राणाम् कृते अधिकाधिकं सौविध्यम् देयम्, येन छात्राः स्वकर्मणि रुचिम् नयेयुः। तत्रापि पुस्तकालयसुविधा, क्रीड़नादिसुविधा, योग्याध्यापकानां सुविधा च विशेषतयोल्लेखनीया।

२. राजनैतिकाः पुरुषाश्छात्राणामध्ययनकार्येबाधन्नोत्पादयेयुः। एतद्विषये राजनैतिकनेतृणामुपरि प्रतिबन्धोऽपि करणीयः।

३. अध्यापकानां सक्रियराजनीतिप्रवेशे प्रतिबन्धः स्यात् । नायमस्माकमाशयो यदध्यापका राजनीतौ प्रवेशमेव न कुर्युः, ते शिक्षाक्षेत्रे राजनीतिक्षेत्रे वा एकस्मिन्नेव स्वकीयजीवनमर्पयेयुरित्येवास्माकमभिप्रायः । क्षेत्रद्वये कार्यकरणे तु उभयत्राप्यसफलता निश्चितैव । स्वाध्यापनकर्मण्यसफलश्चाध्यापकश्छात्राणामनुशासनहीनताया एव कारणभूतः ।

४. शासनेन, विशेषतया पुलिसविभागेन छात्रैः सह निष्ठुरतापूर्णो व्यवहारो न विधेयः शासनाधिकारिभिः पूर्वं छात्राणां समस्यानामध्ययनम् विधेयन्ततश्च तैः सह यथोचितम् व्यवहर्तव्यम् ।

५. उपकुलपतेः प्रधानाचार्यस्य वाऽऽज्ञाम् विना विश्वविद्यालयेषु विद्यालयेषु च गृहरक्षादिशासनाधिकारिभिः प्रवेशो न विधेयः ।

६. पाठ्यक्रमे नैतिकशिक्षाया अनिवार्या व्यवस्था कार्या । येन छात्राणामुपरि नैतिकमूल्यानाम् प्रभावः सम्भवेत् ।

७. सांस्कृतिक कार्यक्रमाणाम् यथा सम्भवं योजना विधेया । येन छात्रा स्वसंस्कृत्या प्रभाविताः स्युः । भारतीयसंस्कृत्या प्रभावितेषु छात्रेष्वनुशासन भावनाया अवश्यमेव विकासो भविष्यतीतिमे दृढो निश्चयः ।

८. विश्वविद्यालयेषु विद्यालयेषु च एतादृशी व्यवस्था कार्या येनाध्यापक छात्रसम्पर्कस्य व्यवस्था भवेत् । एवम्भूतेसति अध्यापकानाम् चरित्रस्य नैतिक विचाराणाञ्च प्रभावश्छात्राणामुपरिसम्भाव्यते ।

९. अध्यापकानाम् वेतनव्यवस्था सर्वथा संतोषप्रदा भवेत् । अन्यच्चाध्यापकानाङ्कृते सर्वविधं सौविध्यम् दातव्यम् । येन ते स्वधर्ममनसावाचा कर्मणा सलग्नाः भवेयुः । केवलमादर्शविचारै जीवन यापयतामध्यापकानां स्वधर्मपालन न सम्भवम् । छात्रैरध्ययनं स्वकीयम् प्रधानमुद्देश्य मन्तव्यम् । अन्यानि कर्माणि तु छात्राश्छात्रावस्याऽनन्तरमपि कर्तुं शक्ताः भविष्यन्ति परन्त्वध्ययनम् । साधारण्येनाध्ययनन्तु प्रथमावस्थायाम्भवितुं शक्यते । अत एवोक्तम्—

प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥

सम्बन्धिता अधिकारिणः, अध्यापकाः, छात्राः, नागरिकाश्च यदि उपर्युक्तान् उपायान् विचार्य कर्मरताः भविष्यन्ति तदा छात्राणामनुशासनसमस्यायाः समाधानं सुनिश्चितमित्यस्माकम् विश्वासो न मिथ्या ।

---

२३

# भारतीयसंस्कृतेः स्वरूपम्

संस्कृतिः कस्यापि राष्ट्रस्य जीवनदायिनी शक्तिरस्ति। संस्कृतिं विना नहि कस्यापि राष्ट्रस्य प्रतिष्ठा न वा राष्ट्रवासिनां स्वरूपरक्षैव सम्भाव्यते। अत इदं निवेद्यम् यत् संस्कृतिरक्षा प्राणेभ्योऽप्यधिकमहत्वशालिनी स्वीकरणीया। यद्येवन्तर्हि अस्याः स्वरूपचिन्तनमप्यावश्यकम्। विद्वद्भिः संस्कृतिं स्पष्टीकर्तुमेकाधिकाः परिभाषाः प्रदत्ताः सन्ति। तासुकतिपया एवात्र प्रस्तूयन्ते।

१. संस्कृतिविषयस्य पटुविचारकेण भगवतशरणउपाध्यायेन संस्कृतेः स्पष्टीकरणार्थम् लिखितम्—या मानवनिर्मिता न तु प्रकृतिसिद्धा या च मनुष्येणकायिकीनाम् मानसिकीनाञ्चावश्यकतानां पूर्त्यर्थं विकासं प्रापिता, सैव संस्कृतिः।

२. स्वामिना श्रीराघवाचार्येण लिखितम्—संस्कृतिर्मानवस्य जीवनशक्तिः, प्रगतिशीलसाधना, विमलविभूतिः, राष्ट्रियादर्शस्य गौरवमयी मर्यादा स्वतन्त्रतायाः प्रतिष्ठा चास्ति।

३. प्रधानमन्त्रिणा स्वर्गीयेण पण्डितजवाहरलालनेहरूमहोदयेन संस्कृतिं व्यक्तीकुर्वता निगदितम्—

संस्कृतिः किञ्चिदेतादृशं वस्तु यन्मौलिकं अन्ताराष्ट्रियं चास्ति।

४. श्री राजगोपालाचार्येण संस्कृतेरियम् परिभाषाकृता—कस्यापि जातेः अथवा राष्ट्रस्य शिष्टपुरुषेषु विचारस्य वाणीक्रिययोश्च यद् रूपं व्याप्तं वर्तते तदेव संस्कृतिः।

५. श्री भगवतशरणउपाध्यायसमानमेव सुनीतिकुमार चटर्जी महोदयस्यापि संस्कृतिसम्बन्धिनी परिभाषा प्रस्तूयते—

संस्कृतिः—शारीरिक-मानसिकशक्तीनां विकासः अथवा तदुत्पन्ना विशिष्टा काचिदवस्था वर्तते। संस्कृतेः सम्बन्धः मनसा आचार विचारैः, यद्वा रुचीनां शुद्धीकरणेन सार्धं चावलोक्यते।

संस्कृतिसम्बन्धिन्यः याः परिभाषाः प्रस्तुतीकृताः, विदुषां तासुसर्वास्वपि संस्कृतिः किञ्चित् सूक्ष्मतत्वरूपेण गृहीतम् इति निर्विवादम्। कथमस्य संस्कृतितत्वस्य समुत्पत्तिः, इति जिज्ञासायां संस्कारनिर्मितमिदमित्युक्त्वा समाधेयम्। यादृशः संस्कारसम्बन्धितो विकासः तादृश एव सांस्कृतिकः इत्यनेन प्रकारेण संस्कृतितत्त्वं हार्दिकमपि वक्तुं शक्यते। अतएव संस्कारः संस्कृतेर्मूलाधारः।

साम्प्रतन्तु संस्कृतिविषयस्य सूक्ष्मतामविचारयन्तो बहुशः समीक्षकाः सभ्यत्वमपि संस्कृत्यन्तर्गतमेव गणयन्ति । निदर्शनार्थम्, यदि केनापि कोऽपि सुभोजितः सत्कृतश्च बहुभिरुपकरणैस्तदा सत्कारकः संस्कृतोऽवगीयते । परन्नैतत् समुचितम् । अत्रैयं विचारणा यद् भौतिकपदार्थैः आतिथ्यमर्पयति सत्कारके पुरुषे कुत्सितः संस्काराणां प्रभावः सम्भवः स्यादेवञ्च सर्वं सुसम्पन्नमप्यातिथ्यं प्रवञ्चनामयं भवितुमर्हति । प्रायशोऽधुना प्रवञ्चका एनामुपर्युक्तामेवपद्धतिमनुसरन्ति वञ्चयन्ति च साधूनिति नाधिकम् उच्यते । परमनेन नायमाशयोऽनुमेयो यत् वस्तुतः संस्कृतानां जनानां व्यवहारे भौतिकपदार्थानां प्रयोगोऽसमीचीनः । अस्माकन्त्वयमेवाग्रहो यत् संस्कृतिविषये प्राधान्यं संस्काराणामेव गृहीतव्यः । यदि संस्कारेषु शुद्धता वर्तते तदा भौतिकपदार्थानां प्रयोगस्वीकरणे का नो हानिः । अत्रस्त्विदमेव वैशिष्ट्येन ग्राह्यं यत् केवलं भौतिकपदार्थानां व्यवहृतिरेव नहि संस्कृतिसाधिका । परिणामतः बहुभिः पदार्थैःशतिथ्यकर्म कुर्वाणः पुरुषः सभ्य एव वक्तुं युज्यते, न तु संस्कृतः । संस्कृतस्तु कोऽपि पुरुषस्तदानीमेव वक्तुं युज्यते यदा तस्य संस्काराणाम् शुद्धतायाः प्रतिबिम्बो व्यावहारिकेऽपि जगति समनुभूयते । प्रकारान्तरेणैवमप्यूह्यम् यत् भौतिकसाधनसम्पन्ना जनाः सम्यगातिथ्यादिकर्म कुर्वाणा अपि यदि स्वकीयेषु संस्कारेषु शुद्धिं न दधति तदा ते संस्कृतपदं कथमपि नार्हन्ति ।

भारतीयसंस्कृतेर्विशेषताः—

साकल्येन भारतीयसंस्कृतिविशेषतानां परिगणनम् न सरलं च चाप्यावश्यकमनुभूयते । अतएवात्र कतिपयान् भारतीयधर्मदर्शनादिग्रन्थानुद्धृत्य संस्कृतिविषयिका अत्यधिकप्रमुखा एव विशेषताः निरूप्यन्ते ता एवम् वर्णयितुमारभ्यन्ते—

सत्यम्—सत्यम् मानवस्योद्देश्येषु सर्वथा प्रशस्तम् । सत्यस्य व्यवहारेणैव मानवजीवनस्य साफल्यम् । यद्यपि मानवजीवनदर्शनसमालोचकेन शङ्कराचार्येण "सत्यानृते मिथुनीकृत्यायं लोकव्यवहारः" इत्युक्त्वा व्यावहारिके जगति सत्यासत्ययोः द्वयोरपि व्यवहारः स्वीकृतः, परमादर्शविचारधिया सत्यस्यैव पालनमपेक्ष्यते । अत्रेदं तक्यं यत् सत्यस्य रक्षा केवलं सत्यव्यवहारेणैव नहिसंपद्यते, अपितु असत्येनापि सत्यरक्षा सञ्जायते । उदाहरणार्थं यर्थको भारतराष्ट्रभक्तः स्वकीयदेशस्य सुगुप्तान् विषयान् चीनपाकिस्तानादि देशानाम् अधिकारिजनेभ्यः गोपयति असत्यञ्च वदति । राष्ट्रभक्तस्यतस्यासत्यभाषणेनापि सत्यस्यैव पूर्त्तिः सञ्जायते । अतो न केवलं वाचिकमपितुमौलिकमेव सत्यमतिशयेन वाञ्छनीयं वर्तते ।

अहिंसा—न केवलं हननमेवहिंसा परञ्च कस्यापि भावनायास्तिरस्करणमपि हिंसैव कथ्यते । अस्याः हिंसायाः मुक्तिरेवावश्यिकी प्राणिनि । महात्मा बुद्धोऽस्य

सिद्धान्तस्य महान् प्रचारकः आसीत् । भारतीय संस्कृतेरियं प्रधानविशेषता । अत-एवोक्तम्—

"अहिंसा परमोधर्मः ।"

अस्तेयम्—अन्येषां सम्पत्तेरहरणमेवास्तेयम् । यदि वयं स्वकीयसम्पदः सुरक्षणमभिलषामस्तदाऽन्येषाम् अपि सम्पदां सुरक्षाऽस्माभिरभिलषणीया ।

ब्रह्मचर्यम्—लैङ्गिकपवित्रतैव ब्रह्मचर्यमत्युदीर्यते । ब्रह्मचर्येण बुद्धि-बल-शीलादितत्त्वानां पुष्टिर्भवति ।

अपरिग्रहः—अपरिग्रहो नाम लोभान्मुक्तिः । परिग्रहो हि दुःखायेति यदुक्तम् तदुचितमेव । ये धनस्य भोगं न कृत्वा सञ्चयमेवकुर्वन्ति तेषां धनसम्पत्तेरुपभोगमन्ये-प्राणिनएव कुर्वन्ति । अत एवोक्तम्—

दानं भोगो नाशः तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥

शौचम्—आन्तरिकी शुद्धिः बाह्येन्द्रियाणाञ्च स्वच्छता शौचमिति निगद्यते । भारतीयसंस्कृत्यन्तर्गतं न केवलं बाह्यमपि तु आन्तरिकमपि शौचमतिशयेनापेक्षितं दृश्यते ।

सन्तोषः—यत् किंचित् प्राप्तेनसुखानुभूतिरेव सन्तोषः । परमस्य सन्तोषस्य नायमाशयो ग्राह्यो यत् पुरुषेण अर्जितादधिकं प्राप्तुं प्रयत्न एव न विधेयः । स्वोन्नत्यै पुरुषेण सदैव कृतप्रयत्नेन भवितव्यम् । परमसन्तुष्टिः सदैवाहितकरी । सुखं सन्तोष एव । अत एवोक्तम्—

सन्तोष एव पुरुषस्य परं निधानम् ।

तपः—संयमेन कठोरजीवनयापनमेव तपः । अध्ययनमपि तपः । तपस्विता पुरुषं स्वर्णवद् भासयति । अतएव सर्वास्वप्यवस्थासु पुरुषेण तपस्विना भाव्यम् ।

स्वाध्यायः—स्वाध्यायो मनुष्यजीवनमुन्नयति । अतो मनुष्येण यस्यां कस्या-ञ्चिदपि स्थितौ स्वाध्यायोऽवश्यमेव करणीयः । स्वाध्यायेन मानवस्य आन्तरिकः विकासः सञ्जायते ।

ईश्वरप्रणिधानम्—आत्मनः ईश्वरंप्रति समर्पणमेवेश्वरप्रणिधानम् । ईश्वर-प्रणिधानस्यायम् महाँल्लाभो यदनेन पुरुषः सुखदुःखादिकस्य चिन्तया चिन्तितो नैव जायते ।

आश्रमव्यवस्था:—भारतीयसंस्कृतावाश्रमव्यवस्थायाः पालनमप्यपेक्षितमेवास्ति । भारतीयाश्रमव्यवस्थानुसारं ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाश्रमाश्चत्वार आश्रमाः सन्ति । अनयाऽऽश्रमव्यवस्थया मनुष्यजीवने सारल्यं साफल्यञ्चानुभूयते । आश्रमा-

नुसारं जीवनव्यवस्थाकरणेन मनुष्यो दीर्घायुर्भवति । कार्यनिर्वाहश्च साफल्येन सम्पद्यते ।

धर्मार्थकाममोक्षाः—भारतीयसंस्कृत्यन्तर्गतं धर्मार्थकाममोक्षाणामधिगमो मानवस्य प्रयोजनीयो लक्ष्यः। येन चतुर्ष्वेकस्यापि अर्जनं नहि कृतन्तस्य तु जीवनमेव निरर्थकमुक्तं विद्वद्भिः। तथा चोक्तम्—

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥

पुण्यपापव्यवस्था—पुण्यपापव्यवस्थाऽपि भारतीयसंस्कृतौ प्रधाना । किं पुण्यं किं पापम्, इति निर्णयोऽपि न सरलः। वाग्वाणस्येनैतदेवालम् यत् परोपकार एव पुण्यस्वरूपः परपीडनमेव च पापम् । एतदेवोक्तमपि—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

कथंभारतीयसंस्कृतिरेवोत्तमा ?—यदा जर्मनदेशीया संस्कृतिः, रूसदेशीयसंस्कृतिः, जापानदेशीयसंस्कृतिरिति अनेकाः संस्कृतयः समुपलभ्यन्ते तदा को हेतुः भारतीयसंस्कृतेः प्राधान्यस्य, इति जिज्ञासा स्वाभाविकी। अत्रेदं निवेदनम् यत् भारतीय संस्कृतेर्यानि लक्षणानि सन्ति तानि न केवलं-भारतीयानामेव श्रेयसे सन्ति, परञ्च विश्वस्यसर्वेषामपि प्राणिनां हिताय वर्तन्ते। भारतीयसंस्कृतौ—अहम्, मया, मम इति विचारो निन्द्यः । तत्र तु विश्वबन्धुत्वस्य भावनैवापेक्षिता वर्तते । अतएवोक्तम्—

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

बह्वीनां संस्कृतीनां सत्तापि न हितकरी । यदा समस्तस्यापि विश्वस्य मानवजातिरेका तदा संस्कृतिरप्येकैव भवेदिति नानुचितं विचार्यते । अनेनैव विचारेणाखिलमानवजातेरेकसूत्रग्रथनं सम्भवम् नान्यथेति सर्वम् भारतीयसंस्कृतेरेवोत्तमतां साधयति ।

---

२५

# भारतीय संस्कृतौ तीर्थानां स्थानम्

भारतीया संस्कृतिः सकलेऽपि विश्वे वर्तमानानां संस्कृतीनां मध्ये काञ्चिद् विलक्षणामेवाभां धारयति । धार्मिकता चास्य भारतवर्षस्य सांस्कृतिकविशेषतासु अद्वितीया एव । भारतवर्षे तीर्थानां सत्ता भारतीयसंस्कृतेः धार्मिकमहिमानम् सर्वथैव पोषयतीति न किञ्चिन्नवीनं प्रतिपाद्यते । भारतीयतीर्थास्तु भारतीयसंस्कृतेः प्रधानाङ्गरूपा एव सन्ति । इदमपि स्वीकर्तव्यमेव यद्भारते वर्षे तीर्थानां केवलं धार्मिकमेव महत्वं न वर्ततेऽपि तु आध्यात्मिकदृष्ट्या, सामाजिकदृष्ट्या भौगोलिकदृष्ट्या चापि तीर्थानाम् महत्ता अविस्मरणीयैव खलु ।

'तरन्ति एभिरिति तीर्थाः' इति परिभाषानुसारं तीर्थाः मानवस्य संसारसागरतरणोपायरूपाः सन्ति । भारते अनेकप्रकारकास्तीर्था दृश्यन्ते । केचित् तीर्था नदीरूपाः, यथा गङ्गायमुना-गोदावर्यादयः, केचित् देवमन्दिररूपाः, यथा बदरीनाथ-केदारनाथ-जगन्नाथपुरी-सेतुबन्ध-रामेश्वरादयः केचिच्च विशिष्टप्रतिमादिविरहिताः पञ्चवटी-नैमिषारण्य कुरुक्षेत्रप्रभृतयः । एतेषां सर्वेषाम् अपि तीर्थानाम् स्थान भारतीय संस्कृतावद्भुतमेव वर्तते । ये खलु सरिद्रूपाः गङ्गायमुनादयस्तीर्थाः सन्ति तेषाम् महत्ता चतुर्विधा सा च धार्मिकी, आध्यात्मिकी, सामाजिकी, भौगोलिकी चेति । जगत्पावनस्य शङ्करस्य जटामटाभ्यो गलत्प्रवाहायाः गङ्गाया धार्मिकम् महत्व स्पष्टमेव यदस्या नामस्मरणेन स्पर्शमात्रेण गङ्गाजलस्नानेन च मनुष्येणाद्भुतः पुण्यलाभः क्रियते । गाङ्गस्य वारेर्महत्वं स्तुवता वाल्मीकिनोचितमेवोक्तम्—

पापापहारि दुरितारि तरङ्गधारि ।
शैलप्रचारि गिरिराजगुहाविहारि ।।
झङ्कारकारि हरिपादरजोऽपहारि ।
गांगं पुनातु सततं शुभकारि वारि ।।

श्रीमत्कालिदासेनापि गङ्गोदकबिन्दुमहिमानम् वर्णयतोदीरितम्—

वाचालं विकलं खलं श्रितमलं कामाकुलं व्याकुलम् ।
चाण्डालं तरलं निपीतगरलं दोषाविलं चाखिलम् ।।
कुम्भीपाकगतं तमतककरादाकृष्य कस्तारये
न्मातर्जह्नुनरेन्द्रनन्दिनि तव स्वल्पोदबिन्दुं विना ।।

गङ्गाजलस्य दर्शन-स्पर्शादिना प्राप्तेन पुण्येन महत्तीर्थस्य गङ्गायाः धार्मिकमेवमहत्वं स्पष्टं भवति । गङ्गाया आध्यात्मिकमपि महत्वं स्पष्टमेव यदस्या दर्शनादिना

मनुष्यस्यान्तःकरणम् पवित्रतां याति । पूते चान्तःकरणे एव जीवः परमात्मसाक्षात्कारं कर्तुं समर्थः । गङ्गादितीर्थानाम् भौगोलिकोऽपि महिमाऽनिवार्य एव । भारतीयकृषि-प्रवर्द्धने गंगाया योगदानमपि स्पष्टमेव यद् गङ्गाया निर्गता अनेका अपि कुल्याः कृषिसिञ्चनं कुर्वन्ति । एवमेव गङ्गादितीर्थानां सामाजिकमपि महत्त्वं स्वीकर्तव्यमेव, यद् गंगास्नानस्य कार्तिकपूर्णिमादिविशेषपर्वदिनेषु जना इतस्ततः समागत्य परस्परम् मिलन्ति । यात्रार्थिष्वं केचिदेकमासाय, केचित् पञ्चदशदिनेभ्योऽपरे च सप्तदिने-भ्यस्तत्रागत्य स्वनिर्मितेषु पर्णगृहेषु एव निवासं कुर्वन्ति । अस्मिन्नवसरे गङ्गादितीर्थानां सामाजिको महिमा दर्शनेनैव ज्ञातुं शक्यते ।

बदरीनाथ—केदारनाथादिमन्दिराणामपि धार्मिकः सामाजिक आध्यात्मिकश्च महिमा गङ्गादितीर्थानामिवाङ्गीकर्तव्य एव । बदरीनाथादितीर्थयात्रायां धार्मिका देशस्यानेकप्रदेशेभ्यः समागत्य सामाजिकं, धार्मिकमाध्यात्मिकं प्राकृतिकञ्च सुखं लभन्त इति को न जानाति । एवमेव रामकृष्णादिमहापुरुषसम्बन्धितपञ्चवटीकुरुक्षेत्रादितीर्था अपि मानवजातेरनेकविधमुपकारं कुर्वन्ति । एताद्दृशतीर्थानां दर्शनेन भारतीयो मानवः स्वदेशस्यादर्शपुरुषाणां रामादीनां प्रत्यक्षमेव गौरवमनुभवति । अन्यच्च तत्तन्महापुरुष-सम्बद्धानां तीर्थस्थानानां स्थानविशेषाणां दर्शनेन मनुष्यस्तेषाम् महापुरुषाणामादर्श-चरितम् प्रत्यपि समुत्सुको जायते । अनया दृष्ट्या मानवस्य चरित्रनिर्माणेऽपि भार-तीयतीर्थानां योगदानं सुनिश्चितमेव । इतो भारतीयतीर्थानाम् महत्त्वम् बहुविधं वर्तते इति स्पष्टमेवानुभूयते यत् केचिद् यदि संसारस्याधिदैहिकविकलास्तीर्थेष्वागत्य आध्या-त्मिकीं शान्तिमधिगच्छन्ति तथा अन्ये तीर्थसम्बन्धितमैतिह्यम् विज्ञाय स्वदेशस्य सांस्कृतिकं गौरवं जानन्ति । बहवश्चान्ये विश्वासैकबला आस्तिका भोगाकुले संसारे नैराश्यमनुभूयमानास्तीर्थेष्वागत्य तत्तद्देवान् स्वमनोरथपूरणार्थं प्रार्थयन्त आत्मविश्वास-मधिगत्य शान्तिं लभन्ते । भारतीयतीर्थानामुपर्युक्तम् बहुविधम् महत्त्वं दृष्ट्वैव विदेशीया अपि बहवो विद्वांसः पर्यटकाश्चानेकान् भारतीयतीर्थानवलोकयितुं लाला-यिता दृश्यन्ते । बहवस्तु अद्यतनाः वैदेशिका ऋषिकेशादितीर्थेषु योगादिशास्त्रनाम् विधाय यत्किञ्चिदल्पेनाध्यात्मिकीं शान्तिं प्राप्नुवन्ति, इति जानीमः सर्वे वयं भारतीयाः । अतः सामाजिकदृष्ट्या, सांस्कृतिकदृष्ट्या, धार्मिकदृष्ट्या, आध्यात्मिक-दृष्ट्या, भौगोलिकादिदृष्ट्या च भारतीयतीर्थानाम् स्थानमत्यन्तम् महत्त्वपूर्णमिति प्रायशः सर्वैरपि भारतीयैः बहुभिश्च वैदेशिकैः स्वीक्रियते इति सर्वथोचितम् ।

२५

# धर्मो रक्षति रक्षितः

संसारे प्राकृतिका अपि पदार्थाः स्वस्वधर्मानवलम्ब्यैव तिष्ठन्ति । सूर्यो नित्यं प्रादुर्भवति अस्तञ्चैति । चन्द्रोऽपि पक्षे पक्षे क्षयं याति पुनश्च वर्द्धते । पशुपक्षिणोऽपि स्वधर्मपालयन्ति । ते यत्खाद्यमस्ति तदेव खादन्ति, यत्पेयमस्ति तदेव पिबन्ति । यस्म कर्मणे ते भगवता सृष्टास्तन्नितरां कुर्वन्ति । मनुष्याणां कृतेऽप्यनिवार्य एव धर्मः ।

को नु धर्मः इति जिज्ञासायां धर्मपदस्य व्युत्पत्तिलभ्योऽर्थः—धारणार्थकाद् 'धृ' धातोः 'धारणशीलः' इत्येव उपतिष्ठते । यो नाम ध्रियमाणो धारयति स धर्म इति फलितोऽर्थः । भगवता व्यासेन उक्तम्—

धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजाः ।
यत्स्याद्धारणसंयुक्तः स धर्मो मुनपुंगव ॥
सामान्योऽयं मया प्रोक्तो जडजङ्गमयोर्द्वयोः ।
धर्मो येन धृता लोका धारणाद्धर्म उच्यते ॥

सम्प्रति 'रिलिजन', 'मज़हब', 'पन्थ' प्रभृतीनि पदानि तद्बोधकानि । परं इमे रिलिजनादयो न धर्माः, अपि तु मतविशेषा एव । अपि च यो ध्रियमाणो धारयति स धर्मः इति शाब्दिकमर्थं प्रत्याययन् धर्मत्वेनैको धर्मोऽवस्था भेदेन बहुधा भिद्यते । अयं मानवो बाल्ये बालधर्मान्, यौवने युवकधर्मान्, वार्द्धक्ये स्थविरधर्मान्, पतिरूपेण पतिधर्मान्, पितृरूपेण पितृधर्मान, राजरूपेण राजधर्मान्, इत्याद्यवस्थासम्बन्धादिभेदेन विभिन्नान् धर्मानाचरति । एवं नाय क्षणमपि धर्मेण हीनो भवति । इत्थ पर्य्यालोचनया कर्त्तव्यमपि धर्म एव नान्यत् । अतएव उपनिषद—

"धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेणपापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति" इति सादरमुदाहरन्ति । अपरञ्च, "आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम् । धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ।" इत्यत्रापि धर्मसङ्केतः प्राप्यते । मनुप्रोक्तानि, धृति—क्षमा—दमोऽस्तेयं, शौचमित्यादीनि धर्मस्य दश लक्षणानि मानवस्याशेषजीवनसंगीनि । तथैव वैशेषिककारोऽपि "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति धर्मं लक्षयन्—'अभ्युदय'—'निःश्रेयस' पदाभ्याम् ऐहिकीं पारलौकिकीञ्च समुन्नतिं हि धर्मनाध्यां प्रदर्श्य धर्मस्य व्यापकत्वं विशदयति स्म । एवं यो ध्रियमाणः मनु धर्मिणं स्वस्वरूपेऽवस्थापयति स धर्म इत्येव निष्कर्षः ।

सोऽयं सनातनो मानवधर्मश्चतुर्विधः । सामान्यधर्मः, विशेषधर्मः सम्प्रदायधर्मः

आपद्धर्मश्च। यो मनुष्यमात्रेण पालयितुं योग्यः, येनविना मनुष्यो नितरांनिन्द्यते लज्जाञ्चानुभवति स मनुष्यजातेः सामान्यधर्मः। यथा—धैर्यम्, क्षमा, बाह्यम् आभ्यान्तरञ्च शुचित्वम्, सत्यभाषणम्, विद्याऽध्ययनम्, इन्द्रियनिग्रहः, मनोनिग्रहः, अचौर्यंबुद्धिः, क्रोधत्यागः, भूतेषु दया, अहिंसा, परोपकारः, आस्तिक्यम्, एते सामान्य धर्मस्यावयवाः।

परोपकारविषये उक्तम्—

संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वा।<br>
परोपकारः पुण्याय पापाय परपीडनम्॥

सत्यविषये उक्तम्—

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।<br>
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः॥

आचार विषये उक्तम्—

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।<br>
तस्मादस्मिन् सदा युक्तो नित्यं स्यात् आत्मवान् द्विजः॥

तथा 'अहिंसा परमो धर्मः' अपि कथ्यते।

देश-काल-जाति-ज्ञाति-व्यक्ति-विशेषव्यवस्थया पालनीयो धर्मो विशेषधर्मः। यथा—भारतवर्षस्य वर्णाश्रमो धर्मः विशेष धर्म एव। साङ्गोपाङ्गतया भारतवर्षे एवायं पालयितुं शक्यः। यतोऽयमार्यभूमेरनुरूपं परमेश्वरकृत एव न पुनर्मनुष्यकल्पितः इति स्वयं समुद्घोषयति भगवान् श्रीकृष्णः —

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।<br>
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥

एवञ्च युगधर्मो, जातिधर्मः, कालधर्मः पुरुषधर्मः, नारीधर्मः, पितृधर्मः, पुत्रधर्मः, राजधर्मः, प्रजाधर्मः, स्वामिधर्मः, सेवकधर्मः, इत्यादयो विशेषधर्मा एव।

केनचिद्विशेषपुरुषेण केनापि विशेषकारणेन प्रचारितं मतं सम्प्रदायधर्मः यथा ऋषभदेवस्य जैनमतम्, गौतमबुद्धस्य बौद्धमतम् इत्यादयः। अत्रायं विशेषो विनिर्णयो यत्र ये सम्प्रदायधर्माः सामान्यधर्मस्य विशेषधर्मस्य च बाधका न भवेयुस्तएव धर्मस्यावयवत्वमर्हन्ति—

धर्मं यो बाधते धर्मो न स धर्मः कुधर्मतत्।<br>
अविरोधी तु यो धर्मः स धर्मो मुनिपुंगव॥

यस्यां दशायां जीवनरक्षाया अन्ये केऽपि उपाया अवशिष्टा न स्युः समाजस्य देशस्यरक्षायाश्च सर्वेऽप्युपायाः कुण्ठिता भवेयुस्तदा स्वधर्मः सदाचारातिरिक्तमपि तात्कालिकीं परिस्थितिमपेक्ष्य कर्तुं शक्यते, स एव आपद्धर्मः।

अवश्यमेव रक्षितो धर्मो धार्मिकं रक्षति। धर्मस्य रक्षां कुर्वन्नेव विभीषणो राक्षसकुले धर्मेण रक्षितो जीवति स्म। धर्मपुत्रोऽपि धर्ममाश्रित्यैवापगतं राज्यम् प्राप। धर्मस्य मर्यादां परिपालयता शिववीरेण किन्न अकारि। एवं इतिहासमुखेन सिद्धमेव, यद् धार्मिका धर्मरक्षिता एव तिष्ठन्ति।

ये पुनः स्वधर्मं न पालयन्ति ध्रुवं तेषां निधनम्। अयं लोकस्तु तेषां नष्ट एव, परलोकोऽपि अवश्यमेवनश्यति। रावणोऽपि धर्मं मारयन्नेव मारितः। हिरण्यकशिपुर्हि महानधार्मिक आसीत्। स आस्तिकवादंनिनिन्द, ईश्वरचर्चां रुरोध, धार्मिकं स्वपुत्रमपि प्रदुद्रोह। तेन प्राप्ता प्रचुरा लक्ष्मीः। परं क्व गतं सर्वम्। अद्य सर्वे एव तं हृदयेन निन्दन्ति। अपगतं तस्य यशः, भ्रष्टः परलोकः। इदानीमपि केचिन्मूढचेतसः स्वधर्मंत्यक्त्वा परधर्मं परञ्च सेवन्ते। परं हानिकर एव तेषां व्यापारः। उक्तं हि श्रीमद्भगवद्गीतायाम्—

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'।

यद्यपि कदाचिदधार्मिका अपि वृद्धिं प्राप्नुवन्ति। परन्न तेषां वृद्धिश्चिरस्थायिनी। निश्चितस्तेषां ह्रासः। चरमे धार्मिका एव जयन्ति। धर्म एव स्थायी। अतो धर्मो न कदापि हन्तव्यः।

महान् खलु धर्मस्य प्रभावः। महती ह्यस्य व्यापकता। चराचरे जगत्यस्य प्रभुत्वम्। धर्मरक्षका एव रक्ष्यन्ते धर्मेण। धर्मघातकास्तु हन्यन्त एव। तस्माद् धर्मोऽवश्यमेव रक्षणीयः।

अथ किमधिकं वक्तव्यम्, धर्मप्राणोऽयम् अस्माकं देशः, यत्र पदे पदे—धर्ममया एवालापाः श्रूयन्ते, अत्रत्यो निवास एव धर्मानुरागं समुल्लासयति, अत्रत्यावाताः अत्रत्यावनस्पतयः रमणीयास्तीर्थप्रदेशाः, प्रवहन्त्यो नद्यः, पर्वतानां शिलाखण्डाः, इदमेव सततं समुद्घोषयन्ति—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्माद्धर्मो न हातव्यो मा नो धर्मो हतोऽवधीत्॥

———

२६

# स्वतन्त्रभारते नारीणां महत्त्वम्

नाधुनैव केवलमपि तु सृष्टिकालादपि पूर्वम् यदा परमात्मैवासीत्तदापि परमात्मनः शक्तिरूपया मायया स्त्रीणाम् महत्त्वं स्पष्टमेवोपलक्ष्यते । यथा लोके नारी पुरुषस्य शक्तिस्तथैव मायाशक्तिरपि सर्वशक्तिमतः परमात्मनः शक्तिरेव । संसारे यथा स्त्रीपुरुषयोः संयोगेन सृष्टिरचना सम्भवति तथैवेश्वरोऽपि 'सोऽकामयत बहुस्यां प्रजायेय' इत्युपनिषद्वाक्यानुसारं सृष्टिकामनां कृत्वा मायाशक्तिसाहाय्येन स्वकीयां सिसृक्षाम् पूरयति । यद्यप्येतत् स्पष्टमेव स्वीकार्यं यत् स्त्रीपुरुषसंयोगवत् मायापरमात्मनोः सम्बन्धो न लौकिकोऽपित्वलौकिक एव । परमितितु कदापि नाङ्गीकर्तुं शक्यते यत् परमात्मा मायाशक्तिम् विना संसारसृष्टिं सर्जति । अतएवाद्वैतवेदान्तशास्त्रे संसारसृष्टिविषये माया उपादानकारणरूपेण परमात्मा च निमित्तकारणरूपेण गृहीतो वर्तते, "यथा लूता तन्तु कार्यं प्रति" । प्रस्तुतेन मायाशक्तिस्वरूपेण स्त्रीशक्तेः स्वरूपं स्पष्टमेव प्रतिभाति । शैव-शाक्तदर्शनेऽपि शक्तितत्त्वस्वरूपेण स्त्रीणाम् महत्त्वं प्रमाणितं भवति । शैवशाक्तदर्शनानुसार शिवःशक्ति विना जड़रूप एव सन् किमपि कर्तुमक्षम एव । अतएव सौन्दर्यलहर्यामाचार्यशङ्करेणोक्तम्—

शिवःशक्त्यायुक्तोयदिभवति शक्तः प्रभवितुम्,
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरञ्च्यादिभिरपि,
प्रणन्तु स्तोतु वा कथमकृतपुण्यः प्रभवति ॥

मार्कण्डेयपुराणे तु "स्त्रियः समस्ताः सकलाः जगत्सु" इत्युक्त्वा स्त्रीणाम् महत्त्वम् प्रतिपादितम् । मार्कण्डेयपुराणकथनानुसारम् स्त्रीणाम् स्वरूपं देवीस्वरूपमेव ।

नारीणाम् महत्त्वम् स्वीकृत्यैव वैदिकयुगादारभ्य तासाम् पूजा भारतवर्षे विधीयते । वैदिकयुगे गार्ग्यादिनारीणाम् पूजा, पौराणिके युगे सीतादिनारीभ्य रामादिभिः सम्मानदानं प्राचीनकालिकं नारीमहत्त्वमेव प्रतिपादयति ।

परम् मध्यकालो नारीणां ह्रासकालः । मध्यकाले प्रायशो नारी केवलं भोगस्य साधनरूपेणैव गृहीता । नारीणामशिक्षा, पशुवत्ताऽऽत्म्, दुष्टपतीनाम्-कुत्सितो व्यवहारः, नारीणाम् मानसिकं पारतन्त्र्यम् बाल-वृद्ध-विवाहयोः पद्धतिश्चेत्यादयः वृत्तान्ताः नारीजीवनस्यावनतेरेव द्योतकाः सन्ति ।

वर्तमानकाले स्वतन्त्रभारते नारीणामभ्युत्थानं राष्ट्रस्योन्नत्यै अनिवार्यतयाऽपेक्ष्यते । यदा नारीणाम् जीवनं गौरवपूर्णं सम्मानयुतं च भविष्यति तदा राष्ट्रस्य

सन्ततिसम्पत्तिरपि सर्वथैव योग्या भविष्यतीति स्वाभाविकम्। अतएव स्वतन्त्रभारतस्य संविधाने नारीणामभ्युत्थानाय अनेकविधं सौविध्यम् प्रदत्तमस्ति।

नारीणाम् महत्तायाः विश्वस्मिन्नपि विश्वे अनेकानि कारणानि सन्ति। प्रथमं तु नार्य एव राष्ट्रस्य भाविनायकान् जन्म ददति पालनपोषणादिकञ्च कुर्वन्ति। बालकानां चरित्रनिर्माणेऽपि नारीणाम् महत्ता स्वीकार्यैव। सन्तानस्य चरित्रे मातुश्चरित्रस्य प्रभावोऽनिवार्यः। अतःकस्मिन्नपि राष्ट्रे नारीणाम् समुन्नत्यै पुरुषैरवश्यमेव चिन्तनीयम्। नारीणामुत्थानाय सर्वप्रथम तासां शिक्षायाः व्यवस्था विधेया। अधुना स्वतन्त्रेऽपि भारते कतिपया एव नार्यः शिक्षिताः सन्ति। नारीणां शिक्षायाअभावे भारतीयशिशूनां शिक्षणस्य, पालनस्य पोषणस्य च व्यवस्थाऽपि न सन्तुष्टिप्रदा वर्तते।

मन्मते तु नारीणामुच्चाधिकारपदेष्वपि नियुक्तिरावश्यिकी। नारीणामपि बुद्ध्यादिवैशिष्ट्यं पुरुषाणां समानमेव वर्तते। अतः पुरुषाणामिव नारीणामपि उच्चाधिकारपदेषु नियुक्तिर्नानौचित्यमावहति। अयमस्माकं निश्चयो यत् नारीणामुच्चशिक्षायां सत्यां, उच्चाधिकारपदेषु तासु स्थितासु भारतवर्षस्य श्रेयः स्वाभाविकम्। अतो भारतवर्षस्य समुन्नत्यै भारतीयैर्नागरिकैः भारतराष्ट्रशासकैश्च भारतीयनारीणामभ्युत्थानाय साकल्येन प्रवर्तितव्यम्। एवं सति भारतदेशस्य स्वर्गोपमता निश्चेतेति नाधिकम् भण्यते—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यते सर्वास्तत्राफलाः क्रियाः॥

---

२८

# पुरुषार्थचतुष्टयम्

न हि निष्प्रयोजनमत्र जगति किञ्चिद् वर्तते। पुरुषश्च परमात्मनः शोभना सृष्टिः। अतः पुरुषस्य कृते प्रयोजनरूपेण धर्मार्थकाममोक्षाणाम् व्यवस्था कृता वर्तते। नहि सर्वः सर्वं प्राप्नोति, इति दृष्ट्या नहि सर्वे साकल्येन धर्मोपासकाः। दृश्यन्ते, नहि सर्वे अर्थोपासकाः, न हि सर्वे कामोपासकाः न च सर्वे मोक्षोपासका एव। अतएव

यदि केचित् प्राणपणादिभिर्धर्ममनुपालयन्ति तदाऽन्ये धर्मबुद्धिं सर्वथा परित्यज्य "सर्वे गुणाः काञ्चनमाश्रयन्ते" इति प्रक्रिया अर्थमेव सर्वम् मत्वा दासानिव अर्थसेवापरायणाः सञ्जायन्ते, केचिच्च यदि प्रसूनधन्वनः मीनकेतोः मदनस्य मदेनोन्मत्ता रमण्यनुरक्ताः कामिनीमेव सर्वदा ध्यायन्ति तदा एके जीवनस्य चरमोद्देश्यभूताम् मुक्तिमेव परमम् पुरुषार्थम् मन्यन्ते। पुरुषार्थचतुष्टयस्यैषा प्रवृत्तिर्मानवे भिन्नरुचित्वाद् दृश्यते। प्रवृत्तेर्मूलं रुचिः, रुचेर्मूलं वृत्तिः वृत्तेश्च आधारः संस्कारः स्वीकर्त्तव्यः। अत्रायं निष्कर्षः यत् पूर्वजन्मसञ्चितसंस्कारानाश्रित्यैव मानवे धर्मेच्छा, अर्थेच्छा, कामेच्छा, मोक्षेच्छा च जायते। यस्मिश्चचतुर्षु एकोऽपि न विद्यते तस्य जन्म तु निष्फलमेवोक्तम्—

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्॥

तेषां चतुर्णामादिमोधर्मः। धर्मस्य सर्वप्रथममुल्लेखोऽतिसमीचीनः। धर्मस्य प्रथमतयाऽयमेव आशयो यन्मानवेन पूर्वंस्वधर्मस्य पालनं कर्त्तव्यम् तत एव अर्थादीनां विषये चिन्तनीयम्। अतएव गीतायामपि उक्तम्—

स्वधर्मे निधनं श्रेयः परधर्मोभयावहः।

येषां पुरुषार्थोऽयं धर्मस्ते धर्मपरायणाः सन्तः धर्ममेव जीवनस्य परमम् पुरुषार्थम् स्वीकुर्वन्तः नार्थम् चिन्तयन्ति न कामम्, न सन्ततिं चिन्तयन्ति न भूतिम्, न यशश्चिन्तयन्ति नापयशः न निन्दां चिन्तयन्ति न वा स्तुतिम्। एते तु धर्मैकधनाः सर्वानपि लौकिकान् अलौकिकान् वा विषयान् अचिन्तयन्तो धर्मानुपालनमेव जीवनस्य दैवीसम्पत्तिमिव मन्यन्ते।

वस्तुत एव धर्मस्य प्रमुखता न्यायोचिता। धर्मं विना तु पुरुषः पशुरेव।

अतो धर्मानुपालनम् विना अधर्मेण प्राप्तः अर्थः कामो वा पशुताया एव निदानम्। एवञ्चधर्ममनुपालयता एव मानवेन अर्थस्य कामस्य च उपलब्धिः कार्या, इत्येव श्रेयस्करी सरणिः। मोक्षस्यापि मूलं धर्म एव। नाऽधर्मेण मोक्षोपलब्धिः सम्भाव्यते क्वचित्। अतो धर्मपुरुषार्थस्य चतुर्षु पुरुषार्थेष्वपि सर्वप्रथममुल्लेखः समीचीन एव। अतएव आदर्शमनुजेन श्रीरामचन्द्रेण, देव्या सीतया, रामभक्तेन जटायुषा, दृढ़व्रतेन हरिश्चन्द्रेण, तत्पत्न्या शैव्यया महर्षिणा दधीचिना च अनेकविधानपि क्लेशान् विषह्य स्वधर्म एव पालितः।

द्वितीयस्तु पुरुषार्थो अर्थः। धर्ममोक्षो यदा सात्विको प्रयोजनो तदा अर्थकामौ रजसा तमोगुणेन चानुलिप्तौ। अतोऽर्थमेवैकमात्रं जीवनस्य परमम् पुरुषार्थं स्वीकुर्वताम् जनानां कृते धर्मस्य मोक्षस्य वा महत्ता तृणमिवापि नास्ति। अर्थैकपरायणा एतेऽर्थदासा अर्थस्य कृते किमुत कुलमर्यादाम् किम् वा आत्मप्रतिष्ठाम्, किमुत धर्मम् किम्वा

चरित्रम् सर्वमपि गौणं हेयञ्च विचारयन्ति । न केवलमेतदेव अपि तु एते अर्थमदान्धा नाचार्याणामादरं कुर्वन्ति न च शृण्वन्ति हितचिन्तकान् स्वकीयान् सुहृज्जनान् । किमधिकम्, बाला इवैते आत्मन एव धनिनो मन्यन्ते आत्मान एव बलिनः, आत्मन एव बहुशास्त्रविचक्षणाः मन्यन्ते, आत्मन एव कुशाग्रबुद्धयः, आत्मन एव चातुर्यधुरीणा मन्यन्ते आत्मन एव च यशस्विनः । अत एतेषाम् मतेऽन्ये विद्वांसो मूर्खाः, बहुज्ञा अल्पज्ञाः, प्रतिभाशालिनो जडाः सम्पन्नाश्च भिक्षुका एव भवन्ति । एतेषां लक्ष्मीसमुपासकानां वर्णनं बाणेन सम्यगेव कृतम्—

"आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति । उत्कम्पितलोचना इव तेजस्विनो नेक्षन्ते कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते । जातुषाभरणानीव सोष्माणं न सहन्ते । दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम् ।"

अर्थमेव जीवनस्य एकमात्रं लक्ष्यम् मन्यमानाः केचितु यथाऽर्थम् प्रियम् मन्यन्ते न तथा पुत्रम्, प्रियम् प्रियम्वा । एते तु अर्थमात्रैकधनाः समृद्धा अपि सन्तः शिशिरर्तावपि वस्त्राणि न धारयन्ति, रुग्णेभ्यः पुत्रादिभ्यश्च औषधमपि न ददति । धिगेषामर्थप्रियाणाम् प्रवृत्तिः । परं धन्या अप्येते ये धनवन्तोऽपि सन्तः सर्वमपि सहन्ते न च धनव्ययभयाद्रोगादीनाम् प्रत्युपायं किमपि कुर्वन्ति ।

नाऽयमाशयोऽस्मदीयो यन्मानवेन अर्थकामना कदापि न हि कर्त्तव्या । अर्थं विना तु जीवनव्यवहारः शून्यतामेव भजते । परं स्वधर्मं चरित्रञ्च रक्षयतैव मानवेन अर्थोपार्जनं कार्यमित्येव अस्माकं वक्तव्यः ।

तृतीयपुरुषार्थस्तु कामः । कामप्रवृत्तिर्जीवे स्वाभाविकी यच्चोक्तमपि—

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलः ।
व्रणैः पूतिक्लिन्नैः कृमिपरिवृतैरावृततनुः,
शुनीमन्वेतिश्वा तमपि मदयत्येष मदनः ॥

ये तु कामोपासकास्तेषां कृते संसारस्य बहवः सरसा अपि पदार्थाः नीरसाः प्रतीयन्ते । एते च सर्वदा रमण्याः रागेन रञ्जिताः सन्तः स्वकीयमर्थम्, मानम्, मर्यादाम् धर्मभावनाञ्च मदनोत्सवपक्षे जुह्वति । कामवासनया वशीभूता एते कामिनः कायेन, मनसा, वाचा वित्तादिना च कामदेवोपासनायामेव सर्वदा लीना दृश्यन्ते । कामवृत्तिपराधीना एते कामपुरुषार्थभक्ता योगीव चित्तस्यैकतानतया कामिनीमेव अनुध्यायन्ति । धर्मकर्माद्युपदेशांश्च मिथ्याप्रलापानिव अनादृत्य न शृण्वन्ति । एतादृशमेव कामस्य शासनं यत्र मानवस्य इतराः सर्वा अपि वृत्तयः पराभव यान्ति । कामपरवशस्य जनस्य ज्ञानन्तु अदर्शनतामेवैति । अस्माकन्तु इय धारणा यत् धर्मादिविरहिता काम-

वासना न शोभना न च मानवहितकारिणी। अतो यद्यपि कामवृत्तिः स्वाभाविकी तथापि तस्या अनुशासनम् परमम् अपेक्षितम् मन्तव्यम्।

मोक्षश्च मानवजीवनस्य चतुर्थश्चरमश्च पुरुषार्थः। मोक्ष एव सः पुरुषार्थः यमधिगत्य जीवने किमपि प्राप्तव्यं न हि वर्तते। मोक्षस्येयमद्भुता विशेषता यन्मुक्त-पुरुषस्य कापि अभिलाषा न शिष्यते। स तु 'आत्मन्येवात्मना तुष्टः' इति गीतावचना-नुसारम् सदैव परमानन्दमनुभवति।

मोक्ष एव आत्मसाक्षात्कारः, आत्मबोधः, तत्त्वदर्शनम्, स्वरूपज्ञानम्, निर्वाण-मिति चोच्यते। येषामविद्याग्रन्थिर्भिद्यते त एव आत्मबोध कर्तुं समर्थाः जायन्ते नाऽन्ये। मुक्तानाञ्च इयमपि विशेषता भवेते अविद्यावृतानामिव पुनः पुनर्जन्म न गृह्णन्ति। अत एवोक्तमस्ति अनेकेष्वपि स्थलेषु—

"यद् गत्वा न निवर्तन्ते तद्धाम परमं मम"।
न स इह पुनरावर्तते। इत्यादिकम्।

मोक्षपुरुषार्थस्य प्राप्तिर्जीवने एकस्मिञ्जन्मन्येव नहि साध्यते अपि तु जन्म-जन्मान्तरेण मोक्षरूपो दुःसाध्योलक्ष्यः प्राप्यते। 'अनेकजन्मसंसिद्धोततोयाति परां गतिम्' इति गीतोक्तिरपि उक्तमेव कथनं समर्थयति।

धर्मार्थकाममोक्षेषु मोक्षो मानवस्य सर्वोत्कृष्टः पुरुषार्थ इति निर्विवादम्। परं नहि सर्वभौतिकेऽस्मिन् जगति मोक्षोपासकैर्भवितुं शक्यते। अतएव भारतीयधर्म-दर्शनमर्मज्ञैः सम्यग्विचार्य धर्मार्थकाममोक्षाणाम् क्रमानुकूला व्यवस्थाकृता। सर्वप्रथमम् धर्मस्योल्लेख कृत्वा इदमेव सङ्केतितं यत् पूर्वं धर्मकामनाकर्तव्या ततोऽर्थस्य ततश्च कामस्य। धर्मानन्तरमर्थोल्लेखस्यायमेवाभिप्रायो यत् धर्ममनुपालयतैव जनेन अर्थोऽर्जितव्यः न त्वधर्मेण। इत्थञ्च धर्मोऽर्थस्य साधनभूतः। धर्मार्थानन्तरञ्च कामोल्लेखस्याभो-तात्पर्यः यत् धर्माधारेण अर्थम् अर्जयित्वा मानवेन कामपरेण भाव्यम्। एवञ्च धर्मार्थौ उभावपि कामस्य साधनौ। एवञ्च धर्मार्थकामरूपं सर्वमपि लौकिकं भोगं व्यवहृत्य मानवेन चतुर्थपुरुषार्थस्य मोक्षस्य कृते प्रयतनीयमित्येव भारतीयानाम् प्रशस्तो मार्गः प्रतीयते।

---

२८

# वर्णाश्रमव्यवस्था

भारतीयसंस्कृतेः स्वरूपं सर्वथैवाप्रतिमम् इति सर्वेऽपि जानन्ति । याभिर्विशेषताभिः भारतीयसंस्कृतेर्महिमा सर्वत्र गीयते तास्वेका भारतीया वर्णाश्रम-व्यवस्था । भारतीयधर्मे, संस्कृतौ, दर्शने च वर्णाश्रमव्यवस्थाया अत्यन्तं महत्त्वपूर्णं स्थानं वर्तते । वर्णाश्रमव्यवस्थाया अन्तर्गतं यत् शब्दैरेव स्पष्टं अवस्थाद्वयं वर्तते, तदेका वर्णसम्बन्धिनी व्यवस्था, अपरा च आश्रमसम्बन्धिनी व्यवस्था । भारतवर्षे वर्णव्यवस्थायाः स्वरूपमतिप्राचीनकालादेव दृश्यते । ऋग्वेदे वर्णव्यवस्थायाः स्वरूपवर्णनं निम्नलिखित-प्रकारेण कृतमस्ति—

ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृतः ।
ऊरू तदस्य यद वैश्यः, पद्भ्यां शूद्रोऽजायत ॥

ऋग्वेदस्योपर्युक्ते मन्त्रे ब्राह्मणस्य मुखत्वम्, क्षत्रियस्य बाहुत्वम्, वैश्यस्य ऊरुत्वम् शूद्रस्य च पद्भ्यामुत्पत्तिः, इतिसर्वं प्रतीकरूपं वर्णनम् । अत्रेदं स्पष्टीकरण-मपेक्षितं यत् मूलतया भारतवर्षे वर्णव्यवस्था जन्मानुसारं नासीत् । समाजस्योप-योगितामनुसृत्यैव वर्णचतुष्टयस्य व्यवस्था तात्कालिकसमाजेन कृता, इति मे मतिः । एव वर्कमपि समाजं रक्षितुं बुद्धिबलस्यापेक्षा नितान्तमावश्यिकी । अस्या आवश्य-कतायाः पूर्तियेन जनेन कृता स एव ब्राह्मणः । अयमेव च सात्विकः, शिक्षितः, सदा-चारी च ब्राह्मणः समाजस्य हितैषी धर्मगुरुश्चासीत् । सर्वेऽप्यस्यानुशासनं मन्येरन् श्रद्धाभावेन चापूजयन्त एनम् । अतः स्वकर्महेतोरेव ब्राह्मणस्योन्नतताऽऽसीत् न जन्म-हेतोः । एवमेव यथा बुद्धिबलस्यापेक्षा तथैव भुजबलस्यापि । नहि बुद्धिबलेन शास्त्र-बलेन वा सर्वं कर्तुं युज्यते । नहि कोऽपि शास्त्री पण्डितो वा शास्त्रबलेन, पाण्डित्य-बलेन वा दुष्टेभ्यश्चौरेभ्यो लुण्ठकादिभ्यश्च स्वसम्पद्रक्षितुं समर्थोभवति । अतः सम्पदादिरक्षणार्थं तु एतादृशानामेव जनानामपेक्षा वर्तते येषां बाहुबलं, शस्त्रबलं, सैन्यबलञ्च वर्तते । समाजस्यायमेव वर्गः क्षत्रिय आसीत् । क्षत्रियाणाम् प्रमुखं कर्म इतरवर्णानां रक्षणमासीत् । अतएवोक्तम्—

"क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः" ।

यथा समाजे बुद्धिबलस्य शास्त्रबलस्य वा अपेक्षा, यथा च शारीरिकशक्ति-बलस्य तथैव जीवनं चालयितुं कृष्यादिव्यापारस्यापि अपेक्षा वर्तते । एतद्व्यापार-कर्मकुर्वाणा एव वैश्या आसन् येऽन्नधनादिकम्यार्जनं कृत्वा इतरवर्णानिसेवाञ्चक्रुः । शास्त्रबलेन शासकानाम् उपदेशज्ञानाञ्च विप्राणाम्, शस्त्रबलेन, शक्तिबलेन च रक्षकाणाञ्च क्षत्रियाणाम् व्यवसायिनाञ्च वैश्यानां सेवका शूद्रा आसन् । अतोऽनयो-

पर्युक्तया वर्णव्यवस्था इदं स्पष्टत एव सिद्धं यत् मूलतया निम्नोन्नतभावनया वर्ण-व्यवस्थायाः व्यवस्था नाऽऽसीत् । ब्राह्मणादयश्चत्वारोऽपि वर्णाः परस्परमेकैकस्य सहयोगिनः पूरकाश्चासन् । यथा शरीरे मुखस्योपयोगिता महत्ता च तथैव पादयोरपि । मुखं विना यदि कोऽपि वक्तुं नहि शक्नोति तदा पादाभ्यां विना चलनाभावे कस्यापि जीवनं व्यर्थमेव । मुखं यदि ब्राह्मणः तदा शूद्रः पादः । शूद्रम् विना ब्राह्मणस्य सामाजिकजीवनमपूर्णम् । ब्राह्मणं विना शूद्रस्य जीवनं न जीवनम् । एतादृश एव प्रसङ्गः क्षत्रियवैश्ययोरपि । क्षत्रियो बाहुः । बाहुं विना यथा कोऽपि कमप्युद्योगं कर्तुं असमर्थस्तथैव क्षत्रियं विना लोकस्य कर्माणि निर्विघ्नतया सम्पादयितुं कोऽपि शक्तो नाऽऽसीत् । वैश्यश्च समाजशरीरस्य ऊरु । शरीरे यथा जङ्घयोर्महत्ता तथैव समाजे वैश्यवर्णस्य । जङ्घाशरीरयथा उदरकटिमुखादिशरीरस्याधारभूतं तथैव वैश्योऽपि अन्नधनादिकस्यार्जनेन हेतुना ब्राह्मणादीनामितरवर्णानाम् जीवनस्य आधाररूप एव आसीत् । अनया विवेचनदृष्ट्या इदं सुविज्ञातं भवति यत् पूर्वकालिकी वर्णव्यवस्था कर्मपरा एव आसीत् न तु जन्मपरा ।

उपरि वर्णितां कर्मपरां वर्णव्यवस्थाम् विवेच्य जन्मानुसारमपि वर्णव्यवस्थायाः प्रमाणानि उपलभ्यन्ते । भगवता श्रीकृष्णेन वर्णव्यवस्थायाः विषये स्पष्टमेवोक्तम्—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।

अस्माकन्तु इदमेवाऽत्र कथनं यद्वर्णव्यवस्था जन्मतोऽस्तु कर्मतो वा, परं कर्मणः प्राधान्यमुभयत्रापि दृश्यते । यच्च गीतायामेव ब्राह्मणक्षत्रियवैश्यशूद्राणां कर्मविभागः स्पष्टमेव निम्नरीत्या सम्पादितः —

ब्राह्मण-क्षत्रिय-विशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपो शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥
शौर्यं तेजोधृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम् ।
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्मस्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥

गीतायां उपर्युक्तैः श्लोकैर्वर्णव्यवस्थायाः जन्मतः सिद्धिस्तु भवति, परं नायमाशयोऽस्ययद् येन ब्राह्मणकुले जन्मगृहीतं स एव सर्वपूज्यो वरीयश्च । गीतायास्तु अयमेव अभिप्रायः प्रतीयते यत् जन्मानुसारं वर्णव्यवस्थायाः स्वीकरणेऽपि कर्मणः सत्ता प्रमुखा एव । अतएव गीताया उपर्युक्तेन मन्तव्येन यत् स्पष्टं, समाजस्य सौविध्यार्थमेव

चतुर्णामपि वर्णानां कृते कर्मव्यवस्था निर्धारिता । अतो वर्णव्यवस्थायाः प्रमुख आश्रयः कर्म एवेति निर्णीतम् ।

इदानीञ्च आश्रमव्यवस्थाम् विचारयामः । यथा वर्णव्यवस्था समाजस्योपयोगितादृष्ट्या व्यवस्थापिता तथैव आश्रमव्यवस्थाऽपि । आश्रमाश्चत्वारः । ते च ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाः । भारतीयानामियमाश्रमव्यवस्था वैज्ञानिकी सर्वथा । मनुष्यजीवनेऽव्यवस्था नस्यात एवञ्च मनुष्यः लौकिकानलौकिकांश्च कामान् अधिगन्तु समर्थो भवेत्, इति मनसिकृत्वा आश्रमाणां व्यवस्था कृताप्रतीयते । यत कार्यं यस्यामवस्थायामुचितं तदेव कर्त्तव्यम् नान्यदिति आश्रमव्यवस्थायाः सिद्धान्तः । उदाहरणार्थम्, विद्याऽध्ययनं ब्रह्मचर्ये एव समुचिततया सम्भवति । विद्याध्ययनाय मस्तिष्कस्य पुष्टता तीव्रता च अपेक्ष्यते । सा च मस्तिष्कपुष्टिः शक्तिश्च ब्रह्मचर्यें एव वर्तते । नत्वन्यस्मिन्नाश्रमे । ब्रह्मचर्यजीवनं च अत्यन्तं पवित्रं जीवनम् । अतएव ब्रह्मचारी एव वेदाधिकारी नाऽन्यः । 'ब्रह्म वेदस्तदाचरतीति ब्रह्मचारी, इति परिभाषाऽपि अस्माकमुपर्युक्तामेव दृष्टिं द्रढयति ।

द्वितीयश्च गृहस्थाश्रमः । ब्रह्मचर्याश्रमे विद्याध्ययनं कृत्वा 'प्रजातन्तुं मा व्यवच्छेत्सीः, इति गुरूपदेशमनुसृत्य ब्रह्मचारी गृहमेधी सपत्नीकश्च भवति । यानि कर्माणि मनुष्यो ब्रह्मचर्याश्रमे कर्तुं नहि शक्नोति तानि गृहस्थाश्रमे सम्पादयति । गृहस्थाश्रमो मनुष्यस्य भोगाश्रमः सेवाश्रमश्च । ब्रह्मचारी कमपि सेवितुं भोजयितुञ्च असमर्थ एव भवति । परं गृहस्थाश्रमस्थो जनोऽन्येषामातिथ्यादिसेवां कर्तुं योग्यो जायते । गृहस्थाश्रमवर्ती जनः धनादिकस्य अर्जनं कृत्वा स्वकीयं जीवनं सुखेन यापयितुं शक्नोति अन्यांश्च मातापित्रादीन् सेवितुं समर्थः सञ्जायते । वस्तुतस्तु गृहस्थी वटवृक्षोपमः । यथा वृक्षो वटः सर्वेभ्यश्छायाश्रयं ददाति, तथैव गृहस्थी असंख्यानपि जनान् अनेकविधं मोदमाश्रयं च ददाति । अतो वास्तविकस्तु गृहस्थो स्वर्गाधिकारी । यच्चोक्तमपि पञ्चतन्त्रकृता विष्णुशर्मणा—

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद् दृश्यसे,
का वार्ता ननु दुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात् ।
एवं नीचजनेऽपि गृहमागते प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुस्स्वर्गदः ॥

तृतीयस्तु वानप्रस्थः । वानप्रस्थस्य स्थितिरपिस्वाभाविकी । यदा मनुष्यो गृहस्थाश्रमस्य भोगान् भुक्त्वा ग्लानिमनुभवति तदा तस्मिन् परमात्मचिन्तनस्याभिलाषा सहजा एव । अतएव वानप्रस्थी स्वकीयां पत्नीं नीत्वा वनं व्रजति । तत्र च विविधैरपि प्रकारैरध्यात्ममार्गंसेवमानो लौकिकमानन्दं लभते । अतो वानप्रस्थामादारभ्य मनुष्यस्याध्यात्मिकं जीवनंप्रचलति । अस्य आध्यात्मिकजीवनस्य पर्यवसानञ्च संन्यासाश्रमे

भवति। अयमेव संन्यासाश्रमोऽन्तिमश्चतुर्थ आश्रमः। संन्यासी एव सर्वथा त्यागी मोक्षोपासकश्च। वानप्रस्थाश्रमे पत्न्याः सहयोगो दृश्यते परं सन्यासाश्रमे नहि तस्याप्युपयोगः। अतएव संन्यासी तु योगी सन्नपि अयोगी भवति। अयमेव जीवनस्योत्कृष्टतम आश्रमः। अस्मिन्नेवाश्रमे मनुष्यो जीवनमुक्तिं विदेहमुक्तिञ्च लभते।

इयमस्माकमाश्रमव्यवस्था सक्रमा सुव्यवस्थिता च। अनया आश्रमव्यवस्थया लौकिकानि अलौकिकान्यपि चोभयविधानि प्रयोजनानि सिध्यन्ति। निश्चितमेव मोक्षो मानवस्य सर्वोन्नत उद्देश्यः। परं सामान्येन कौमारावस्थायां युवावस्थायां वा मोक्षप्राप्तिर्न सरला। अतएव भारतीयाश्रमव्यवस्थानुसारम् ब्रह्मचर्यावस्थायाम् शास्त्राणि अधीत्य, गृहस्थाश्रमे भोगान् भुक्त्वा, वानप्रस्थे धर्मादिकञ्च विविच्य जनः सन्यासाश्रमे सर्वं परित्यज्य मोक्षाधिकारी भवति।

इदानीन्तु वर्णव्यवस्थाया आश्रमव्यवस्थायाश्च अव्यवस्थया लोकस्य यादुर्गतिर्दृश्यते सा प्रत्यक्षमेव। आश्रमव्यवस्थाया अपि अतीव दुर्गतिः स्पष्टैव। आधुनिकस्तु विप्रः ब्राह्मणकर्माणि अकृत्वा ब्राह्मणकुले जन्मगृहीत्वैव स्वकीयमौन्नत्यमुद्घोषयति। नैतत् शोभनम्। अद्यतनी तु वर्णभावना अतीव निकृष्टा। एषास्माकं देशस्यावनतेः प्रमुखं कारणम्। अद्यतनास्तु नाम्ना ब्रह्मचारिणः एव गृहस्थाः धर्मकृत्यकिनः मोक्षतर्किनश्च। आधुनिकस्तु ब्रह्मचारी न वस्तुतो ब्रह्मचारी न वा गृहस्थो गृहस्थः। का कथा वानप्रस्थाश्रमस्य संन्यासाश्रमस्य वा। अनयोस्तु आश्रमयोः कोऽपि कदाचिदेव विश्वसिति। अतएव सर्वत्रैवाद्य मानवचरित्रो भ्रष्टोऽवलोक्यते। वयन्तु परमात्मानं प्रार्थयामो यत् भारतवर्षे जनाः कर्मानुसारम् वर्णव्यवस्थामाश्रमव्यवस्थाञ्चानुपालयन्तो जीवनं यापयेयुः, येन लोके लौकिकालौकिकसुखवर्षा स्यात्। सर्वथा च भद्रं भवेत्।

---

२९

# भारतीयदर्शनस्य वैशिष्ट्यम्

भारतीयदर्शनं विश्वस्य सर्वासामपि दर्शनपद्धतीनाम् सम्राड् वर्तते। न केवलमस्माद्दृशैर्भारतीयैरेवास्य महत्ता स्वीकृता, अपितु मैक्समूलर-ड्यूसनपीवो-कोलब्रुकशोपेनहरप्रभृतयोऽभारतीयाअपि भारतीयस्य दर्शनस्य सर्वाधिकम् महत्त्वं स्वीचक्रुरिति

कस्य न विदितम्। भारतीयदर्शनस्य महत्ताया अङ्गीकरणमेवात्रबीजं यद् विदेशीयैर-नेकानेकैर्विद्वद्भिः स्वस्व-दर्शनानामनुशीलनमकृत्वाऽस्य दर्शनस्याध्ययनाय स्वकीयं जीवनमेव समर्पितम्। थीबोप्रभृतीनाम् विदेशीयानाम् विदुषां ब्रह्मसूत्रशङ्करभाष्या-दिग्रन्थानामनुवादकार्यम्, ड्यूसनादीनाञ्च औपनिषदादिसिद्धान्तानाम् पर्यालोचनञ्च भारतीयदर्शनस्य महनीयतामेव प्रदर्शयति। किमस्यभारतीयदर्शनस्य महत्त्वज्ञानस्य निदानमित्येव विवेचनमत्रास्माकम् प्रकृतो विषयः। पूर्वन्तु यादृशं विपुलं साहित्यं भारतीयदर्शनस्य वर्तते तादृशं विश्वस्य कस्यापि दर्शनस्य न वर्तते। यथा चोपनिषद्-ग्रन्थेषु, सूत्रग्रन्थेषु, विभिन्नभाष्यग्रन्थेषु, तन्त्रग्रन्थेषु, पुराणग्रन्थेषु, गीतादिषु बहुषु ग्रन्थेषु अनेकानेकेषु चान्येष वाचस्पतिमिश्रादिप्रणीतेषुभामत्यादिग्रन्थेषु आधुनिक-ग्रन्थेषु च स्पष्टमेव दर्शनशास्त्रस्य विशदम् विवेचनं कृतं वर्तते। अयमपि हेतुर्भारतीय-दर्शनस्य सर्वाधिकप्रचारे गणनीय एव।

भारतीयदर्शनस्योपरिनिर्दिष्टे च साहित्ये प्रकटिता विचारधाराऽपि कीदृशी महत्त्वपूर्णेति यूयं सर्वे जानीथ एव। कश्चित् पृच्छति चेद् भारतीयदर्शनस्य बौद्धवेदा-न्तादिषु विविधासु दर्शनपद्धतिषु कस्याः महत्त्वं यूयम् निर्णीयते, इति प्रश्नेऽस्माकमिदं निवेदनं यद् भारतीयदर्शनस्य कानिचिदेतादृशानि विचाराणि सन्ति येषाम् प्रभावः स्वदेशे विदेशेषु च प्रायशः स्वीक्रियते। एतेष्वेव विचारेषु भारतीयदर्शनस्य वैशिष्ट्यम् सन्निहितं दृश्यते।

उपनिषन्मूलस्य भारतीयदर्शनस्येयं प्रथमा विशेषता यदस्मिन्नात्मवादसिद्धा-न्तस्य विवेचनं सम्यक् कृतं वर्तते। स्वकस्यैकात्मवादसिद्धान्तस्य प्रतिपादकत्वादस्योप-योगिता विश्वस्य सर्वेषामपि जनानांकृते दृश्यते। एवंवास्य सार्वजनीनता। एकात्म-वादसिद्धान्तस्यैवाधारेण विश्वबन्धुत्वस्यापि भावना फलवती भवितुं शक्यते। विश्व-शान्त्यै कृतेऽपि महन्माहात्म्यमस्य सिद्धान्तस्य।

मोक्षसिद्धान्तश्चास्य भारतीयदर्शनस्यापरम् वैशिष्ट्यम्। प्रत्येकस्मिन्नपि मानवे सुखेप्सा स्वाभाविकी। मोक्षसिद्धान्तस्य चोद्देश्यमलौकिकमानन्दमिति तु स्पष्टमेव। भारतीयदर्शनस्य सर्वाधिकप्रख्याते प्रशस्ते चाद्वैतसिद्धान्ते आत्मबोध एव मोक्षः परि-गण्यते। धर्मानुप्राणता भारतीयदर्शनस्य तृतीयाऽप्रतिमा विशेषता अस्माकं धर्मः मोक्ष-स्यैवपूरकः। अतएव धर्मस्येयंपरिभाषाकृता भारतीयैः—"यतोऽभ्युदयनिःश्रेयससिद्धिः सधर्मः" भारतीयधर्मे या कर्मकाण्डव्यवस्था वर्तते साऽपिचित्तवृत्तिशुद्ध्यर्थमेव। अतोभारतीयदर्शने कर्मणोऽपि महत्त्वं स्वीकृतम्। धर्मयुतेनकर्मणैव मानवो मोक्षाधिकारी जायते। एतद्वैशिष्ट्यमतीवापेक्षितं लौकिकव्यवहारसौकर्यायेतितु स्पष्टमेव व्यज्यते।

साधनापक्षसम्पन्नता चास्माकं भारतीयदर्शनस्य चतुर्थं वैशिष्ट्यम्। भारतीयै-दार्शनिकैर्न केवलम् तर्कपद्धतिद्वारा भारतीयदर्शनस्यानुशीलनङ्कृतमपितु तैः 'श्रोतव्यो

मन्तव्योनिदिध्यासितव्यः' इति प्रक्रियाद्वारा आत्मानुभवोऽपि सम्प्राप्तः । अनेनेदं स्पष्टं यद् भारतीयानां दर्शनं वाग्जालमात्रमेव न वर्ततेऽपि तु साधनात्मकमपि । अद्यतनाः अमेरिका-इङ्गलैंडादिदेशानाम् विदेशीया अपि भारतीयसाधनाया रहस्येनात्यन्तम् प्रभाविताः सन्ति । इदानीमेव भारतीययोगिनः महर्षिमहेशस्य यौगिक-साधनां दृष्ट्वा विदेशीया 'बीटिलादयोऽधिकमाकृष्टाः । पूर्वमपि विवेकानन्दस्याध्यात्मिकसाधनयैवाकृष्टाः अमेरिकादिदेशानाम् वासिनो विदेशिनोऽत्यधिकाश्चर्यचकिताः सञ्जाताः ।

तर्कपद्धतिर्भारतीयदर्शनस्य पञ्चमीविशेषता । भारतीयदर्शने सिद्धान्तानामारोपणमकृत्वा तर्कशैल्या तेषाम् प्रतिपादनं विहितमस्ति । यद्यपि विदेशीयैरपि 'लाजिक' विषये तर्कशास्त्रस्यैव विवेचनं कृतम् वर्तते, परं भारतीयदर्शनान्तर्गतं न्यायदर्शने तर्कशास्त्रस्य यद् विशदनिरूपणम् दृश्यतेतदप्रतिममेव । तर्कपद्धतिरेवाऽत्र वैशिष्ट्येन हेतुर्यद् भारतीयं दर्शनं विदेशिनामपि सरलतया बुद्धिगम्यं भवति ।

भारतीयदर्शनस्य षष्ठी विशेषताऽस्यक्रमिकता वर्तते । साधारणतया बाल्यावस्थायाम् मोक्षेहा न सङ्गता । अतएव भारतीयदर्शनपरम्परया ब्रह्मचर्याश्रमेऽध्ययनम्, गृहस्थाश्रमेगृहस्थधर्मपालनम्, वानप्रस्थाश्रमेवानप्रस्थानुकूलञ्च धर्ममनुपाल्य संन्यासाश्रमे मोक्षाय कृते प्रयतितव्यम् । अनया परम्परया सामाजिकव्यवस्थाऽपि सुस्थिरा जायते । शङ्कराचार्यादयश्च ब्रह्मचर्यावस्थायामेव कथम् मोक्षाधिकारिणः सञ्जाता इतितु न वक्तव्यमदपवादाः सर्वत्र सर्वदा च सम्भवा एव । पूर्वजन्मसंस्काराणामाधारे तु कोऽपि कस्मिन्नप्याश्रमे मोक्षलाभं कर्तुं समर्थ इति नान्यथा प्रलापकर्मः । यदुक्तमेव स्पष्टं गीतायाम्—

"अनेकजन्मसंसिद्धस्ततोयाति परांगतिम् ।'

व्यावहारिकता भारतीयदर्शनस्य सप्तमीविशेषता । भारतीयदर्शनं केवलमाध्यात्मिकमेव नास्ति, अपित्वस्य व्यावहारिकी विशेषताऽपि सर्वथा सुविज्ञाता । का कथाऽन्येषाम्, अद्वैतवादसिद्धान्तप्रतिपादकेनाचार्यशङ्करेणापि जगतः सत्तां साधयितुं जगतो व्यावहारिकसत्ता स्वीकृता । एवमद्वैतिनाऽनेनाचार्येण ब्रह्मणः पारमार्थिकी सत्ता, जगतश्च व्यावहारिकी सत्ताऽङ्गीकृता । न केवलमद्वैतवादिभिरेवाचार्यैर्व्यावहारिकजगतः सत्तास्वीकृताऽपितु शून्यवादसिद्धान्तप्रतिपादकैर्बौद्धैरपि जगतः व्यवहारपक्षोऽङ्गीकृत एव । यदुक्तमेकेन बौद्धाचार्येण—'व्यवहारमनाहृत्य परमार्थो न विद्यते' । अतएव व्यावहारिकसत्तां स्वीकुर्वद्भिराचार्यैर्जगन्मिथ्यात्वमपि प्रतिपादयद्भिः जगतः सत्ता शशशृङ्गवत् खपुष्पमिव वा नोदीरिता । एष एवाद्वैतवेदान्तस्य व्यवहारपक्षो यस्तं लोकोपयोगितादृष्ट्यापि महत्त्वपूर्णं साधयति ।

आचारपक्षश्चास्माकं दर्शनस्याष्टमम् वैशिष्ट्यम् । भारतीयजीवने आचार-

दर्शनस्यात्यधिकम् महत्त्वं स्वीक्रियते । आचारसम्बन्धिमहत्त्वमेवाकलय्योक्तिरियं प्रसिद्धा: —

आचारहीनान्न पुनन्ति वेदाः

आचारस्याभावे वेदानामपि वैयर्थ्यमाचारमहत्त्वस्पष्टमेव प्रकटयति । अस्मादेवहेतोर्भारतीयदर्शने आचारस्य महिमा स्वीकृतः । आत्मबोधाय कृते चित्तशुद्धेरपेक्षाऽऽचारस्यैव मूल्यवत्ताम् प्रदर्शयति । अहिंसासत्यमस्तेयादयश्च भावाः सदाचारस्य प्रतीकरूपाः सन्ति, एवञ्चैतद् विपरीताः हिंसादयो भावाः दुराचरस्य ।

भारतीयदर्शनस्य नवमी विशेषता शैलीसम्बन्धिनी । भारतीय दर्शनग्रन्थेषु प्रायशः दर्शनसिद्धान्तानाम् प्रतिपादन सरलतया वैज्ञानिकशैल्या कृतमस्ति । ब्रह्मसूत्रभाष्यकर्तुः शङ्कराचार्यस्य भाषाशिल्पमत्र विशेषतयोदाहरणीयम् । अस्यैवैतत्फल यत् न केवलमस्माकम् भारतीयानामेवापितु सहस्राण्यपि विदेशीयानामभिरुचिर्भारतीयदर्शनस्याध्ययनं कर्तुमुत्पन्ना ।

सङ्केतरूपेणात्र भारतीयदर्शनस्य यासाम् विशेषतानामुल्लेखो विहितस्तदतिरिक्तमपि गहनविचारपद्धत्याद्याः अनेकाः विशेषताः सन्ति यासामन्यदर्शनेष्वभाव एव दृश्यते । अतश्च विश्वदर्शनक्षेत्रे भारतीयदर्शनस्य या प्रतिष्ठा दृश्यते सा सर्वथा समीचीनैव ।



१०

# आधुनिकोऽद्वैतवादः

यद्यपि सत्यमेकमद्वितीयमपरिवर्तनीयं शाश्वतञ्च वर्तते परं तस्यापि विभिन्नकालवर्तिभिर्विचारकैर्विविधरीतिभिर्विचारः क्रियते । एतच्चसत्यं साक्षात्कर्तुमनेक विधोपायाश्च अन्विष्य प्रस्तूयन्ते । एतस्यैवेदं फलं यदुपनिषत्प्रतिपादितसत्यस्य संहितशैल्या व्याख्यातुर्ब्रह्मसूत्रस्य शङ्कराचार्यरामानुजप्रभृतिभिराचार्यैर्विभिन्नदृष्टिकोणैर्भाष्यरचना सम्पादिता । एकोनविंश-विंशतितमशताब्दौ भारते प्राधान्येन विविधविषयाणामनवीनतायाः युगो वर्तते । अत एव अद्वैतवादसिद्धान्तस्य आधुनिकदृष्ट्या विवेचन-

स्याप्यवसरोऽस्मिन् युगेऽनायास एव समायातः। अस्य प्रधानं कारणन्तु इदमेव प्रतीयते यदाधुनिके युगे आध्यात्मिकदर्शनापेक्षया जीवनदर्शनमतिमहत्त्वपूर्णमेव गण्यते। जीवनदर्शनस्य पुनर्विचारस्य चायमेव हेतुः प्रतीयते यत् प्राचीनेषु आध्यात्मिकग्रन्थेषु जीवनोपयोगिषु विचारेषु सत्स्वपि तेषां विचाराणाम् प्राबल्येन समुद्घोषो न हि विधीयते। अनेनायमाशयस्तु स्पष्ट एव यत् प्राचीनेषु अपि आध्यात्मिकग्रन्थेषु नहि जीवनदर्शनस्याभावोऽपितु विस्ताराभाव एव वक्तव्यः। अतोह्यूसनप्रभृतीनां जर्मनदेशीयानाम् विदुषामिदम्मतमतमेव यत् उपनिषद्दर्शने आचारदर्शनस्य जीवनदर्शनस्य चाऽभाव एव प्रायशो दृश्यते। परमद्वैतवेदान्तादिदर्शनपद्धतिषु जीवनोपयोगिसिद्धान्तेषु सत्स्वपि तेषां सिद्धान्तानामाधुनिकदृष्ट्या विचारः सङ्गतो महदुपयोगी च वक्तव्यः। अत एव रामकृष्णपरमहंसविवेकानन्दारविन्दघोषप्रभृतिभिरनेकैर्भारतीयैर्दार्शनिकैरद्वैतसिद्धान्तस्य नवीनदृष्ट्या विवेचनं सम्पादितम्। इदानीमेतेषां दार्शनिकानां विचाराणाम् विवेचनेनाधुनिकाद्वैतवादस्य स्वरूपः स्पष्टीक्रियते।

## रामकृष्णपरमहंसस्य दार्शनिकः सिद्धान्तः

रामकृष्णपरमहंसो भारतीयः समन्वयकर्ता दार्शनिक आसीत्। अत एवास्यहृदि ज्ञानिनाम, भक्तानाम्, निर्गुणोपासकानां, सगुणोपासकानां, प्राचीनदार्शनिकानामर्वाचीनविचारकाणाञ्च कृते समान एवादर आसीत्। भगवत्याः महाकाल्या उपासकोऽपि परमहंसोऽद्वैतसिद्धान्तस्यैव प्रतिपादक आसीत्। शाङ्करवेदान्तसमानमेव माया परमहंसेन ईश्वरस्य शक्तिः स्वीक्रियते। परं मानवसेवा परमहंसदर्शनस्य प्रमुखा विशेषता। मानवसेवया पुरुषः परमात्मनं सरलतया प्राप्नोतीत्यपि अस्य वैशिष्ट्यम्। मानवसेवामेवोद्दिश्य परमहंसेन अनेकानामपि आश्रमाणां स्थापना कृता वर्तते, येषु विविधव्याधिव्याधितानां चिकित्सादिकी सेवा विधीयते। परमहंसदर्शनस्यायं लोकसेवापक्षोऽस्य दर्शनस्य जीवनोपयोगित्वमेव साधयति।

## विवेकानन्दस्य दार्शनिकः सिद्धान्तः

विवेकानन्दस्तु परमहंसस्य रामकृष्णस्य शिष्य एवासीत्। दार्शनिकेनानेनाऽद्वैतसिद्धान्तस्य व्यावहारिकपक्षस्य वैशिष्ट्येन समर्थनं कृतम्। विवेकानन्दस्य व्यावहारिको वेदान्तः प्रख्यात एव। विवेकानन्ददर्शनस्यायम् महत्त्वपूर्णः सिद्धान्तो यदयम् मायायाः मिथ्यात्वं नहि स्वीकरोति अतो जगदपि विवेकानन्दविचारे मिथ्या नासीत्। दर्शनस्य व्यावहारिकीम् महत्ताम् प्रतिपादयताऽनेन दार्शनिकेन व्यावहारिकताया अभावे कश्चिदपि दार्शनिको विचारो बौद्धिकव्यायाममात्रमेव मन्यते। स्वामिनो विवेकानन्दस्य दर्शनस्यायमपि प्रबलः पक्ष आसीत् यत् सः साध्यमिव साधनमपि महत्त्वमदात्।

## अरविन्दघोषस्यदार्शनिकः सिद्धान्तः

भारतीयेषु आधुनिकेषु दार्शनिकेषु अरविन्दघोषस्य प्रसिद्धिः योगोपासकदार्शनिकरूपेण वर्तते। अरविन्दस्य दार्शनिकः सिद्धान्तः शिवाद्वैतवाद एव वक्तुं शक्यते। अरविन्दस्य शिवाद्वैतमते शिव ब्रह्मरूपमेव चित्शक्तिश्च शिवस्य अपृथग्भूता शक्तिः। जगच्च शिवस्य चित्शक्तेरेव परिणामः। अतोऽरविन्ददर्शने जगदपि शिवस्वरूपमात्रम्। अतोऽरविन्देन जगतो मिथ्यात्वं निराकुर्वता स्पष्टमेवोक्तम्—

'I do not agree with the view that the world is an illusion, Mithya.'

अरविन्दस्य प्रमुखसिद्धान्तोजडचेतनवादसिद्धान्तः। अरविन्दस्य मते जडचेतनवादसिद्धान्तानुसारं जडमपि जगत्चेतनसमन्वित वर्तते। परमज्ञानकारणात् जीवो जगतश्चिद्रूपतायाः दर्शनं कर्तुमक्षमः। अतो जगतश्चेतनतां सत्यताञ्च स्वीकृत्य अरविन्देन व्यावहारिकदर्शनस्य प्रतिपादनमेव विहितम्। सृष्टिश्चास्य दार्शनिकस्यमते परमात्मनो लीलामात्रमेव। परमात्मनो लीलारूपञ्चजगत् सत्यमेव भवितुमर्हति, न मिथ्या। अरविन्ददर्शने जगतः सत्ता आनन्दमयी शक्तिमयी च गृह्यते। आनन्दरूप जगदानन्देनउत्पन्नमानन्देन जीवितञ्चानन्दस्य क्षेत्र एव व्यवहारशील वर्तते। अतोऽरविन्ददर्शनं कियज्जीवनोपयोगीति स्पष्टमेव।

रामकृष्णपरमहंसाद्यतिरिक्तमन्येऽपि परमाधुनिका अद्वैतिनः सन्ति यैरद्वैतसिद्धान्तमाश्रित्य स्वकीयमाधुनिकजीवनं व्याख्यातम्। उदाहरणार्थम् विनोबादयः परमाधुनिकाः समाजहितैषिणो दार्शनिका अद्वैतदृष्टिमवलम्ब्यैव स्वकीयां विचारराशिं स्थापयन्ति। विनोबादर्शने संकुचितजीवन परित्यज्य ब्रह्मस्वरूपप्राप्तिरेव जीवनस्य परमोलक्ष्यः। एवञ्च व्यापकतमस्थितिप्राप्तिरेव विनोबामते ब्रह्मनिर्वाणम्। विनोबामहोदयस्य प्रमुखसिद्धान्तः सर्वोदयवादः। सर्वोदयवादसिद्धान्तानुसार सर्वेषामेवोदयः समर्थ्यते। सर्वोदयभावसिद्ध्यर्थं विनोबाऽऽचार्येण समत्वसिद्धान्तस्याश्रयो नीयते। स्वकीयेसाम्यसूत्रनामके पुस्तके आचार्येणानेन समत्वसिद्धान्तस्य विस्तृतम् मौलिकञ्च विवेचन कृतम्। साम्ययोगसिद्धान्तमनुसृत्याचार्येण मनुष्याणां पशूनाञ्च मध्ये भेदस्य निराकरणमेव सम्पादितम्। अद्वैतदर्शनस्यात्मैक्यविचारमाश्रित्यैवायमाचार्यो विनोबा निम्नोन्नतजातिभावनां तिरस्कृत्य सकलस्यापिमानवजातेरुदयं सर्वदा कामयते प्रयततेचेति निर्विवादम्। सर्वेषामुदयं कामयताऽनेनाद्वितीयस्य भूदानयज्ञस्य आरम्भो विहित इति को न जानाति। ग्रामदानव्यवस्थापि च विनोबाऽऽचार्यस्य महत्त्वपूर्णयोगदानमेव प्रमाणीकरोति। एवमेव रवीन्द्रनाथठाकुर-महात्मागान्धि प्रभृत्याधुनिकयुगस्य महापुरुषाणामपि विचारदृष्टिरौपनिषदम्वेदान्तमेवाश्रित्य विकासमधिगतेत्यपि सुस्पष्टमेव

सर्वथा । डाक्टरोपाह्वः राधाकृष्णन् महोदयः भूतपूर्वो भारतराष्ट्रपतिः महामहोपाध्यायपण्डितगोपीनाथप्रभृतयश्च अनेकेऽपि विपश्चिद्वर्या वेदान्तशास्त्रे भूरि भूरि कृतश्रमा अनेकेषामपि गूढतथ्यानामनुसन्धाने रताः सन्तो वेदान्तशास्त्रमभिनन्दन्तिस्म ।

---

२१

# आर्जवं हि कुटिलेषु न नीतिः

'मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति कथनानुसारं परमेश्वर एव यदा मायाशक्त्याऽविद्यया वा संवलितस्तदा का कथाऽस्य भौतिकस्य जगतः यत्र धर्मेण सह अधर्मः, पुण्येन सार्धं पापम्, न्यायेन सहान्यायः, सत्येन सहासत्यम् सौजन्येन सह च कौटिल्यं सर्वत्रैवावलोक्यते । संक्षिप्ततयैते गुणावगुणाः सदसज्जयोर्विशेषणान्येव सन्ति । ये धार्मिका पुण्यशालिनश्च न्यायप्रियाः सत्यप्रियाः सौजन्यशोभिनश्च ते सज्जनाः ये चैतद्विपरीतमधर्मपरायणाः, अपुण्यशालिनः, पापिनः, अन्यायकारिणः, असत्यप्रियाः दौर्जन्यस्वभावपराश्च ते कुटिलाः ।

सज्जनकुटिलयोः स्वभावो नितान्तमेव विपरीतः । सज्जनो यदि परोपकारी तदा कुटिलोऽपकारी । सज्जनो मधुरभाषी, कुटिलस्तु कटुवक्ता । सज्जनः परेषां सम्पत्तिदर्शनेन यदि हर्षमनुभवन्ति तदा कुटिलः ईर्ष्याभाववशोऽत्यन्तं वैकृत्यप्राप्नोति । सज्जनस्य मैत्री यदि निःस्वार्थमेव क्रमाद् वृद्धिं प्राप्नोति तदा कुटिलस्य स्वार्थसाधिका मैत्री क्रमात् ह्रासमेव याति । यदुक्तमपि—

> आरम्भगुर्वी क्षयिणी क्रमेण
> लघ्वी पुरा वृद्धिमती च पश्चात् ।
> दिनस्य पूर्वार्द्ध–परार्द्धभिन्ना
> छायेव मैत्री खलसज्जनानाम् ॥

अतो य एते स्वार्थसाधनपराः अकारणमेव परदुःखदानप्रवृत्ताः कुटिलास्तैः कीदृशो व्यवहारो विधेयः, इति विषये शास्त्रेषु विविधा विचाराः प्राप्यन्ते । शास्त्रस्यैकपक्षेण

तु एतदेव समर्थ्यते यत् कुटिलैः सहान्यैः सज्जनैरपि कौटिल्यस्यैव व्यवहारः कर्त्तव्यः। एषैव नीतिः कौटिल्यस्य चाणक्यस्याप्यासीत्। कुटिलैः सह कौटिल्यव्यवहारपोषिकाऽधोलिखिता उक्तयोऽत्र उद्ध्रियन्ते—

"व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः"
"शठे शाठ्यं समाचरेत्"
"शाम्यैत प्रत्यपकारेण नोपकारेण दुर्जनः"
"पयः पानं भुजङ्गानां केवल विषवर्धनम्"
"मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युपेयः"
"दुर्जनं प्रथमं वन्देत् सज्जनं तदनन्तरम्"

कुटिलैः सह कौटिल्यव्यवहारसमर्थकाः जनाः कथयन्ति यत् कुटिलेषु जनेषु आर्जवं (सारल्यं) नीतिर्नास्ति। अतोऽयमेवाशय एतेषां यत् कुटिलैः सह कौटिल्यस्यैव व्यवहारः श्रेयस्करः। एतेषां कौटिल्यव्यवहारसमर्थकानामयं तर्को यद् दुर्जनेन कुटिलेन सह यदि सज्जनताया व्यवहारः क्रियते तदा दुर्जनः सज्जनस्य सौजन्यं नहि स्वीकरोति अपितु सौजन्यं दौर्बल्यमेव मनुते। एवञ्च सज्जनस्य सौजन्य दौर्बल्यं मन्यमानः दुर्जनः सज्जनं प्रति अपकारकर्मणि अत्यन्तं प्रोत्साहनं लभते। यदा च कौटिल्यव्यवहारपरः शठः समाजे सौजन्ययुक्तेन सज्जनेनाऽपि कौटिल्यपूर्णशठताया एव व्यवहारं प्राप्नोति तदा सः कुटिलः सज्जनापकारकर्मणि अनुत्साहितः सञ्जायते। अतो विषान्वितसर्पफणमिव सज्जनैः दुर्जनस्यापि मुखमर्दनं कार्यमिति दर्जनैः सह दौर्जन्यव्यवहारसमर्थकानाम् मतम्। "व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः" इत्यादिकथनमनुसृत्य केषाञ्चित् त्विदं कथनं यत् ये कुटिलैः सह कौटिल्यस्य व्यवहारं नहि कुर्वन्ति ते सर्वथा पराभूता जायन्ते। उदाहरणार्थं अग्निना दह्यमानं ग्राममवलोक्य कोऽपि जनो यदि अग्नेर्जलेन विरोधं नहि करोति तदाऽग्निः समग्रमेव ग्रामम् क्षणेष्वेव भस्मसात् कुरुते। एवमेवाकृतविरोधः कुटिलोऽपि स्वकौटिल्यमपरित्यज्य सज्जनं भृशं पीडयति। अतएव माघेनाऽपि दुर्जने शत्रौ उदासीनतापूर्णव्यवहारस्य निषेध एव कृत—

"विधाय वैरं सामर्षे नरोऽरौ य उदासते।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्॥"

कुटिलैः सह कौटिल्यव्यवहारानुमोदक एकोऽपरोऽपि पक्षः स चायं यत् कश्चित् सज्जनो यदि दुर्जनस्य दौर्जन्यस्योत्तरं दौर्जन्येन न दास्यति तदा प्रोत्साहितः स दुर्जनोऽन्यानपि कष्टं दास्यति। एवञ्चानेन प्रकारेण दुर्जनानामेव साम्राज्यं भविष्यति।

एवञ्च कुटिलेभ्यो भीताः जनाः अनाचारमेवाचरिष्यन्ति न तु सदाचारम् । अनेन प्रकारेण तु कुटिलैः सह कौटिल्यव्यवहारस्याभावे अन्यायस्यैव सर्वथा पोषणं सम्भाव्यते, न तु न्यायस्य । अतः कुटिलैः सह कौटिल्यपूर्णव्यवहार एव नीतिर्नतु सारल्यपूर्णः सदाचार इत्येकेषां मतम् ।

"कण्टकेनैव कण्टकमिति" उपर्युक्तसिद्धान्तातिरिक्तमेकोऽन्योऽपि सिद्धान्तोऽस्माकं धर्मशास्त्रादिग्रन्थेषु सम्प्राप्यते, स चायं यत् सदाचारवद्भिः सज्जनैः दुष्टैः सहापि सज्जनतयैव व्यवहर्तव्यम् । एतेषां सतां तु अयं विचारो यद् दुर्जनो यदि स्वकीयं कौटिल्यं न त्यजति तदा सज्जनैरपि स्वकीयः सद्व्यवहारः कथं त्याज्यः । सतां तु अयमेव सन्तोषः यत् सदाचारेण एते आत्मशान्तिं लभन्ते लोके च सदाचारस्य प्रतिष्ठा भवति । यदा कुटिलानुसारिणः सर्वे एव कुटिलाः भविष्यन्ति तदा तु जीवनं नरकत्वमेव यास्यति । अत एवैते सद्व्यवहारसम्पन्नाः सज्जनाः स्वासूनपित्यजन्ति, परं न सारल्यपूर्णं स्वकीयमाचरणम् । सौजन्यपराः सरलाश्चैते सज्जना दुर्जनानिव स्वार्थसिद्धिमेव सर्वं न मन्यन्ते । स्वार्थग्राहेण अकवलिता एते सर्वदैव परहिताय प्रवर्तन्ते । एतेषान्तु धीराणामियमेव दृढा धारणा—

"निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु<br>
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।<br>
अद्यैव मरणमस्तु युगान्तरे वा,<br>
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥"

एते सरलाः सुजनाश्च स्वकीयेन सौजन्यपूर्णव्यवहारेणान्येषामपि जीवने सौख्यमानयन्ति स्वयञ्च मानसिकीं शान्तिं लभन्ते । अतो मन्मते तु अयमेव पन्थाः न्याय्यः श्रेयस्करश्च ।

———

३२

## अद्य मयूरादद्य कपोतो वरः

विविधभोगसाधनसम्पन्नेऽस्मिन् संसारे विषयलौल्येन आकुलानामधिकाधिकतृष्णयापरिपीडितानाञ्च प्राणिनां कमप्येकम् पदार्थमप्राप्यासन्तोषः स्वाभाविकः । अस्यैवासन्तोषस्यायं परिणामो यज्जीवोऽल्पं प्राप्यापि सन्तोषमकृत्वा अनिश्चितस्य

अविकस्य कृते व्याकुलो दृश्यते। विलक्षणा दुरन्ता चेयं व्याकुलता या उत्तरोत्तरं वृद्धिमाप्नोति न च शान्ततां याति। अशान्तस्य च सुखं सर्वथाऽसम्भवमेवेति स्पष्टमेवोक्तं श्रीमद्भगवद्गीतायाम्—

नास्तिबुद्धिरयुक्तस्य नचायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥

सुखं जीवनस्य सर्वोत्कृष्टमेव प्राप्तव्यम्। सर्वे एव लोके सुखार्थिनोऽवलोक्यन्ते न तु दुःखार्थिनः। परं यद्यत्र सुखाभिलाषः स्वाभाविकस्तदाऽन्योऽपि प्रख्यातोऽनुभूतश्च सिद्धान्तो यत् 'न हि सर्वः सर्वं प्राप्नोति'। एवञ्च सर्वः सर्वमप्राप्तेसति कथं तुष्टिः स्यादित्ययं जटिलः प्रश्नः। अतश्चास्य प्रश्नस्येदमेवसमाधानं यन्मानवेन अल्पं प्राप्यैव सन्तोषोविधेयः न चानिश्चितस्य बहोः कृते व्याकुलेन भाव्यम्। ये तु वर्तमानं ध्रुवञ्चाल्पं परित्यज्य अवर्तमानस्य अधिकस्यकृते चिन्तिताः दृश्यन्ते ते तु सर्वदैव दुःखमनुभवन्ति, इति नोदाहरणमपेक्षते यदमुना वर्तमानेन सन्तोषमकुर्वाणो जनाः प्रायशोऽनिश्चितस्य अधिकस्य कृते अतिमयेनाकुलाः दृश्यन्ते। ध्रुवमनिच्छन्तो ऽध्रुवञ्चाभिलषमाणा एते सर्वत एव भ्रष्टाः भवन्ति। यच्चोक्तमपि—

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च॥

वर्तमानस्याधिगतस्य च अङ्गीकरणेन अवर्तमानस्य अनधिगतस्य च अचिन्तनेन नायमस्माकमाशयो यन्मानवेन स्वोन्नत्यै प्रयास एव न विधेयः यत् किञ्चित् प्राप्तेनैव च सन्तोषः कार्यः। मानवेन महत्त्वाकाङ्क्षाऽवश्यमेव कार्या, इत्यस्माकमपि पक्षः। परम् महत्त्वाकांक्षायाः पूर्तेरयमेव प्रकारः श्रेयस्करो यत् मानवेन वर्तमानमधिगतं स्वीकृत्य अप्राप्तस्य कृते प्रयत्नः कार्यः।

लोके लोकैस्तृष्णायाः सर्वथा त्यागोऽसम्भव एव। अतो न तृष्णा सर्वथा त्याज्याऽपि तु अतितृष्णैव त्याज्या। अतितृष्णातरलितं मनः मनुष्यं तथैव नर्तयति यथा ऐन्द्रजालिकः मर्कटान् नर्तयति। अतितृष्णाभिभूतश्च नरस्तथैवोन्मत्तो जायते यथा कोऽपिमद्यपः। अतस्तृष्णाया आधिक्यन्तु त्याज्यमेव। यच्चोक्तमपि—

अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत्।
अतितृष्णाभिभूतस्य चक्रं भ्रमति मस्तके॥

ये स्वद्य प्राप्तं कपोतमस्वीकृत्य श्वः मयूराय लालायिताः जायन्ते ते कर्त्तव्यमकर्त्तव्यम् वा न विचारयन्ति। एते तु स्वकीयं चरित्रमाचरणञ्च अविचार्य तत्लक्ष्यप्राप्त्यै अन्धतां यान्ति। अस्याः प्रवृत्तेरयं महान् दोषो यत् अद्य कपोतप्राप्त्या असन्तुष्टा श्वो यथाकथञ्चित् प्राप्तेन मयूरेणापि तुष्टिं न लभन्ते। एतदेवकुगतेः कारणम्।

अद्य कपोतप्राप्त्या सन्तोषकरणेन मानवस्येश्वरविश्वासोऽपि दृढत्वं याति। एवञ्च मानवेन यत् किमपि अद्य प्राप्यते तत् ईश्वरेण दत्तमिति बुद्ध्या ग्राह्यम्। सर्वमेव जगत् ईश्वररूपमेव। ईशावास्यमिति उपनिषद्वागपि सर्वथा प्रख्यातैव—

ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।
तेनत्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥

श्वो मयूराद्द्य कपोतो वरः, इति चाणक्यसिद्धान्तो भारतीयदैववादस्यापि पोषकः। भारतीयदैववादस्यायमभिप्रायो यन्मानवेन स्वोद्देश्यं साधयितुं यथाशक्ति सत्प्रयत्नो विधेयः। कृते च प्रयत्ने यदि उद्देश्यपूर्तिर्नहि सञ्जायते तदेयमीश्वरेच्छा एव वक्तव्या। ईश्वरेच्छा एव च दैवेच्छा। अतो भारतीयदैववादसिद्धान्तानुसारं तु किं कपोतोऽपि तु चटकाऽपि यदि प्राप्यते तदा तयैव सन्तोषः करणीयः, अपरस्य च कृते उद्योगः कर्त्तव्यः। का चटकायाः, कपोतस्य मयूरस्य वा कथा, भागधेये यदि साम्राज्यम् आधुनिकयुगानुसारञ्च प्रधानमन्त्रित्वं भविष्यति तदा तदपि प्राप्स्यत एवेति सचन्नो मे विश्वासः। पञ्चतन्त्रस्य निम्नोद्धृतः श्लोक एनामुपर्युक्तामेव विचारदृष्टिं द्रढयति—

प्राप्तव्यमर्थं लभते मनुष्यो दैवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न च विस्मयो मे यदस्मदीयं न हि तत परेषाम्॥

अस्येदं तात्पर्यं स्पष्टं यन्मानवेन अद्य प्राप्तेन अल्पेनैव सन्तोषो विधेयो न च श्वः प्राप्तव्यस्य अधिकस्य वस्तुनः लालसया अद्य प्राप्तोऽल्पोऽपि पदार्थः परित्याज्यः। अतः सिद्धमिदं यत् काल्पनिकपदार्थापेक्षया यथार्थवस्तु सर्वदैवमहत्त्वपूर्णम्। एतदेव विचार्य नीतिविशारदेन शारदाऽनुग्रहानुगृहीतेन कौटिल्येनोक्तं स्वकीये चाणक्यसूत्रे—

श्वोमयूरादद्य कपोतो वरः (५।५९)।

———

२३

## उद्योगः

अत्र जगति यावन्तः प्राणिनो वर्त्तन्ते सकलेष्वपि तेषु शुभाभिलाषः प्रकृत्या प्रयोजितोऽस्त्येवेति निश्चितम्। न चैतावतैव ते सर्वे शुभमभिमतमाप्नुवन्ति, केवलस्याभिलाषस्य फलं प्रति जनकताया अग्राह्यत्वात् एवञ्चाभिलाषे सत्यपि यं विना

शुभं नहि सिद्ध्यति सः कः पदार्थः । एवं सम्भूते प्रश्ने "उद्योगः" इत्युत्तरमवगन्तव्यम् । तदभावश्च आलस्यरूपः समस्तेच्छिन्नप्रत्यवायकर इति फलति, कथ्यते चार्थद्वयमपीदम्-निम्नोल्लिखितेन पद्येन—

आलस्यो हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वायं नावसीदति ॥

उद्योगो हि स्वेच्छितार्थप्राप्तिहेतवे सुदृढेन संकल्पेन बाधामविगणय्य प्रवृत्तिः, अयमेव चोद्योगः, उद्यमः, पुरुषकारः कर्म इति च कथ्यते । अमुमेवोद्योगंस्वीकृत्य कर्मसेवमानः आपत्परम्परां नहि परिगणयति । स च "क्लेशः फलेन हि पुनर्नवतां विधत्ते" इत्यनुचिन्तयन् प्रवर्त्तते सोत्सवं तत्र । तथाहि कोऽपि व्यापारव्यवसायी देशाद्देशान्तर परिभ्रमन् यात्रायां बहुविधानि कष्टानिसहते । कृषकश्चमृत्तिकां खनति, वपति, निजमानसरुधिरकणैरिव पृषतैश्च अद्भिः क्षेत्रं सिञ्चति, छात्रश्च कश्चिज्ज्ञानार्जनाय रात्रिन्दिवमध्ययनं कुर्वाणः सर्वविधसुखेभ्य आत्मानं विमुखीकृत्य परिश्रमं विधायप्रथमादिश्रेणीं समवाप्नोति । इयं व्यवस्था सर्वक्षेत्रेष्वपिमाननीया भवति—"नहि सुप्तस्य सिंहस्य प्रविशन्तिमुखेमृगाः" । एवसत्यपि ये—अकर्मण्याः दैवे भारमारोप्योद्योगात्—विरता भवन्ति, ते कदापि सफलतां नानुगच्छन्ति, किञ्च दैवं पुरुषकारंविना साध्यं न हि साधयति, इदमेभिः श्लोकैः स्पष्टम्—

न दैवमितिसञ्चिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥

तथा च, पूर्वजन्मकृतं कर्मतद्दैवमिति कथ्यते ।
तस्मात् पुरुषकारेण विना दैवं न सिद्ध्यति ॥

केवलं प्रमाणबाहुल्यमवलोकयद्भिरेव न, अपि तु निपुणं विभावयद्भिरपि उद्योगस्य महत्त्वं स्वीकरणीयं—प्रत्यक्षफलप्रदत्वात् । तथा हि दृष्टिपथमायाति यत्सदुद्योगवर्त्मेआश्रित्य यो जीवनकालंयापयति स सुखमश्नुते, यश्च भाग्यमाश्रित्याकर्मण्योभूत्वा तिष्ठति स समृद्धिंनाधिगच्छति । स्वकर्त्तव्यानुसरणन्तु भूतलेप्राकृतिकनियम इव दृश्यते, तथाहि—सूर्यचन्द्रौ नियमानुसारं यथासमयं उदयेते, तथा स्वकर्त्तव्यं पूरयित्वा समये एव अस्तमयेते अपि । नद्यः अनवरतं प्रवहन्ति, शरीरस्थाश्च वायवो यथाविहितकार्यसम्पादने व्याप्तास्तिष्ठन्ति । अस्यैवोद्योगस्याश्रयणेन निर्धनः लक्ष्मीपात्रतां, मूर्खो विद्यावैभवं, समग्रदुर्गुणयुतो दुष्टः गुणगणशालितां प्राप्नोति । तथाहि—राम-कृष्ण-वाल्मीकि-महावीर-बुद्धाशोक-शंकर-दयानन्द-गान्धि-नेहरू-पटेल-लालबहादुरशास्त्रिप्रभृतयो ऽध्यवसायस्य साहाय्येन लोकोत्तराणिकार्याणि सम्पाद्य स्वंस्वं जीवनं सफलञ्चक्रुः । तेषामादर्शचरितं स्मारं स्मारं मानवाः अद्यापि प्रेरणामाप्नुवन्ति । यद्यपि ये सन्ति

दैवाधीनास्तेषामपि विषये निगदितम्, यथाहि दैवं पौरुषं च खलु साफल्यरुपिस्यन्दनस्य चक्रद्वयम् । उभयोरेव चक्रयोः साहाय्येनसाफल्य लभन्तेमानवाः । अतएवोक्त केनापि विदुषा—

यथाह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तथापुरुषकारेण विना दैवं न सिद्धयति ॥

अतश्चपौरुषालम्बनमेव भाग्यस्य यथार्थाऽऽराधना । पौरुषसाहाय्यं विना भाग्याराधनं नास्ति फलदम् ।

अतः सर्वास्ववस्थासु यथाबलमुद्योगं समाश्रित्य स्वाभीष्टफलप्राप्त्यर्थं प्रयत्नो विधेयः । उद्योगशील एव, योगित्वम् परमात्मानमपि च प्राप्नोति ।

यथाह्युक्तं श्रीमद्भगवद्गीतायाम्—

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परांगतिम् ॥

---

३५

## परोपकारः

पापपुण्ययोः परिभाषाकरणं जटिलमस्ति । वयं नित्यं पश्यामः यद् एका व्यक्तिः यत्कर्म पापमवगत्यहेयदृष्ट्या पश्यति, अपरा व्यक्तिस्तदेव कार्यमतीव रुचिना प्रसन्नतया च कुर्वाणः दृश्यते । तदेवकार्यमेकस्मै जनाय पुण्यम्, अन्यस्मै पापम्, इयमपि महदाश्चर्यंकरी वार्ता । विभिन्नविद्वद्भिः स्वभावनाया अनुसारम् पापपुण्ययोः परिभाषा विहिता, परन्तु ताम्प्रति तेषां मनसि विपरीता बुद्धिः । अतएव यदा भूतले पापपुण्यावेव न स्तः तदा परिभाषैव कीदृशी, परन्तु कविव्यासेन ग्रन्थिरियम् सूक्ष्मशब्देषु प्रागेव स्पष्टीकृता—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

व्यासः अष्टादशपुराणान् विरचितवान्, परन्तु तेषां साररूपं केवलं वचनद्वयम्-यत्पुण्याय परोपकारः पापाय परपीडनम्—अर्थात् परहितसाधनम्पुण्यम्। परहितबाधनं पापमिति। परोपकारसमं नहि विद्यते कश्चिदपरोधर्मः। अस्य कथनस्यायमभिप्रायः यदस्मिन् संसारे स्वपरयोर्विभेद एव, सांसारिकी माया। वयमधिकांशकार्याणि स्वहितायैव कुर्मः, परन्तु 'स्व' इत्यस्य संकुचित क्षेत्रात् निःसृत्य 'पर' स्मै सर्वस्वदानमेव वास्तविकी मानवता। असौ धर्मः अयमेव च धर्मः पुण्यम्। आध्यात्मिकसुखाय जीवनस्य शान्त्यै च परोपकारः परमावश्यकः। प्रकृतिरपि परार्थाय स्वसर्वस्व बलिदानं विदधाति, वसुन्धरा स्वप्राणरसन्निःसार्यास्माकमुदरं परिपूरयति। लिखितमपि—

पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः।
नादन्तिशस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः॥

भारतीय संस्कृतिपृष्ठभूमौ मानवमात्रस्य कल्याणकामना सन्निहिता। इह यान्यपि विशिष्ट कार्याणि अभूवन् तानि सदैव बहुजनहिताय बहुजनसुखाय च समजायन्त। इयमेव भारतस्यादर्शसंस्कृतिः, अस्याः संस्कृत्या मूलभावना "वसुधैव कुटुम्बकम्" इति पवित्रोद्देश्योपरिआधारिता। अतएव भारतीयमनीषिभिर्विश्वकल्याणकामनां कुर्वद्भिः एव लिखितम्—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग भवेत्॥

जीवनस्य दैनिककृत्यानि यानि वयम् कुर्मः तान्येव पशुपक्ष्यादयोऽपिसतीव तल्लीनतया विदधति यथाहि 'आहार निद्राभयमैथुन च सामान्यमेतत् पशुभिर्नराणाम्।' धर्मोहि तेषामधिकोविशेषोधर्मेणहीनाः पशुभिः समानः। मानवस्योद्देश्यः मानवजीवनस्य च सार्थकता केवलमस्मिन्नेव यत्सः स्वकल्याणकामनया सार्धमेवान्येषामपि कल्याण चिन्तयेत्, अस्ति कर्त्तव्यं हि तस्य, यत्सः स्वयमुत्तिष्ठेत् अपरानपि उत्थापयेत् च। यो जनः दीनदरिद्रान् वीक्ष्य परहितं न चिन्तयति कीदृग् जीवनं तस्य। अत्र भूतले विविधाजना दृष्टिगोचरतामायान्ति। एके तु तावत्तो वर्तन्ते, ये स्वार्थसिद्धिं विनाऽपि परक्षतये चेष्टन्ते, अन्ये तु स्वार्थसिद्धया सह परार्थमपि चेष्टन्ते, इतरे तु स्वार्थसिद्धये परेषां हानिं विदधति, परन्तु केचन स्वक्षतिम् अगणयन्तः परानुपकुर्वन्ति भर्तृहरिणाप्युक्तं तेषामेव विषये—

एके सत्पुरुषाः परार्थघटका स्वार्थं परित्यज्यये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाय निघ्नन्तिये।
"उदारचरितानान्तु वसुधैव कुटुम्बकम्"

इत्यादर्शमन्त्रस्य जपपरायणाः भवन्ति साधवः। त्यागो बलिदानं च सदैव भारतीय

संस्कृत्या मूलाधारो स्तः। भारते पुरा शिविः, दधीचिः, दिलीपः, रन्तिदेवः, इत्यादयो बहवः परोपकारिणो महात्मानो जाताः। स्वल्पसमयात्प्रागेव महर्षिदयानन्दः, महात्मागान्धी, हिन्दीभाषाकविनिरालाप्रभृतयो महात्मानः विद्वांसश्चाभूवन् येषां जीवनमेव परोपकारमयी गाथा।

भारते सुचिरात् परहित साधनामयीभावना बलवती नाभविष्यत् चेत्तर्हि मानवता रसातलमगमिष्यत् निश्चप्रचमिदम्। सम्प्रत्यपि अस्त्यस्या वार्ताया अतीवावश्यकता, यन्मानवः स्वार्थभावनां परित्यज्य—

"वसुधैव कुटुम्बकं" इति सिद्धान्तमनुसृत्य मानवरक्षणाय सततं प्रयतेत्। यावत्प्रतिजनं, प्रतिव्यष्टिमेतन्मूलमन्त्रं न प्रविशेत् तावत् राष्ट्रस्य सुखसमृद्धिर्नितान्तमसम्भवा।

अतएव जनहिताय लोककल्याणाय च यथाशक्ति तत्र वर्त्मनि स्थेयं विचारचतुरैः।



२१

# अहिंसा परमो धर्मः

धर्मपरिभाषणविषये बहून्यपि मतानि दृश्यन्ते। केचित् यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः इति वाक्येन धर्मं परिभाषन्ते, केचित् चोदनालक्षणो धर्मः इत्युक्त्या धर्मस्य परिभाषां कुर्वन्ति, केचित् धारणात् धर्म उच्यते, इत्युक्त्या धर्मस्य सिद्धान्तसूत्रं प्रस्तुवन्ति केचिच्च सः धर्मः यो न बाधते धर्मम्, इत्यभिधाय धर्मस्य विचारबीजं वदन्ति। वास्तविकतात्वियं यत् अनेकरूपवतो धर्मस्य परिभाषाकरणं सरलं नास्ति। कदाचित् सत्यभाषणं धर्मः, कदाचित् असत्यभाषणमपि धर्मः। कदाचिद् यदि लालनं धर्मस्तदा कदाचिच्च ताडनमेव धर्मः। अतः परिस्थित्यनुसारं धर्मस्य असंख्यानि रूपाणि दृश्यन्ते। परं सर्वेषामपि धर्माणाम् मूलम् अहिंसा वर्तते। अत एवोक्तम् 'अहिंसा परमो धर्मः'।

का नाम हिंसा ? किञ्चास्याः स्वरूपम् ? इति प्रश्नोऽपि स्वाभाविकः। अत्र तु इदमेव वक्तव्यं यत् केवलं प्राणिवध एव हिंसा न वर्ततेऽपि तु कस्यापि विचाराणां बाधोऽपि हिंसा एव। परं किम् अहिंसासिद्धान्तं परिपालयतः कस्यापि विचारणा हिंसा न कार्या, इत्याशय अहिंसायाः ? अत्र स्वयमेव न्याय्यः पक्षो यत् सर्वेषामेवविचाराणां हिंसा हिंसा नहि भवति। उदाहरणार्थं यदि केनापि गोहत्याया विचारः क्रियते तदा तस्य विचारस्य हिंसा न कर्तव्या, इति न, अपि त्ववश्यमेव कर्तव्या। इदमपि चात्र नात्युक्तिपूर्णं कथनं यत् ये मानवाहितकारिणो ये च सर्वदा हिंसाविश्वासरताः देशद्रोहिणश्च तेषां वधोऽपि कदाचिदावश्यकः सञ्जायते। रामेण यदि रावणादीनाम्, कृष्णेन यदि कंसादीनाम्, अस्माकं देशीयैर्वीरैर्यदि भारतवर्षमाक्रमतां पाकिस्तानचीनदेशीयानाञ्च लुण्ठकानाम् जनानां वधो न कृतः स्यात्तदाऽस्माकं देशे रावणकंसादीनामेवादर्शाः स्थापिता अभविष्यन्त। इदानीञ्चास्माकं भारतराष्ट्रश्चीनदेशेन पाकिस्तानदेशेन वा एव शामितः स्मात्। धन्योऽस्माकं स्वर्गीयः प्रधानमन्त्री लालबहादुरशास्त्री, यः अहिंसासिद्धान्तस्य प्रमुखः पालकोऽपि सन्नस्माकं देशस्य आक्रान्तारम् पाकिस्तानप्रधानमयूबमुचितं समाधानं दत्तवान्। यस्य च नेतृत्वे भारतीयसेना सहर्षं सोत्साहञ्च पाकिस्तानसेनाम् जितवती। अतोऽयमेवाशयोऽस्य यत् मानवसिद्धान्तानां परिरक्षणाय एव अहिंसाया अपेक्षा वर्तते। यत्र च अहिंसया मानवहितापेक्षया अहितः सम्भवति तदा तु सर्वथा अहिंसा नोचिता, इत्येव व्यावहारिकः समन्वयः अहिंसायाः।

अहिंसायास्तु इदमेव मौलिकं तात्पर्यं यत् मानवेन सामान्यतस्तत् कार्यं न आचरणीयम्, तद्वचनं च न वक्तव्यम् येन कस्यापि चित्तं क्लेशं प्राप्नुयात्। यदस्माकं कृतेऽनभिलषितमरुचिकरं च तदन्येषां कृतेऽपि तथैव भवितुमर्हति, इत्येव अहिंसायाः मूलमन्त्रः। अतः "आत्मवत् सर्वभूतेषु" इति सिद्धान्तमनुसृत्य अहिंसापरेण मानवेन तन्न करणीयम् यदन्येषाम् प्रतिकूलम्। तच्च उक्तमेव—

"आत्मनः प्रतिकूलानि परेषां न समाचरेत्"

अहिंसाव्रतस्य पालनेन मानवस्य सर्वथा एव श्रेयः सम्पद्यते। अहिंसया आत्मबलं वर्द्धते। अहिंसासेवकश्च जनः प्रायशः सर्वेषामेव प्रियः श्रद्धेयश्च जायते। अहिंसानुयायिनि जने काचिदेतादृशी शक्तिर्जागर्ति या अधिकाधिकं लोकमाकर्षयति। अहिंसाशक्त्या तु विपक्षिणोऽपि सपक्षिणो जायन्ते, क्रूराः अपि सरलाः सञ्जायन्ते, दुर्जना अपि च सज्जनतामापद्यन्ते। किं बहुना, असम्भवानि अपि प्रयोजनानि अहिंसया सिध्यन्ति। महात्मागान्धिनोऽत्र स्पष्टं प्रत्यक्षञ्च उदाहरणम्। अहिंसया महात्मनाऽस्मभ्यं यत् स्वातन्त्र्यं दत्तं तद् युद्ध द्वारा समस्तानां भारतीयानां रक्तप्रवाहेनापि सम्भवन्नासीत्, इति नाऽधिकं ब्रूमो यत् शस्त्रास्त्रसेनारहिताः भारतीयाः विविधप्रकारशस्त्रास्त्रसुसज्जितम् आङ्गलसैन्यम् पराजेतुं अक्षमा एव आसन्। अहिंसया च

गान्धिर्महात्मा न केवलं भारतीयानामेवापितु विदेशीयानामपि श्रद्धेयः पूज्यश्च जात इति तु स्पष्टमेव सर्वथा यद् विदेशेभ्य आगता बहवोऽपि जनाः दिल्लीस्थितम् गान्धि-समाधिम् दिनेदिने श्रद्धया प्रणमन्ति।

भारतातिरिक्तं विदेशेषु अनेकानामपि गान्धिस्मारकाणाम् निर्माणं कृतम् वर्तते इत्यपि नाविदितं स्यादाधुनिकस्य लोकस्य। महात्मनः गान्धिनोऽहिंसासाहित्यञ्चापि वैदेशिकैर्जनैरतीव आस्थया श्रद्धया चाधीयते। इदानीञ्च विदेशेषु अहिंसाभक्तस्य महात्मनः गान्धिनः असंख्या भक्ता दृश्यन्ते। अतः अहिंसा प्रायः सर्वदा सर्वथा च श्रेयस्करी। भारतवर्षे तु प्रत्येकमपि गृहम् अहिंसावादिनो महात्मागान्धिनः मन्दिरम्। परमत्रेदमपि आश्चर्यास्पदं यन्महात्मागान्धिनो देशः एवाद्यहिंसायाः प्रचारकोऽपि सन् स्वगृहे हिंसायाः व्यवहारं नहि करोति। अस्यैवायं परिणामः यत् शान्तेरग्रदूते भारत-वर्षे सर्वत्रैव हिंसायाः साम्राज्यं दृश्यते। कदाचित् निर्वाचनेषु, कदाचित् परीक्षासु कदाचिच्चाद्य विद्यालयेषु हिंसायाः प्रयोगः सरलतयैव क्रियते।

अद्य हिंसाया एतादृशी उन्नतिः सञ्जाताऽस्ति यदद्य प्राणिवधः खेलमिव क्रियते। अद्य त्वस्माकं देशे हिंसैव सर्वेषां कार्याणां प्रमुखसाधनं वर्तते। अनेन समाजस्य यादृशी हानिर्जायते तदपि स्पष्टमेव। वस्तुतस्तु हिंसा मनुष्यस्य अत्यन्तमेव आक्रोशः सम्पादयति। हिंसकवृत्तिसम्पन्नस्तु मनुष्यः कदापि शान्तिं नहि प्राप्नोति। समाजे च सर्वत्र हिंसाया एव वातावरणमुत्पादयति। अतोऽयम् महापापी हिंसकः इहलोके पर-लोके च उभयत्रापि शान्तिं नह्यधिगच्छति। अत्र मनुस्मृतिकारस्यापि निम्नोद्धृतं कथनमुचितमेव प्रतीयते—

"हिंसारतश्च यो नित्यं नेहासौ सुखमेधते"

अतो हिंसाधर्मः मानवस्य सर्वोत्कृष्टः धर्मः। अहिंसायाः व्यवहारेण अन्येषां धर्माणाम् व्यवहारः स्वत एव सञ्जायते। एवञ्च अहिंसाव्यवहार एव प्रशस्तः सर्वदा सर्वथा चेति निर्विवादमेव स्वीकर्त्तव्यम्।

---

२६

## सत्यम्

इयं धारणा नितान्तं यथार्था यन्मानवः मानवजन्मातिसौभाग्यात् प्राप्नोति। इदं जीवनं देवैरपि दुर्लभम्। अस्य चराचरजगतः सकलयोनिषु मानवयोनिः श्रेष्ठा

योनिः अस्ति । यतो हि—मानवस्य सकाशेबुद्धेः असीमभण्डारः । यया स ज्ञानमर्जयति, विद्यामाप्नोति, धर्मं विदधाति । स्वबुद्धिवलात् स पराश्रितो नैव भवति । स्वसाधनाभिरसः ऐहिलौकिकसिद्धिमेव नहि अपितु पारलौकिकसिद्धिमपि प्राप्नोति, अगोचरं ब्रह्मापि स्वभावनाया आधारेण साक्षात्करोति । स हि स्वकल्याणेन सार्धं अन्येषामपि कल्याणं करोति, स स्वत्यागेन एवं बलिदानेन च स्वजातेः, स्वसमाजस्य, देशस्य च हितं करोति, अवसाने च स्वज्ञानाधारेण एव मोक्षमाप्नोति, इमाः सकलाः वार्त्ताः मानवयोन्यामेव सुलभाः, नहीतरयोन्याम् । आहारनिद्रादयः प्रवृत्तयः जगत् स्थितसकलेषु जीवेषुसुलभामनुष्येष्वपि च । परन्तुमनुष्येषु सर्वेषामपेक्षया विशिष्टः गुणः ज्ञानमेव । बुद्धावेवपूर्वजन्मसमुपार्जिताः जीवनस्यानन्ता गुणाः । मुक्तिसममूल्यं रत्नं मनुष्यजीवनमेव । इत्थं जीवन समुपलभ्यापि यद्यस्मिन्नवगुणा तिष्ठेयुश्चेत्तर्हि मनुष्यादधिकः कः खलु मूर्खः । यतोहि मनुष्यजन्मसम्प्राप्तिस्तु सारल्येन न सम्भवा । मनुष्यजीवने, जीवनस्य सुचारुतायै समृद्धयर्थञ्चादर्शगुणा ह्यपेक्षिताः । गुणहीन मनुष्यजीवनन्तु पशुतुल्यम् । आत्मसाक्षात्कारे गुणहीनस्तु उन्नतिं नहि विदधाति न च भौतिकसमृद्धिमेव । समाजे निन्दापात्रतां याति । गुणैर्विहीनस्य जनस्य विद्या नहि शोभते, नहि तस्यसुन्दरता, ऐश्वर्यवैभवादयश्च शोभन्ते स तु गन्धहीनं किंशुकपुष्पमिव निरादरताङ् गच्छति । उक्तमपि—

गुणोभूषयतेरूपं गुणोभूषयतेकुलम् ।
गुणोभूषयते विद्यां गुणोभूषयतेधनम् ॥

आदर्शं गुणैः एव मनुष्यस्य रूपं शोभते, गुणैः एव कुलं विद्याधनादयोः शोभन्ते । जीवने यत्र शिष्टताशीलता-उदारतादयोगुणाः अपेक्षिताः उल्लासयन्ति-तेषु सत्यतायाः सर्वप्रमुखं स्थानम् । अपरगुणैः केवल मनुष्याय लौकिकी मानमर्यादा-एवोपलब्धा भवति । परन्तुसत्यभाषणेन अलौकिकी समृद्धिरपिप्राप्ताभवति । सत्यस्वरूपवेत्ता, सत्यवक्ता, एव सत्यस्वरूपं परमात्मानं वेत्तुं शक्नोति । मनुष्यजीवनस्यादर्शगुणेषु सत्यभाषणं शिरोमणिः । सत्यभाषण सुमहती तपस्या । सत्यभाषणेन मनुष्यस्यानेकलाभाः । एतादृशी का सफलता, का सिद्धिः या अनया सत्यसाधनया न प्राप्यते । संसारः संघर्षभूमिः । अत्रमानवस्योन्नतिपथि पदे पदे संघर्षविधानं भवति । परन्तु यः सत्यमार्गमनुसरति स एव जयति । मिथ्यावादिनस्सन्ततमेव पराजिताभवन्ति । मिथ्यावादिनां यदिस्यात् कथमपिजयस्तर्हि नहि चिरस्थायी भवति । अतएव जगति, उत्थानप्राप्तये च सत्यवादितापरमापेक्षिताउक्तमपि "सत्यमेव जयते नानृतम्" अतएवयदिवयं जीवनपथि उन्नतिमभिलाषामस्तर्हिअस्माकं कर्तव्यं यद् वयं स्वसम्बन्धितजनैस्सार्धं सत्यंवदामः । तथा च "सत्यं वदेत्" "धर्मं चरेत्" इति सिद्धान्तमस्माभिः, अनुसरणीयम् । सत्यसम्भाषणेन मनुष्यचरित्रस्य विकासो भवति, सच्चरित्रशाली जन

एवसमाजे प्रतिष्ठां लभते । चरित्रहीनस्य जीवनं मृतवत् भवति । उक्तमपि वक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतोहतः । अस्य विपरीतं मिथ्याभाषणं महत् पापम् । मिथ्यावादीस्वकृतदुष्कृतैः उभावपि लोकौ नाशयति । मिथ्यावादिनः चरित्रहीनाः भवन्ति । प्रायः मिथ्यावादिनः दुःखमाप्नुवन्ति सन्ततमशान्तिकारणात् "अशान्तस्य कुतः सुखम्" इत्यपिसत्यम् ।

सत्यवाद्यादर्शमहापुरुषः भारतवर्षस्येतिहास ओतप्रोतः । ये सत्यरक्षार्थंभयानकविपदः हसन्तएव स्वीकृतवन्तः । ये सत्यरक्षार्थं स्वराज्यं, पत्निपुत्रादींश्चापि विक्रीतवन्तः । ये सत्यरक्षार्थं स्वप्राणानपि समर्पितवन्तः, परन्तुसत्यभाषणनियमस्य पालनमकुर्वन् । महाराजहरिश्चन्द्र एतादृशएवसत्यवादीनृपतिः अभवत् यः सत्यरक्षार्थं बहुयातना सहन्नपि सत्यपथः विचलितो नाभवत् । सत्यरक्षार्थंएव दशरथः स्वप्रियं सुतं रामं वनं गन्तुमादिदेश । अन्तेमृतश्च ।

आधुनिके युगे सत्यवादिषु महात्मनः गान्धेर्नामातीव गौरवास्पदम् । गान्धिः स्वजीवने सत्यरक्षार्थं विदेशीयशासकानामनन्तात्याचारानसहत् । परन्तु स सत्यमार्गं नात्यजत् । सत्यस्याहिंसायाश्चसिद्धान्तस्याधारेण न स्वतन्त्रताप्राप्तये देशस्य नेतृत्वमकरोत् । अन्ते सफलश्चाभवत् । देशश्च स्वतन्त्रोऽभूत् । अस्माकं पुनीतं कर्त्तव्य यद् वयं स्वजीवने सत्यमनुसरामः । सत्यभाषणेन मानवः सन्मार्गमनुसरति, स पथभ्रष्टश्चरित्रभ्रष्टश्च नैव भवति, तस्य जीवनेशान्तिः असन्तोषश्च नैवभवति । अतएवोक्तिमिमामनुसृत्यैव सत्यभाषणं विधेयम्—

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम् ।

---

२७

## सत्संगतिः

अस्मिन् जगति न कोऽप्येतादृशः चराचरो यः संसर्गं विना स्थातुं पारयति । निश्चेतनाः पादपवीरुधादयोऽपि संगेनैव जीवनं धारयन्ति, समृद्धिं चाप्नुवन्ति । विपिनलता समीपस्थं पादपमाश्रयति । वनमृगीमृगमिलना प्राणान् धारयितुनैव प्रभ-

विहितवान् । सत्सङ्गतेः प्रभावः बाल्यावस्थायांविशेषतयासंभवति । यतो हि तेषां चेतांसि स्वच्छानि भवन्ति, धवलवस्त्रेषु राग इव तेषां मनःसु गुणदोषोप्रसरतः यद्येकवास्ते कुपथगामिनो भवेयुश्चेत्तर्हि कोटिप्रयत्नैरपि सन्मार्गे तेषामागमनमतीव-दुष्करम् । यथाहि—मृत्तिकापात्रेषु परिपक्वावस्थायाप्राक् यादृशानि चिह्नानि संजायन्ते तादृश एव तिष्ठन्ति भग्नसमयपर्यन्तं । अतः शिशवः कुसंगत्या सदैवपरिवर्जनीयाः । कुसंगपतितोमानवःसद्वृत्तद्वारैव रक्षितो भवति, स च न कर्त्तव्यमपेक्षतेशीलादिकमपि अविगणय्य च यथेच्छमाचरति । अनेकशस्साधवोऽप्येतस्या प्रभावेण सन्मार्गभ्रष्टास्स-मभूवन् । आह कश्चिदमुकविः —

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।
न दुष्टजनसम्पर्कः सुरेन्द्रभवनेष्वपि ॥

भवत्येतादृशः प्रभावः खलु सत्सङ्गतेः । सत्सङ्गतिः कस्यापि जनस्य चरित्रबोधविकास-कलगुणानामाकरश्च । महाकविभर्तृहरिणा सम्यगेव निगदितम्—

जाड्यं धियो हरतिसिञ्चति वाचिसत्यम्—
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्ति—
सत्सङ्गतिः कथय किन्न करोति पुंसाम् ॥

———

३८

# धैर्यम् (साहसे श्रीः निवसति)

चक्रवत्परिवर्त्तनशीलेऽस्मिन् सुखदुःखात्मके संसारेऽभीप्टस्य प्राप्तौ जातेन काठिन्येन तस्य सर्वथा प्राप्त्या वा मानवस्य हृदयचाञ्चल्यं स्वाभाविकम् हृदयचाञ्च-ल्येन च व्यग्राः न केवल साधारणाः मानवा अपि तु विशिष्टा अपि पुरुषाः स्वमनो-निग्रहाभावात् कर्त्तव्याकर्त्तव्य निर्णेतुमसमर्था एव प्रतीयन्ते । किमधिकम्, महाबलिष्ठो वीरो धीरश्च अर्जुनोऽपि स्वमनोनिग्रहं वायोरिव दुष्करम् मनुते स्म । यद् गीतायां स्पष्टमेव—

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥

एवञ्च कृत्यस्य अकृत्यस्य च निर्णयः धैर्येणैव कर्तुं युज्यते न तु चाञ्चल्येन । धैर्यं नाम किञ्चिदेतादृशं मानसिकं तत्त्वं यच्चपलां हृद्गतिं सर्वतो निवार्य कस्मिंश्चिदेकस्मिन्नेव कर्मणि केन्द्रीभूतां करोति । तस्यामेव च स्थितौ मनुष्यः किमपि कार्यं साफल्येन कर्तुं शक्नोति । धैर्यबलं महद्बलम् । धैर्यबलेन अकिञ्चनो दुर्बलातिदुर्बलश्चापि प्राणी तुच्छातितुच्छश्चापि जन्तुः स्वकार्यं साधयितुं क्षमते । पञ्चतन्त्रीया टिट्टिभकथा उदाहरणरूपेणात्र उद्धर्तुं युक्ता प्रतीयते । दीनो हीनश्चापि टिट्टिभः समुद्रेण स्वाण्डेषु विनष्टेष्वपि स्वकीयं धैर्यं न तत्याज, अपितु अगाधजलपूरितं महद्विस्तृतञ्चापि जलधिं शोषयितुमेव प्रयत्नं कृतवान् । इयञ्च कथा यत् टिट्टिभधैर्यात् प्रसन्नः समुद्रः टिट्टिभाण्डान् समर्पयामास एतामेव च कथामाश्रित्योक्तं तत्र पञ्चतन्त्रे विष्णुशर्मणा—

त्याज्यं न धैर्यं विधुरेऽपि काले,
धैर्यात् कदाचिद् गतिमाप्नुयात् सः ।
याते समुद्रेऽपि च पोतभङ्गे,
सांयात्रिको वाञ्छति तर्तुमेव ॥

धैर्याभावे तु जनाः सर्वथैव अगतिं प्राप्नुवन्ति । धैर्याभावे एव परीक्षार्थिनः ज्ञातमधीतञ्चापि सर्वथा विस्मृत्य अनुत्तीर्णाः सञ्जायन्ते । एवञ्चाध्यापकास्तत्तद्विषयाणां ज्ञातारः सन्तोऽपि धैर्याभावे स्वकीयमध्यापनरूपं कर्म पारयितुं न क्षमन्ते, छात्राणां च हास्यपात्रतामेव भजन्ते । किं बहुना, राजा रङ्कोवा, अध्यापकश्छात्रो वा सेव्यः सेवकश्चापि वा यदि धैर्यमकृत्वाऽविचार्य च सहसैव कार्यं निष्पादयति तदा सोऽकल्याणमेव पश्यति न श्रेयः । अतएव भारविनाऽपि सम्यगुक्तम्—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥

लक्षैकरूप्यकैः क्रीतश्चायं श्लोकः कथं गर्भस्थस्य शिशोः प्राणान् ररक्ष इति कथाऽपि संस्कृतसाहित्ये श्रूयत एव । सेयं किंवदन्ती यत् कश्चित् श्रेष्ठी श्वशुरगृहावमानितस्य भारवेरमुं रत्नं श्लोकं लक्षैकरूप्यकैः क्रीतवान् । क्रीतञ्चेमं श्लोकं श्रेष्ठी स्वेच्छानुसारं पात्रेषु पर्यङ्किकासु खड्गादिषु च लिखितवान् । एवञ्च यदा वाणिज्यार्थं विदेशं गतः श्रेष्ठी बहुकालानन्तरं स्वगृहं निवृत्तस्तदा स्वगृहे अदृष्टपूर्वं शिशुमेकं दर्शयामास । शिशुञ्च तं दृष्ट्वा शङ्कितः सञ्जातः श्रेष्ठिन्याश्चरित्र विषये । शङ्कितः क्रुद्धश्च श्रेष्ठी श्रेष्ठिनीं दुश्चरित्रां मत्वा तस्याः प्राणानपहर्तुं यदा खड्गं गृहीतवान् तदा तेन खड्गे लिखितं 'सहसा विदधीत न क्रियामिति' श्लोकं दृष्ट्वा

प्रहारात् निवृत्तम् । धैर्यंयुक्तेन च चेतसा यदा तेन विचारितं तदैतद् स्मृतं यत् यदाऽहं विदेशं गतस्तदाऽयं शिशुः स्वमातुर्गर्भे आसीत् एवञ्चायं मामकीन एव पुत्रः । अतो धैर्यस्य मूल्यं स्पष्टमेव । एवमेव धैर्येण बहुविधानामपि अनर्थानां निवारणं कर्तुं सम्भाव्यते ।

अतएवोक्तमस्ति चाणक्यसूत्रे—
'साहसे श्रीनिवसति'

धैर्यशाली पुरुषः महति विपद्कालेऽपि व्यग्रतां न याति । धैर्यधनेन च सम्पन्नो धीरः महत्य अपि विपदः विकटानपि शत्रूंश्च जयति, दुर्गमानपि मार्गान् सुगमान् करोति असम्भवञ्च सम्भवतामप्रति । आपत्कालेऽपि मानवेन धैर्यधनस्य त्यागो न विधेय इत्येव श्रेयस्करः पन्थाः । अतएव सूक्तमपि—

विपदि धैर्यमथाभ्युदये क्षमा,
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ,
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

---

२९

## विश्वशान्तिः

विश्वस्य सर्वेषामपि मानवानामुद्देश्यो यथाकथमपि सुखप्राप्तिरेव दृश्यते । आस्तिकाः नास्तिकाश्च, पुण्यात्मानः पापिनश्च, विद्वांसो मूर्खाश्च, सज्जना दुर्जनाश्च, गृहस्थिनो विरक्ताश्च, धनिनो निर्धनाश्च सर्व एव सुखकामनापूर्त्यै प्रयतमाना अवलोक्यन्ते । सुखप्राप्त्यै प्रयतमाना अपि लौकिकाः जनाः सुखं कथं न प्राप्नुवन्ति इत्यस्योत्तरं श्रीमद्भगवद्गीतायामेव दत्तम्—

'अशान्तस्य कुतः सुखम्'

गीतायाः उपर्युक्तस्य उद्धरणस्यायमाशयो यत् सुखप्राप्तये चित्तशान्तिरनिवार्या यथा व्यक्तिगतजीवने सुखप्राप्तये चित्तशान्तिरपेक्ष्यते तथैव सकलेऽपि विश्वे सुखसंस्थापनार्थं विश्वशान्तिरनिवार्यरूपेणापेक्ष्यते ।

व्यक्तिगतजीवने चित्तशान्त्यै एतदपेक्ष्यते यद्व्यक्तिरन्यैः सह एतादृशम् व्यवहारं कुर्यात् येनान्येषां कार्यव्यवहारे कीदृशोऽपि बाधो न भवेत्। एतादृशेन व्यवहारेणैव जीवने सुखस्य स्थापना भवितुं शक्यते। विश्वेऽपि शान्तिस्थापनायै प्रत्येकस्यापि देशस्यायम् विधेयो यत्नेन तत् कार्यं न कर्त्तव्यम् यदन्येषां देशानामुन्नतिमार्गे विघ्नमुत्पादयति। अतएव हिंसानिमित्तम् आणविकाद्यस्त्राणामाविष्कारः विश्वशान्तिलक्ष्ये बाधक एव न साधकः। एतदेव कारणं यद् विश्वशान्त्यै प्रयतमानेनाऽस्माकं देशेन अणुशक्तेर्विकासो भारतवर्षस्य विकास दृष्ट्यैव कृतः।

विश्वशान्तिस्थापनायै भारतवर्षस्य योगदानं निश्चयमेवान्यैर्देशैरनुकरणीयमस्ति। आश्चर्यमस्ति यद् विश्वशान्तिमुद्घोषयन्तोऽपि सर्वे देशाः शान्तिपूर्णम् व्यवहारं न कुर्वन्ति।

विश्वशान्त्यै कृते एव अन्ताराष्ट्रियसंघस्य स्थापना अमेरिकादेशे कृताऽस्ति। इदानीमस्य नवस्य प्रधानः कर्तुं वालधाइम महोदयो वर्तते य स्वशक्त्या सर्वेष्वपि देशेषु शान्तिं स्थापयितुं प्रयतते। परम् बहवोऽपि देशाः राष्ट्रसंघस्य सदस्याः सन्तोऽपि तेन निर्मितानां नियमानामादेशानाञ्च पालनं न कुर्वन्ति, यथा पाकिस्तानप्रभृतयो देशाः। विश्वशान्त्यै कृते एतदावश्यकीयम् यत् सर्वेऽपि देशाः राष्ट्रसंघस्य सदस्या स्युरेवञ्च तस्य नियमानामादेशानाञ्च साकल्येन पालनं कुर्युः। अथ च विश्वशान्त्यै इदमपि अपेक्ष्यते यत् शक्तिसम्पन्नाः देशाः विश्वशान्तिसमर्थकानाम् भारतादिदेशानां सर्वविधं साहाय्यं कुर्युः विश्वशान्तिबाधकेभ्यश्च देशेभ्यः कमपि सहयोग न दद्युः। परमिदानीं दृश्यते यत् विश्वशान्तिबाधकेभ्यः पाकिस्तानादिदेशेभ्योऽन्यैरमेरिकादिदेशैः कौटिल्यपूर्णनीतिना सर्वविधः सहयोगः प्रदीयते। न दूरम् यदाऽमेरिकादत्तसर्वविधसाहाय्येन भारतवर्षे आक्रमणं कृतम्। परम्, भारतीयानाम् विलक्षण वीरतया पाकिस्तानदेशस्य सेना पूर्णतया पराजिता। किमधिकम्, अमेरिकाप्रदत्तानाम् पाकिस्तानस्य पैटनाभिधटैङ्कानां ध्वंसो भारतीयैर्विशेषहेलया एव निष्पादितः। भारतीयानामेतद् वैशिष्ट्यमवलोक्य अमेरिकादेशस्य निवासिनो विशेषज्ञाश्चात्याश्चर्यानुभव कृतवन्तः। बहवश्च वैदेशिकाः वैज्ञानिकाः पैटनटैङ्कानाम् भेदनस्योपायमपि भारतीयविशेषज्ञान् पृष्टवन्तः। अतएवास्माकमयमेवाशयो वर्तते यत् विश्वशान्तिबाधकेभ्यः पाकिस्तानादिदेशेभ्योऽमेरिकादिदेशानामस्त्रशस्त्राणां दानं सर्वथैवानुचितम्। राष्ट्रसंघनैतादृशदेशानां कृते दण्डविधानमपि कर्त्तव्यम्। अन्यच्च विश्वशान्तिस्थापनाय राष्ट्रस्य नेतृभिः स्वनिकृष्टस्वार्थान् न्यक्कृत्य विश्वशान्तिञ्चानुविचार्य राष्ट्रनीतीनाम् व्यवहारो विधातव्यः। प्रायशो जनाः परमाणुबम्बादीनाम् वैज्ञानिकाविष्काराणां निन्दां कुर्वन्ति, परन्नैतदुचितम्, यतोऽत्र दोष अस्त्राणामपि तु अस्त्रप्रयोगकर्तॄणां विभिन्नदेशानां शासकानामेव। सर्वे राष्ट्रनायकाश्चेत् विश्वशान्तिसमुपासकाः भूत्वा प्रयत्नं करिष्यन्ति तदैव सकलेऽपि

विश्वे शान्तिसम्भावना संभविष्यति नान्यथा । अस्मिन् प्रसङ्गे भारतवर्षस्य नामोल्लेखः सर्वथा स्तुत्यः । भारतीयानान्तु विश्वशान्तिस्थापिका इयमेवधारणा ।

"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत् ॥"

---

४

# भारतवर्षस्याशावादः

आशावादो भारतीयधर्मस्य मूलभूतः सिद्धान्तः । भारतीयधर्मे दर्शने च परमात्मरूपस्य सत्तत्वस्य स्थापनयैव आशावादस्यापि स्थापनं सञ्जायते । कर्मणि परमात्मनि च विश्वासमाश्रित्य आशावादी स्वकर्मरतः सन् प्रसन्नतामनुभवति । आशावादी तु लोकेऽस्मिन् अनेकविधां विफलतामपि प्राप्य सर्वथा निराशो न हि जायते । परं नायमाशावादी पूर्णतया भाग्यवादी । अस्यत्वियमेव धारणा यत् उद्योगेनैव कार्याणि सिध्यन्ति । अतो यदि सत्यपि उद्योगे आशावादी वैफल्यञ्चेत् प्राप्नोति तदाऽसौ नैराश्यं नानुभवति, अपितु आशामविहाय पुनः पुनः प्रयतते । अत एवोक्तम—

त्याज्यं न धैर्यं विधुरेपि काले धैर्यात् कदाचित् गतिमाप्नुयात् सः ।
याते समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव ॥

परमाशावादी दैवधारणाया न सर्वथा विरहितः । दैवविषये तस्यायमेव प्रत्ययो यत् कृतेऽपि उद्योगे यदि किञ्चिल्लक्ष्यं नहि प्राप्यते तदैतत् भाग्यदोषः । एवंविधो भाग्यवादः जीवने कर्मण्यतायाः कथमपि साधको नैव जायेत । एवञ्चाशावादसिद्धान्तानुयायी पुरुषः उद्योगमेव प्रमुख मन्यते । यच्चोक्तमपि—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः,
दैवेन देयमिति कापुरुषाः वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यतिकोत्र दोषः ।

जीवनस्य बहुमूल्यतां सार्थकताञ्चापि आशावादी एव जानाति । यस्त्वाशावादी सो जीवने साफल्यमपि प्राप्नुवन् नैराश्यमनुभवति । भारतीयदर्शनस्य चेश्वरवादसिद्धान्त

आशावादिनम् परमां सान्त्वनां प्रददाति । आशावादी शुभमशुभमवा सर्वमेवेश्वरस्य विधानम् मत्वा सन्तुष्टो जायते । अशुभञ्चेत् पश्यति परमात्मान शुभं द्रष्टुं प्रार्थयते । एवञ्च भारतीयदर्शनस्य प्रार्थनापद्धतिराशावादस्य पोषिकैव वर्तते न तु बाधिका । अतएव आशावादिनो वैदिक्या प्रार्थनया एव प्रार्थयन्ते—

"पश्येम शरदः शतम् । जीवेम शरदः शतम् ।
बुध्येम शरदः शतम् । रोहेम शरदः शतम् ।
पूषेम शरदः शतम् । भवेम शरदः शतम् ।
भूयेम शरदः शतम् । भूयसीः शरदः शतम् ।"

अस्माकं भारतीयानां धर्मधारणाऽपि आशावादमेव सर्वथा समर्थयति । धर्माचरणेन मानवस्याभ्युदयस्याशा सम्भवति नाऽधर्मेण । 'यतो धर्मस्ततोजयः' इत्यायुक्त योऽपि धर्मेण जयस्याशामेव समर्थयन्ति । अतो भारतीयैः ऋषिभिर्विद्वद्भिश्च धर्माचरणस्य यदनुमोदनं कृतं वर्तते तदाशावादस्यैव धारणां धारयति । यत्तु केचित् 'नैराश्य परमं सुखम्, आशा हि परमं दुःखम्, इत्यादिवचनान्यनुसृत्य आशावाददृष्टिं निराकुर्वन्ति, तदनुचितम् । नैराश्यवादिनामेषान्त्वय विचारो यत् कस्यापि प्रत्याशितस्य लक्ष्यस्याप्राप्त्या चेतस्यतीव कष्टो जायते, अतः आशैव दुःखकारणम् । अन्यच्चैतदेषां कथनम् यद् यदा चाशैव न भविष्यति तदा कस्यापि लक्ष्यस्याप्राप्त्या क्लेशस्यावसरोऽपि नैवोत्पत्स्यते । अतो निराशावाद एव सुखकरी श्रेयस्करी च विचारधारेति वदन्ति एते आशावादविरोधिनः । आशावादविरोधिनामयमपि विचारो यत् स्वोद्देशप्राप्त्याशचैव मनुष्यः उचितमनुचितंसर्वं सम्पादयति दासत्वं च याति । यदुक्तमपि—

आशायाः ये दासास्ते दासाः सर्वलोकस्य ।
आशा येषां दासी तेषां दासायते लोकः ॥
परम् नैतत् कथनमुचितमेतेषाम् ।

नैराश्यानुसरणे तु जीवनं निःसारमेव प्रतीयते । वस्तुतोऽस्माकं जीवनं परमात्मना आलोकमयं निर्मितम् । अतोऽस्माभिः आशावादधारणयैव जीवनमालोकितं कर्तुं शक्यते न तु निराशावादविचारधारया । निराशावादस्तु अस्माकं जीवने कर्मण्यताया उत्पत्ति विधाय जीवनं नरकमेव विदधाति । अधुना नैराश्यपरा एव पुरुषाः जीवनस्य काठिन्यमसहमानाः प्राणघातं कुर्वन्ति । अतो मनुष्यस्य घोरशत्रुरयं निराशावादः । नैराश्यवादिनामिदं कथनं यत् आशाबद्धाः जनाः स्वार्थसिद्धिवशात् अन्येषां दासतां यान्ति, सर्वथाऽनुचितम् । आशावादस्य तु अयमेवाशयो यत् मनुष्येण स्वकीयेन सत्प्रयत्नेनैव स्वोद्देश्यप्राप्तेराशा करणीया । अतः सत्प्रयत्नमाश्रित्य कर्मण्यतांञ्चानुसृत्य यो जनः स्वोद्देशप्राप्तिमाशास्ते न सः कदापि केषाञ्चिदपि दासत्वं याति । वस्तुतस्तु निराशावादविचारधारा सदृशमन्यत् पापं किञ्चिदपि नास्ति । या कर्मण्येऽकर्मण्यता-

मानयति, वीरे कार्पण्यमुत्पादयति, विदुषि मौर्ख्यं जनयति। किं बहुना, जीवितमपि मृतमिव निष्पादयति। अतएव जीवनमूल्यजिज्ञासुना सुखैषिणा मानवेन निराशावाददृष्टिं सर्वथा विहाय आशावादस्यैव अनुसर्त्ता भाव्यमिति विचार एव श्रेयान्। उक्तञ्च—

> निराशासमं पापं मानवस्य न विद्यते।
> तां समूलं समुत्सार्य ह्याशावादपरोभव॥
> निराशावादिनो मन्दाः मोहावर्त्तेऽत्र दुस्तरे।
> निमग्ना अवसीदन्ति पङ्के गावो यथावशाः॥

---

४१

# जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

जनन्याः जन्मभूमेश्च महत्ता बहुभिः पुण्यकर्मभिः प्राप्तव्या स्वर्गादपि च अधिका। अस्यायमेवाशयो यत् जनन्याः जन्मभूमेश्च सम्पर्काद् यादृशः स्वाभाविकः हार्दिश्चानन्दः समनुभूयते न तादृशः अखिलालौकिक सुखराशिसंवलिते, चित्रविचित्रशोभाशोभिते त्रिदिवेनिवसनादप्यनुभूयते। अतएव भगवता रामचन्द्रेण कनकमय्याः लङ्कायाः अपि महत्ताम् न स्वीकृत्य जननी जन्मभूम्योरद्भुतम् महत्त्वमेव स्वीकृतम्। यथोक्तमपि भगवता रामेण—

> अपि स्वर्णमयी लङ्का न मे राक्षस, रोचते।
> जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥

इदानीम् जननीजन्मभूम्योर्द्वयोरपि विषये पृथक् विचारणमावश्यकम्।

**जनन्याः स्वरूपम् महत्त्वञ्च**

जननीति नाम्नैव तस्याः स्वजातस्य सुतस्य जननकालस्यातिदुःसहानाम् तथैवानुभूतानाम् घोरातिघोरकष्टानामनुमानं सञ्जायते। किमस्त्येतल्लोके काऽपि जननी या स्वकीयस्य सूनस्य सुखार्थम् नहि चिन्तयति। एषा जनन्येव, या स्वयमनशनङ्कृत्वा स्वतनयस्योदरम् भरति, स्वयमपीत्वा पुत्रम् पाययति, स्वचङ्कष्टायिता पुत्रम् पोष-

यदि तत्कृतेऽध्ययनादिभावनत म् नाद्यति । एतद् मातुरेव महद्दयम् हृदयम् यत् मा स्वयं कष्टवर्षणं सहमानापि जातम् स्वाङ्के पालयति लालयति च स्वकीयेनालौकिकेन स्नेहेन । एतच्च मातुः स्नेहपूर्णलालनस्यैव माहात्म्यम् यत् तनयस्य दुःसहोऽपि कष्टः पलायते, पीडाप्रदायिनीवृष्टिरपि शान्तायते, जलमपि क्षीरायते, उष्णमपि शीतायते शीतञ्च उष्णायते, कठोरमपि च कोमलायते । किम् बहुना, किमस्ति तद् यद् वैलक्षण्यपूर्णेन मातुः स्नेहेन नहि पूर्यते । मातुर्हृदयस्यैषापि विशालता उल्लेखनीया यत् सा स्वजातस्यैव शुभम् कामयते, अपितु यम् कमपि पुत्र कष्टान्वितमवलोक्य तस्य हृदयमतिवेगेन द्रवीयते । एष महिमा मातुः स्नेहस्य ।

मातुः स्नेहवत्सलं मुहुर्ध्यानहेतुर्यत् शाक्तानाम् मात्र्युपासनासमर्थको धर्मो यस्यां कस्यामप्यवस्थायाम् मातृसुतानाम् पोषकः । शाक्तधर्मानुसारम् भगवती दुर्गा-शक्तिः कुपुत्रमपि स्निह्यति । एतदेव मातुर्दुर्गाशक्तेर्वैशिष्ट्यम् यत् सा सेवकम् दाना-द्यकर्तारञ्चापि पोषयति । एतदेव स्पष्टीकृतमाचार्यशङ्करेण शक्तिस्तुतौ—

जगन्मातर्मातस्तव चरणसेवा न रचिता ।
नवादत्तं देवि ! द्रविणमपि भूयस्तव मया ॥
तथाऽपि त्वं स्नेह मयिनिरुपमम् यत् प्रकुरुषे ।
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥

दुर्गासप्तशत्यामपि ऋषिणा मार्कण्डेयेन भगवत्याः सर्वोपकारकस्वरूपमङ्कयता स्पष्टमेवोक्तम्—

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः ।
स्वस्थैः स्मृतामतिमतीव शुभां ददासि ॥
दारिद्र्यदुःखभयहारिणि का त्वदन्या ।
सर्वोपकारकरणाय सदार्द्रचित्ता ॥

एतत्प्रकारकैरनेकानेकैः श्लोकैर्मातुश्चरित्रस्य औदार्यम्, स्नेहवत्सलत्वम्, सर्वोपकारकत्वम् स्वकष्टाविचारत्वम्, अखिललोककल्याणेप्सितत्वम् सर्वेषाम्, शुभा-शंसनञ्च स्पष्टीभवति । एतादृशगुणसम्पन्ना जननी स्वर्गादप्यधिका कथन्नस्यात् ।

नीयतामिदानीम् पुत्राणाम् कर्त्तव्यशीलता । प्राचीनकाले तु श्रवणादयो मातृ-पितृभक्ताः पुत्राः मातृ-पितृचरणसेवनमेव सर्वम् मन्येरन् । ते स्वसुखन्नाचिन्तयन् । सन्यासी शङ्कराचार्यस्तु मातुराज्ञाम् पालयितुमेवानधिकारेणापि मातुर्दाहादिकर्माण्य-करोत् । आधुनिकेऽपि युगे राष्ट्रपतिः डा० राजेन्द्र प्रसादः, प्रधानमन्त्री लालबहादुर-शास्त्रिप्रभृतयोऽनेकाः पुत्राः सञ्जाताः यैर्मरणपर्यन्तं मातृभक्तिः—मातृभूमिभक्तिश्च प्रदर्शिता । परमिदानीमाधुनिकतमा केचन एतादृशा सुपुत्राः अवलोक्यन्ते ये सुधा-

सदृशमपि मातुरुपदेशम् विषमेव गणयन्ति, मातुराज्ञापालनम् अवज्ञाम् मन्यन्ते, प्रभूत-पुण्यदायकम् मातुश्चरणसेवनमपि पापम् मन्यन्ते । किमधिकम् सर्वानन्ददायकम् मातृ-दर्शनमपि अशकुनमिव विचारयन्ति । 'कथापि खलु पापानामलमश्रेयसे यतः' इति विचारानुसारम् अलमेवैषाम् पुत्रेतिनामलज्जकानाम् निर्लज्जानाम् वर्णनेन । अस्मा-भिस्तु प्रार्थ्यत एव परमपिता परमात्मा पुत्रमात्रस्य हृदि मातृभक्तिभावनाम् पूरयितुम् । इदानीम् जन्मभूमेः स्वरूपम् महत्ता च विचार्यते—

## जन्मभूमिः

जन्मभूमेः क्षेत्र जनन्यपेक्षयाऽति विस्तृतम् व्यापकञ्च वर्तते । जन्मभूमिः सर्वदैव पुरुषाणाङ्कृतेऽतिशयानन्दप्रदायिनी । माता तु चेतनत्वसम्पन्नैव पुत्रमानन्द-यति, वात्सल्यव्यञ्जकैः मधुरातिमधुरवचनैरेव स्नेहम् प्रकटयति, विभिन्न प्रकारनिर्मितैः पक्वान्नैस्तोषयति, पेयैःपोषयति, लालनैश्च लालयति । परम् मातृभूमिस्तु किञ्चिदपि भौतिकम् वाचिकम् वा अददती स्वभक्तस्य हृदयम् भावानन्देनापूरयति । एतत् मातृ-भूमेर्भक्तवात्सल्यमेव यन्मातृभूम्यांजनः किञ्चिदपि अलभमानः अनेकानेकक्लेशानपि सहमानः सुखमेवानुभवति । कश्चिद् दूरस्थो यदा स्वकीयायाम् जन्मभूम्यामागच्छति तदा स्वमातुरभावेऽपि जन्मभूमिजनैर्मिलित्वाऽपारहर्षमावहति । एतञ्च जन्मभूमेरेव वैशिष्ट्यम् यत् तत्रत्यैः, यस्याः कस्या अपि जातेर्जनैः सह पुरुषस्य पारिवारिकः सम्बन्धो दृश्यते । महतोऽपि महीयान् जनः स्वजन्मभूम्यामात्मानमकिञ्चनमेव मनुते । एतच्चापि जन्मभूमेरेव गौरवं यत् तत्र श्रीशङ्कराचार्योऽपि शङ्करः भगवान् बुद्धोऽपि बुद्धः, महात्मागान्धिरपि गान्धिः, जवाहरलालनेहरूरपि जवाहरः, लालबहादुर शास्त्रिश्च लालबहादुर इति संज्ञया उच्चार्यते । एतत् मातृभूमिजनानाम् स्नेहगरिमैव ।

एवञ्च मातृभूम्याम् पुरुषैर्यादृशः निष्कपटः सारल्यपूर्णः, स्वाभाविकश्च सुखः समनुभूयते तादृशः स्वर्गेऽपि न सम्भव इति नातिशयोक्तिः कल्पनीया । अतो जन्मभूमि-विषये 'स्वर्गादपि गरीयसी' इति कथनञ्चासमीचीनम् । मातृभूमिरपि मातैव मन्यते मनीषिभिः । यदुक्तम् वेदवाक्येपि—

'माताभूमिः पुत्रोऽहं पृथिव्याः'

परमत्रेदमाश्चर्यास्पदम् यद् जन्मभूम्याः सर्वविधसुखानि लभमानाः बहवोऽपि भारतीयाः स्वजन्मभूमिरक्षार्थम् नहि प्रयतन्ते । अतस्ते कुपुत्रा एव । को न जानात्यद्य उत्कोच-ग्राहिणाम् देशद्यातकानाम् भारतीयानाम् विषये ये स्वजन्मभूमिहितमचिन्तयित्वा स्वदेशस्यातिगुप्तसमाचारानपि जन्मभूमिशत्रून् प्रतिप्रकटयन्ति । आधुनिके युगे ये मन्त्रिणः राष्ट्रहितम विचार्य स्वार्थम् समीहन्ते, ये च राष्ट्र रक्षार्थ नियुक्ताः सैनिकाः स्वकर्तव्यमपालयित्वा स्वोदरभरणमेव सर्वम् मन्यन्ते, ये चान्ये राष्ट्रकर्मचारिणः

प्रजाजनानाम् कार्याणि सौकर्येणासम्पाद्य तेषाम् साध्येषु बाधमुत्पादयन्ति तेऽपि जन्मभूमिशत्रवो निन्द्या एव ।

अतो न केवलम् भारतीयानामपि तु सर्वेषामपि मानवानाम् इदमनिवार्यमेव कर्त्तव्य स्याद् यत्तेः स्वदेशरक्षार्थम् सर्वस्वमपि परित्यक्तु सन्नद्धैर्भवितव्यम्, यद् देशभक्तिः सर्वोत्तमा गण्यते । अतएवोक्तम्—

सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव ॥

परमत्रेदमुल्लेख्यम् यत् स्वदेशभक्ताः केवलम् स्वदेशस्यैव हितन्न चिन्तयन्ति परमन्येषामपि वसुधावर्तिनाम् सर्वेषामपि राष्ट्राणाम् प्रियमभिलषन्ति । एतादृशोदारचरितानाम् वसुधा परिवार एव वर्तते । तदेवोच्यते—

अय निजः परोवेति गणना लघुचेतसाम् ।
उदारचरितानन्तु वसुधैव कुटुम्बकम् ॥

एषोपर्युक्ता अन्ताराष्ट्रिया भावना । गान्धि-जवाहरलाल-लालबहादुरशास्त्रिप्रभृतयो भारतीया अनयैवान्ताराष्ट्रियभावनया परिप्लुता आसन् यैर्विश्वशान्त्यर्थं स्वसामर्थ्यानुरूप सर्वमपि सम्पादितम् । अत्रेदमपि अवधार्यम् यदन्ये देशा यदि स्वदेशस्यान्यायपूर्णरीत्या नीत्या चानुचितमहित कुर्वन्ति तदा तैः सह स्वदेशरक्षार्थं शठे शाठ्यं समाचरेदिति नीत्या व्यवहर्तव्यम् । अन्यथा स्वमातृभूमिरक्षैव न सम्भवेत् ।

एवमेव जननीविषयेऽपि ग्राह्यम् । जननीसेवा मानवस्यादिमः कर्त्तव्यः । मानवेन सर्वदा प्राणपणेन जननीरक्षायै प्रयतितव्यम् । न केवलम् स्वजननया अपितु सर्वासामपि मातृणाम् सेवा मनुष्यधर्मः । मातृसमुपासकैर्गौरपि मातृवदेव रक्ष्यते । परन्तत्रापि भारतीयपदंलज्जमानाः बहवोऽपि भारतीया अभारतीयाश्च जिह्वालौल्येन गोहननं कुर्वन्ति । अतिशयेन घृण्योऽयमेतेषाम् व्यापारः । गो वधस्य निराकरणार्थमिदानीम् बहुभिरपि भारतीयैः सत्याग्रहः, अनशनम् स्वप्राणानाञ्च बलिदान क्रियते । भारतीय शासनेनावश्यमेवास्य दुष्कृत्यस्य सार्वत्रिको निषेधो विधातव्यः । गोमहिमा न केवलं धार्मिकदृष्ट्यैव गीयते, अपितु व्यावहारिकदृष्ट्यापि । धेनोर्वत्साः कृषिप्रधानदेशस्य कृते कियदुपयोगिनः धेनुक्षीरञ्च अस्माकं कृते कियदमूल्यमिति को न जानाति । अतः सर्वैरपि जनन्याः जन्म भूमेश्च भक्तैर्गोरक्षार्थं दृढ़प्रतिज्ञैर्भाव्यमिति न किञ्चिद् विवादमपेक्षते ।

४२

# स्वधर्मे निधनं श्रेयः

भारतीयसंस्कृतौ धर्मस्य माहात्म्यमत्युन्नतं वर्तते । यदि वयं निष्पक्षभावेन विचारयामस्तदा भारतीयानां कृत एव नापितु समग्रस्यापि विश्वस्य कल्याणाय धर्मस्यानुपालनमत्यन्तमपेक्षितम् । परं किंविधोऽयं धर्म इति जिज्ञासायाम् तु अस्माकमियं धारणा यत् मानवेन रागद्वेषौ विहाय कृतं कर्म एव तस्य धर्मो वर्तते । अत्रेदमप्यवधेयम् यद् रागद्वेषभावनया कृतं कर्म अधर्मस्यैव सूचकम् । धर्माधर्मयोरिममेव निकषमाधृत्य धर्मप्रतिष्ठापकेन भगवताश्रीकृष्णेन स्वबान्धवान् प्रति रागकारणान्मोहितमत एव युद्धरूपकर्मणो विरतमर्जुनं प्रति धर्मोपदेशो विहित इति सर्वथा स्पष्टं गीतायाः श्लोकेनानेन—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

अनेन त्विदंस्पष्टमेव यद् रागद्वेषादिभावेन कृतो धर्मः स्वधर्मो न भूत्वा परधर्म एव । एवञ्च सम्यक्सम्पादितोऽप्ययं धर्मो नरकादिक भयमेव उत्पादयति पुण्यश्चायमतः । अतएव विगतगुणोऽपि अनुष्ठीयमानः रागद्वेषभावना-विहीनः स्वधर्मः पूर्वोक्तात् परधर्मात् सर्वथा श्रेयान् । "स्वधर्मे निधनं श्रेयः" इत्युपदिश्य तु भगवता श्रीकृष्णेन स्पष्टमेव प्रतिपादितं यत् स्वधर्मे पालयति सति मरणमपि कल्याणसमन्वितम् ।

स्वधर्मपालनस्याभावे संसारेऽधुना नैराश्यपूर्णं वातावरणमेव सर्वतोऽवलोक्यते । स्वधर्मपालनाभावे साफल्यमसम्भवम् । एवं च नैराश्यं स्वाभाविकम् । प्रायशः सर्वे एवाद्य स्वधर्मविरताः सन्ति । छात्राः यदि स्वाध्यायकर्मणो विमुखाः सन्ति तदाऽऽधुनिका अध्यापका अपि अध्यापनकर्मणि न तथा संलग्नाः सन्ति यथा तैर्भाव्यम् । बहवश्चाधुनिका अध्यापका अध्ययनाध्यापनं कर्म गौणरूपेण स्वीकुर्वन्ति व्यावहारिकीं राजनीतिञ्च प्रमुखकर्मरूपेण गृह्णन्ति । एवमेव च बहवो वर्तमान-कालिका राजनीतिज्ञा मन्त्रिणश्च देशस्य हितमचिन्त्य स्ववैभववृद्धिकरणमेव स्वकीयं धर्मम् मन्यन्ते । अस्यैवैतत् फलं यत् मानसिकशान्तिरधुना खपुष्पसाम्यत्वं भजते ।

गृहशान्त्यै विश्वशान्त्यै च कृते स्वधर्मपालनमत्यावश्यकम् । गृहशान्तिं विना विश्वशान्तिस्त्वसम्भवैव । अतः पूर्वन्तु गृहस्थैः सर्वैरपि जनैः स्वधर्मस्य पालनं विधेयम् । निदर्शनार्थम्, पुत्रेण स्वधर्मान्तर्गतं पितुराज्ञायाः पालनं कर्त्तव्य, पित्रा च पुत्रस्य सर्वथा हितैषिणा भूत्वा तस्य पठनादिकस्य व्यवस्था कार्या । एतादृशस्य धर्मस्यपालयिता पिता पुत्रस्य शत्रुरेव न पिता । अत एवोक्तम्—

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥

एवमेव च गृहे पत्न्या, पतिना भ्राता च स्वार्थदृष्टिं परित्यज्य स्वधर्मस्यानुपालनं कर्तव्यम् । अनेन प्रकारेणास्माकं यदा गृहे धर्मपालनस्य प्रवृत्तिः पुष्टिमेष्यति तदा स्वदेशवासिनः विदेशिनश्च प्रत्यपि अस्माकं धार्मिको व्यवहारः सम्भविष्यति ।

'स्वधर्मे निधनं श्रेयः' इति भावनया दृढीभूता यदा सैनिकाः सेनाध्यक्षा वा, छात्राः अध्यापकाः वा, भृत्याः स्वामिनो वा निर्धनाः धनिनो वा, मन्त्रिणो नागरिकाः वा स्वधर्मस्यानुपालनं करिष्यन्ति, तदाऽत्रवसुधायामेव स्वर्गस्यावतारः सुनिश्चितः । अस्य अयमाशयो यत् स्वधर्मस्य रक्षा मानवेन प्राणपणैरपि करणीया । न केवलं भारतवर्ष एवापितु समग्रेऽपि विश्वेऽसंख्या एतादृशाः पुरुषा अभूवन् यैः स्वधर्ममनुपालयितुं स्वप्राणानामपि चिन्ता नहिकृता । भारतवर्षे दधीच्यादयः विदेशेषु च ईसामसीहादयः एतादृशाः ऋषयो महापुरुषाश्च संजाताः यै स्वधर्मरक्षार्थै स्वप्राणा अपि प्रदत्ताः । अत इदानीमपि सर्वैरपि स्वधर्मपालनपरैर्भाव्यमित्यस्माकं सविनयो नयः ।

---

२८

# योगः कर्मसु कौशलम्

भारतीयधर्मदर्शनयोः क्षेत्रे गीतायाः महत्त्वं सुस्पष्टमेवास्ति । गीतायाः धार्मिकं दार्शनिकञ्च महत्त्वमेवाङ्गीकृत्य कैश्चिदुक्तम्—

"गीतासुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिसृता ॥

"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः"—इति कथनानुसारं श्रीमद्भगवद्गीतायामुपनिषद्वर्त्तिसिद्धान्तानामेव सारम् प्रस्तुतं वर्त्तते । श्रीमद्भगवद्गीतायाम् भक्तियोग-ज्ञानयोगादीनाम् बहूनामपि योगानां सालोचनाप्रतिष्ठा दृश्यते । परमेतेषु सर्वेष्वपि कर्मयोगसिद्धान्तस्य तत्र वैशिष्ट्येन प्रतिपादनम् । न केवलं भारतीयैरपि तु वैदेशि-

कैरपि गीतायाः कर्मयोगसिद्धान्तस्य महिमा स्वीकृतः। गीतायाः कर्मविषयको योगसिद्धान्तः पातञ्जलयोगादभिन्नः। पातञ्जलयोगानुसारं योगस्य परिभाषा 'योगश्चित्तवृत्तिनिरोधः' इत्युक्त्वाकृता। परं गीतायाम् भगवता श्रीकृष्णेन "योगः कर्मसुकौशलमित्युक्त्वा कर्मयोगसिद्धान्तस्य प्रतिपादनं कृतम्। "योगः कर्मसु कौशलम्" इत्यस्य व्याख्यां कुर्वता श्रीशङ्कराचार्येणोक्तम "योगोहि कर्मसु कौशलम् स्वधर्माख्येषु कर्मसु वर्त्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिः ईश्वरार्पित चेतस्तया तत् कौशलम् कुशलभावः" गीतोक्तकर्मप्रधानयोगसिद्धान्तमनुसृत्य यः प्राणी कर्मपरो भवति स न साफल्यं दृष्ट्वा सुखायते न च वैफल्यं दृष्ट्वा दुःखायते। अनयाधिया सिद्ध्यसिद्ध्योः समो भूत्वो एव प्राणिना कर्म सम्पादनीयम्। अतएव श्रीकृष्णेनाप्युपदिष्टमर्जुनाय—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन"

वस्तुत एव ये जनाः कर्मण्येव स्वकीयमधिकारम् मन्यन्ते न तु कर्मफलेषु तेषां कृते कर्मफलौत्सुक्यजन्यव्यग्रतायाः सत्ता एव न वर्त्तते। अतो मनसः शान्त्यै कर्मयोगसिद्धान्तोऽतिशयेन ग्राह्यः। नैतत्कथनमुचितं यत् निष्कामकर्मयोगः फलौत्सुक्याभावे अकर्मण्यतां जनयति। कर्मयोगभावनायास्तु विशिष्टमेतत् फलं वर्त्तते यत् कर्मयोगी फलासक्तेः मुक्तत्वात् कर्मनिष्पादने एव स्वकीयां शक्ति प्रयुञ्जते। अत्रेदं तात्पर्यं यत् फलासक्तिवशीभूता ये जनाः कर्म कुर्वन्ति तेषां चित्तं फलासक्तावेव लीनं सञ्जायते। मनस आसक्तिलीनत्वाच्च कर्मसम्पादने न्यूनता स्वाभाविकी। अनेन प्रकारेण आसक्ति विना कर्मसम्पादनमेव कर्मसु कौशलम्। अतएव निष्कामकर्मण एवाधारतले गीतायां कर्मवादसिद्धान्तस्य प्रतिष्ठा कृतेत्यस्मदीयो विचारः। गीतोक्तकर्मसिद्धान्तस्यैतद् विशिष्टं फलं दृश्यते यदनेनाऽऽध्यात्मिकी शान्तिरपि समुपलभ्यते। परमाध्यात्मिकी शान्तिं प्राप्नोति निष्कामी न तु कामी। श्रीमद्भगवद्गीतायामपीदमेव स्पष्टीकृतम्—

"आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे स शन्तिमाप्नोति न कामकामी॥

अत्रायमाशयो यत् कर्मफलासक्तिप्रधाने वर्त्तमाने जगति गीतोक्त कर्मवादसिद्धान्तस्यानुपालनंनितरामावश्यकम्। अनासक्तभावनया सम्पाद्यमानस्य कर्मण एतत् फल सुनिश्चितमेव यदनेन कर्मसम्पादनजन्यानन्दस्यानुभूतिरनिवार्यतया सञ्जायते।

४४

# न्याय्यात् पथः प्रविचलन्ति पदं न धीराः

मानवप्रकृतेर्द्वौ भेदौ अतीव स्पष्टौ लोके, तयोरेकस्तावत् धीरप्रकृतिरूपो-ऽपरस्तावत् च चलप्रकृतिरूपः। संसारे सुखेप्सापि मानवस्य स्वाभाविको धर्मः। परमत्रायं विशिष्टः परामर्शो यद् बहवस्तु न्याय्यं पन्थानं अचिन्तयित्वा स्वकीयां सुखेप्सां उचितानुचितैः सर्वैरपि प्रकारैः पूरयन्ति। नैते विचारयन्ति यत् कोऽस्माकं देशः, किमस्माकं कुलं, का नाम मर्यादा, किं च चरित्रम्। स्वकार्यसाधनपरा एते स्वकीयं कार्यं साधयितुं न राष्ट्रगौरवं गणयन्ति, न स्वमानहानिं विचारयन्ति, न वा कुलप्रतिष्ठां रक्षयन्ति। किमधिकम्, एते स्वार्थपूर्तिभक्ताः स्वमातरपितरं वा न शृण्वन्ति मानवतानियमांश्च नैवानुपालयन्ति। एतेषां कृते सत्यस्य रक्षा, अहिंसायाः पालनं, अस्तेयस्य व्यवहारः परोपकारकरणं वा व्यर्थमेवास्ति। एतेषां स्वार्थान्धानां मनुष्याणां मार्गे यदा किञ्चिदपि विघ्नं काठिन्यं वा आयाति तदैते अतिशयेन व्यथमानाः सन्तो गुरूपदिष्टं मार्गं, नीतिशास्त्रेणाचारशास्त्रेण वा निर्दिष्टां सरणिं परित्यज्य पथभ्रष्टाः सञ्जायन्ते। एतेषां स्वार्थवृत्तिपराणां मनस्तु तृष्णातरलितं सत यथा कथमपि प्राप्तव्य साध्यमेव स्वकीयं लक्ष्यं मत्वा नर्तनं करोति। एत एव अधीरप्रकृति-वन्तो साधवः समाजस्य कलंकरूपाः।

अपरेच साधवो धीरप्रकृतिसम्पन्नाः। एतेषामपि जीवनस्य प्रयोजनीभूताः लक्ष्याः सन्ति। परमियमेषां विशेषता यदेते स्वलक्ष्यं साधयितुं केवलं साध्यदृष्टिपरा एव न भवन्ति, अपितु साधनान्यपि प्राथमिकतया विचारयन्ति। एतेषां साधुप्रकृति-शालिनां यत्र सत्साध्याः भवन्ति तत्रैव साधनान्यपि सद्रूपाणि एव दृश्यन्ते। निदर्शनार्थं, यदि महात्मनः गान्धिनः स्वातन्त्र्यप्राप्तिरूप उत्कृष्टो लक्ष्य आसीत् तदा तस्य सत्याहिंसादीनिसाधनान्यपि उत्कृष्टान्येव आसन्। महात्मागान्धिसदृशाः मत्-साधनमार्गमनुसरन्तः साधवो न शासकानां राज्ञां वा रोषं चिन्तयन्ति, न वा विरो-धिनामनुचितमालोचनं श्रुत्वा वैकल्यमनुभवन्ति। एतेषान्तु उद्देश्यं सन्मार्गानुसरणमेव न तु सम्पन्नानां नृपतीनां वा प्रसादप्राप्तिः। वस्तुत एतेषां न्यायमार्गानुसारिणां कार्यं खड्गधारोपरिचलनमिव दुष्करं दुर्लभञ्च। तदेवोक्तं नीतिविद्भिः।

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्त्ता त्यज्यते पार्थिवेन्द्रैः।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्त्ता॥

एतदेवैतेषां काठिन्यं यत् यदैभिः सन्मार्गस्य अनुपालनं क्रियते तदा सतां रोषा

असमीचीनमालोचनञ्च स्वाभाविकमेव। अतो न्यायमार्गमनुसरद्भिः सद्भिः किं सत्पथोऽनुसरणं कार्यं यद् वा कामाल्लोभाद्भयाद् वा तस्य त्यागो विधेयोऽन्याय्यश्च मार्गोऽनुसर्तव्यः। यदि साधुभिः न्याय्यस्य पथोऽनुगमन क्रियते तदा तेषां मार्गे 'श्रेयांसि बहुविघ्नानि' इति कथनानुसारमनेकप्रकारकाः बाधाः भविष्यन्ति इति सुनिश्चितम्। सन्मार्गानुसारिणो सज्जनान् दुर्जना अपवदिष्यन्ति, आलोचयिष्यन्ति ताडयिष्यन्ति चापि। परमस्तु नाम, दुर्जनानां दुर्व्यवहारेण सज्जना अनुत्साहिताः नैव भविष्यन्ति। किं आंगलाना हिंसात्ताडनाददुर्व्यवहारेणास्माकं देशीया भक्तसिंह-नेहरू प्रभृतयो देशभक्ताः स्वकीयात् स्वातन्त्र्योपासनारूपात् लक्ष्याद् भ्रष्टाः सञ्जाताः ? नैवम्। अत एव धीराणां साधुप्रकृतिशालिनाञ्च स्वभावः सिद्धान्तश्चापयं ताडनमपि सहन्ते मरणमपि स्वीकुर्वन्ति, निन्दनमपि शृण्वन्ति, श्रियमपि उपेक्षन्ते, प्रियातिप्रियमपि परित्यजन्ति, लोकप्रतिष्ठामपि त्यजन्ति परं सद्भिः अनुमोदितात् न्याय्यात् पथो न विचलन्ति। अत एवोक्तमपि—

निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः॥

एतेषां न्यायमार्गमनुसरतान्तु शरीरमपि वज्रवत् किञ्चिद् विशिष्टशक्तिसम्पन्नमेव जायते। इदमेव कारणं यत्ते प्रकृतिकृतां करकवर्षामपि पुष्पवृष्टिमिव अनुभवन्ति, ललाटन्तपतप्यमानमातपमपि हिमपातमिव मन्यन्ते शिशिरर्तुशीतमपि च सहर्षं सहन्ते। धन्या इयमेषां धीराणाञ्च सहनशीलता यत्ते मानसिकं शारीरिकञ्च सर्वविधमपि क्लेशं सहन्ते परं स्वकीयं न्याय्यं मार्गं न परित्यजन्ति।



४२

## ज्ञानं भारः क्रियां विना

ज्ञानं मानवतायाः प्रमुखं लक्षणम्। ज्ञानेन सामान्यतया सर्वेषामेव विषयाणां ज्ञानं गृह्यते, न तु केवलम् पारमार्थिकमेव ज्ञानम्। ज्ञानस्योपयोगिता महती। कस्यापि वस्तुनोऽज्ञानेन कृतः प्रयोगो व्यवहारो वा हास्यास्पदतामेव जनयति। मानवस्य

ज्ञानमेव मानवे धर्मनिष्ठाम् कर्त्तव्यनिष्ठाम् च जनयति। वेदान्तिनां स्वरूपज्ञानेऽपि ज्ञानस्य महती साधनता साध्यता च, यत् तेषां पक्षे स्वरूपज्ञानमेव साध्यम्। तदेव मोक्षस्य स्वरूपम्। वस्तुस्वरूपज्ञानमेवाज्ञानस्योच्छेदं कृत्वा परमार्थज्ञानस्वरूपेण राजते। अतएवाध्यात्मिकक्षेत्रे ज्ञानस्य साधनता साध्यता च समिध्यति। अतश्च लौकिकेऽलौकिके च पक्षे ज्ञानस्य महिमा आद्य एव, परं पक्षद्वयेऽपि ज्ञानस्य व्यवहारोऽत्यावश्यकः।

अत्राध्यात्मिकज्ञानविषये इदमनुचितं कथ्यते यत् परमात्मसत्यताप्रतिपादकं जगत्मिथ्यात्वसाधकं च ज्ञानं तदैव मोक्षसाधकं सञ्जायते यदा मुमुक्षुणा परमार्थसत्यबुद्ध्या जगन्मिथ्यात्वधिया च व्यवहारोऽपि विधीयते, नाऽन्यथा। केवलं दार्शनिकसिद्धान्तान् रटमानास्तु कथमपि जन्ममरणबन्धान्न मुच्यन्ते। इयमेव वार्ता लौकिकज्ञानविषयेऽपि वर्तते। बहूनामपि लौकिकविषयाणाम् ज्ञानं व्यवहारस्य क्रियायाः वाऽभावेव्यर्थमेव। उदाहरणार्थं यदि केनाऽपि सत्यास्तेयादिप्रतिपादकस्य धर्मशास्त्रस्य ज्ञानमधिगत्यापि सत्यादीनां व्यवहारः क्रियते तदैतादृशज्ञानं सर्वथाऽनपेक्षितमेव। अत एव धर्मशास्त्रादिशास्त्रज्ञातारोऽपि व्यवहाराभावे मूर्खा एवोक्ता नीतिशास्त्रविद्भिः यदुक्तमेव शास्त्राण्यधीत्यापि भवन्ति मूर्खाः, यस्तु क्रियावान् पुरुष स एव। इदमपि सर्वांशतोऽवधेयं यत् सैद्धान्तिकविषयाणामिव भौतिकविषयाणामपि ज्ञानं क्रियां विना निरर्थकमेव। यथौषधविज्ञानम्, भौतिकविज्ञानं रसायनविज्ञानञ्च प्रयोगात्मकक्रियाम् विना व्यर्थमेव। अत एवौषधग्रहणादिव्यवहारं विना केवलमौषधशास्त्रस्य ज्ञानेनैव कश्चिद् रोगी आरोग्यं नहि प्राप्नोति, न च भौतिकशास्त्रस्यज्ञानमात्रेणैव परमाण्वास्त्राणां निर्माणं जायते नवा रसायनशास्त्रस्य व्यवहाररहितेन केवलेन सैद्धान्तिकेन ज्ञानेनौषधानां निर्माणं कर्तुं शक्यते। एवमेव मोदकानां शष्कुलीनाम् वा ज्ञानमात्रेणैव क्षुधापूर्तिर्नहि भवितुं शक्यते। अतश्चोपर्धादनां ज्ञानमेव नहि पर्याप्तमपि तु तेषां व्यवहारोऽप्यत्यावश्यकः। अत्रायमपरोऽपि तर्को यद् व्यवहारशून्यो ज्ञानी न केवलमात्मानमेवापकरोति, अपितु लोकस्यापि अकल्याणं विदधाति। साधारणतया लोकस्येयमेव प्रवृत्तिर्दृश्यते यल्लोकः ज्ञानिनएवानुकरणं करोति—

"यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः।"

इत्यमनया दृष्ट्या व्यवहाररहितो ज्ञानी न केवलं स्वापपकारी अपितु लोकापकारी अपि। अत उक्तिरियं नितान्तमेवोचिता—

"ज्ञानं भारः क्रियां विना"

व्यवहारेण तु कस्यापि ज्ञानस्य स्वरूपमपरमेव सञ्जायते। सद्व्यवहारन्तु ज्ञानं मानवाय सर्वदैव साफल्यं ददाति। ज्ञानानुसारं व्यवहारकर्ता तु ज्ञानी साक्षात् परमात्मरूप एव

जायते । सर्वे एव क्रियावतो ज्ञानिनः समादरं कुर्वन्ति क्रियारहितस्य तु अत्यधिकविदुषोऽपि मानवस्य न हि कोऽप्यादरं करोति । एवमेव परमधर्माचार्योऽपि धर्माचरणस्याभावे धूर्तः प्रवञ्चकश्च कथ्यते । एते परोपदेशपाण्डित्यकुशलास्तु ज्ञानिनः सर्वदैव हास्यतां यान्ति जनानाम । उपदेशकार्यमपि क्रियया व्यवहारेण आचारेण वा यादृशं सरलं सफलञ्च जायते तथाविधो न ज्ञानमात्रेण । वस्तुतस्तु अयमेव पन्था: न्याय्यो यत् सर्वैरपि लोकश्रेयसोऽभिलाषिभिः स्वकीयसिद्धान्तज्ञानानुसारमाचरणम् विधेयम् । सत्पुरुषस्याचरणेन लोकोऽवश्यमेव प्रेरणां ग्रहीष्यतीति निर्विवादम् । गीतायाः प्रामाणिकवचनमेवात्रानुसर्तव्यम्—

न बुद्धिभेदं जनयेदज्ञानां कर्मसंङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥

अतो जीवने क्रियाया एव महत्मूल्यन्नतु ज्ञानमात्रस्य । एवञ्चैतत् कथनन्नासमीचीनं यत् क्रियैव सारः, क्रियां विना ज्ञानन्तु भार एव ।

---

४७

# समानशीलव्यसनेषु सख्यम्

सख्यम् जीवनस्य अनन्यो लाभः । सख्यसम्बन्धएतादृशः सम्बन्धो यस्मिन् सति मानवोऽद्भुतं सुखमनुभवति । सख्यसम्बन्धस्य च अनेकानि रूपाणि दृश्यन्ते, यथा छात्राणां सख्यसम्बन्धः, राजनीतिज्ञानां मैत्रीभावः, विदुषाञ्च मित्रत्वसम्बन्धः । सख्यभावश्चायं व्यष्टिरूपेण स्त्रीपुरुषाणामेव न वर्ततेऽपि तु विभिन्नानां देशानामपि । एवं सख्यभावमाश्रित्यैवाद्यानेकेषां राष्ट्राणां पृथक्-पृथक् सङ्घा अवलोक्यन्ते । एतश्चाधुनिको महान् सङ्घः —राष्ट्रसङ्घः । अन्यच्च न केवलं मानवानामेव अपि तु पशुपक्षिणाम् कीटादीनाञ्चापि मैत्रीभावोऽपि स्पष्टमेव दृश्यते । मैत्रीभावेनैव गावः गोभिः सह सद्भावनया व्यवहारं कुर्वन्तोऽवलोक्यन्ते कीटाश्च कीटैः सह मैत्रीनिर्वाहं कुर्वन्तो दृश्यन्ते । अतः सख्य प्रति प्राणिनोऽभिलाषा स्वाभाविकी । परमाधुनिके युगे सख्यं प्रायः पापरूपम् एवानुभूयते । अद्यतनास्तु सखायो मित्राणां प्रायशः सर्वथा अहितं

कुर्वन्ति । आधुनिकास्तु नाम्नैव सुहृदः मित्राणां धनं लुण्ठन्ति प्राणांश्चनयन्ति । अत एतादृशा आधुनिकाः सखायो न सखायः अपितु स्वार्थिनः प्रवञ्चकाश्चेति न वयमनुचित ब्रूमः । एवञ्च किमिदं वास्तविकं सख्यस्वरूपम् कश्चास्य व्यवहारप्रकार इति प्रमुखः प्रश्नः । अस्य प्रश्नस्य महत्त्वमेवाकलय्य विष्णुशर्मणोक्तम्—

मृगाः मृगैः सङ्गमनुव्रजन्ति, गावश्चगोभिस्तुरगास्तुरङ्गैः ।
मूर्खाश्चमूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥

उपर्युक्तेन पञ्चतन्त्रश्लोकेनेदं सर्वथा स्पष्टमेव यद् येषां शीलंव्यसनञ्च समानं वर्तते तैरेव सह सख्यं शोभते नाऽन्यैः सह । येषां शीलं व्यसनञ्च विपरीतं तेषान्तु सख्यम् न सख्यम् अपितु अभिशाप एव ।

पुरुषा स्वार्थम् पूरयितुं यैः कैश्चित् सह यत् सख्यं कुर्वन्ति तन्न सख्यं अपितु प्रवञ्चनमेव । एवञ्च सतां दुर्जनैः, विदुषां मूर्खैः, वाणिज्यव्यवसायिनाम् अध्यापकैः, राज्ञाञ्च सेवकैः, धनिनां निर्धनैश्च सह यत् सख्यम् दृश्यते तन्न समुचितम् । न तत्र स्थायित्वम न वा निश्छलत्वम् । उदाहरणार्थम् सेवकस्वामिनोः सख्ये सेवकः सदैव स्वामिनः कोपभाजन भवितुमर्हति । एवमेव सज्जनासज्जनयोरपि प्रकृतिविरोधात् मैत्री न स्थायिनी । इयमेव च वार्त्ता सम्पन्नासम्पन्नयोरपि । सम्पन्नानामसम्पन्नैः साकं या मैत्री दृश्यते सापि कदाचिदेव सफलीभूता भवति, न प्रायशः । सम्पन्नास्तु सखायः असम्पन्नानि मित्राणि प्रायशः हीनदृष्ट्यैव अवलोकयन्ति न च गणयन्ति तेषां हृदयस्य पावनत्वम् स्नेहलालित्वञ्च । निर्धनाश्चैते सखायोऽपि आत्महीनतामनुभवन्तो स्वकीयं हार्दिकं भावम् न प्रकटयन्ति । अतश्चेयम् मैत्री न मैत्री अपितु औपचारिको लोकव्यवहार एव ।

अतः समानशीलव्यवसायवतां या मैत्री सैव वास्तविकी स्थायिनी च । एवञ्च राज्ञां राजभिः, सेवकानां सेवकैः, छात्राणां छात्रैः, अध्यापकानाञ्च अध्यापकैः, धनिनां धनिभिः, निर्धनानां निर्धनैः, सतां सद्भिश्च सह या मैत्री दृश्यते सैव पुण्या, पावनी स्थायिनी च । अत एव सूक्तम्—

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टतिपुष्टयोः ॥

समानशीलव्यसनवताम् सख्यस्य सत्प्रभावः सत्लाभश्च भवति । असमानशीलव्यसनवतां दुष्प्रभावो दुर्लभश्च सर्वथा स्पष्ट एव । समानशीलव्यसनवतां सख्यं सर्वथाऽनुकरणीयं भवति । असमानशीलव्यसनवतान्तु सख्यं स्वार्थपूर्त्यर्थमेव प्रायो जायते । स्वार्थपूर्त्यनन्तरञ्च असमानशीलव्यसनवताम् मैत्री कथं शीघ्रमेव विनश्यतीत्यपि अधुना क्षणे क्षणे दृश्यते । नेदं प्रमाणमपेक्षते यदद्यतनास्तु शासनकारिणो मन्त्रिणोऽपि निर्वा-

धनकाले दीनातिदीनैरपि मनुष्यैः सह घनिष्ठं सख्यं स्थापयन्ति स्वकार्यं च साधयन्ति परं एते च यदा निर्वाचिता जायन्ते तदा व सख्यस्य कथा, तान् परिचितानपि नहिस्वीकुर्वन्ति। एषाम् स्वार्थिनामेतादृशी मैत्री कथं स्थायिनी भवितुमर्हति। न केवलमेषा शासनकुर्वताम् मन्त्रिणाम् एव वार्ताऽपि तु स्वार्थ साधयितुम् तत्पराणा मामान्यजनानामपि अयं दोषो यत्तो स्वार्थपूर्त्यर्थं स्वशीलवृत्तिविरोधिभिरपि जनैः सह सख्य कुर्वन्ति, कार्ये च सम्पन्ने सति सर्वमपि विस्मरन्ति। एवमिदमुभयविधमपि सख्यम् प्रवञ्चनमेव। एतादृशञ्च सख्यम् उपर्युक्ताना स्वार्थिनाम्। मित्राणामेव कृते घातक न वर्ततेऽपि तु समाजेऽपि अनेन भ्रष्टाचारस्यैव प्रचारः सञ्जायते।

अतस्तदेव सख्यं वास्तविकं, स्थायि श्रेयस्करञ्च सख्य यत समानशीलव्यसनवताम् पुरुषाणाम् च सख्यम्। एतादृशमेव सख्य मानवानाम् सर्वथा कल्याणकारकम्। अतो येषां शील व्यसनञ्च समान तैः सह एव सख्यं कार्यं नान्यैरिति न्यायः सर्वथा पुष्ट एव।

---

५८

# किं किं न साधयति कल्पतेव विद्या

यया वेत्ति जनः सा विद्या। प्राचीनाधनुर्विद्यादयः अर्वाचीनाश्च अणुविद्यादयोऽसंख्याः विद्या अद्य दरीदृश्यते। परम् सामान्यतया विद्या एकैव। एषा खलु लौकिकीविद्या। विद्या काचिदेतादृशी सम्पत्तिर्या आलोकदात्री सर्वसम्पत् साधिनी च। अनया तु लोकस्य सर्वा अपि सम्पदः आप्तु शक्यन्ते। विद्यासम्पत्त्या मानवेन या प्रतिष्ठा प्राप्यते सा न कदापि वैभवसम्पत्त्या। यत् सर्वतः प्रख्यातं, वैभवशाली जनो नृपो वा स्वदेशे एव पूज्यते परम् विद्यावैभवसम्पन्नः सर्वत्रैव—

"स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते।"

विद्यासम्पद एतदपि वैशिष्ट्यं यत् विद्वान् सर्वानपि लौकिकान् पदार्थान् स्वविद्याशक्त्या अर्जयितुं शक्नोति परमन्ये वाणिज्यादिव्यवसायकारिणो नृपाः वा विद्यामधिगन्तुं न शक्नुवन्ति। अस्य तुदाहरणानि अत्र प्रत्यक्षमेव दृश्यन्ते यदा

श्रेष्ठिनो धनिकाश्च स्वसन्ततिं शिक्षयितुं अध्यापकान् धनादिकं दत्वा बहुशः प्रयतन्ते परम् परिणामतो नैराश्यमेवानुभवन्ति ।

विद्यायाः एतदपि वैशिष्ट्यम् उल्लेखनीयं यत् विद्या केवलं बाह्यानि लौकिकान्येव च प्रयोजनान्येव नहि साधयति अपितु मनुष्यस्य आन्तरिकं विकासं कुरुते । विद्याया आलोक एव मनुष्ये सदसतोर्विवेकशक्तिमुत्पादयति । एषाऽपि विद्यैव यया प्रबुद्धो मानवः पापाद् विरमति । एवञ्च विद्यैव मनुष्यमेतत् शिक्षयति यत् किं करणीयम् किं वा करणीयम् । अत एवेदं कथनं नानुचितं यत् यः खलु विद्यालयमेकं सञ्चालयति सोऽनेकानपि कारागृहान् आवृतकपाटान् करोति । अत एव स्वसन्ततेः शिक्षणम् मातापित्रोः प्रथमः कर्त्तव्य उद्घोषितः । ये तु स्वसन्ततिं न शिक्षयन्ति ते शत्रवो वैरिणश्चोक्ताः —

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥

विद्या मनुष्यस्य चरित्रसाधिकाऽपि । विद्याव्यसनेन मनुष्यस्य चरित्रमुन्नतिं याति । विद्याव्यसनवन्तः सर्वदा विद्यारताः सन्तः स्वकीय समयं यापयन्ति इतरव्यसनेषु च तेषां वृत्तिश्चलत्येव नहि । यच्चोक्तमपि—

काव्य शास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥

विद्या न केवल लौकिकभोगसाधिकाऽपितु स्वर्गसाधिन्यपि । स्वर्गसाधकानि सन्ति यानि पुण्यानि तानि च विद्यया प्राप्तुं सम्भवन्ति । ये विद्वांसो न सन्ति तैरपि परोपकारादीनि पुण्यानि कर्तुं शक्यन्ते परम् विद्यावतां विद्योपकारो महान् । विद्यादानसदृशम् अन्यद् दानं संसारे न दृश्यते । धनिकैर्दत्तं विभिन्नद्रव्यादिकं दानं यदा कदा विनश्यत्येव परम् विद्यादानम् शाश्वतमेव । इयमपि विद्यादानस्य शाश्वतता यत् विद्यायाः संस्काराः जन्मजन्मान्तरेष्वपि गच्छन्ति । विद्यादानस्यैदमपरं वैलक्षण्य यदिदं विद्याधनं दानेन प्रवर्द्धते परमितरद्रव्याणि दानेन क्षीयन्त एव ।

विद्या विशिष्टं धनम् । अस्य विद्याधनस्यैषैव विशिष्टता यदन्यानि धनानि चौरैर्हर्तुम् बान्धवैर्विभाजयितुम् राजा चापहर्तुं शक्यन्ते परम् विद्याधनं न केनापि नेतुं शक्यते । किं किं कथयामो, विद्या मनुष्यस्य सर्वमेवास्ति । विद्या मनुष्यम् सौन्दर्यं ददाति, सुखं वर्धति यशश्च ददाति । विदेशेऽपि यत्र सर्वेऽपरिचिताः सन्ति तत्र विद्यैव बन्धुः । विद्यैव च परमा देवता । किमधिकम् गुरूणां गुरुरपि विद्यैव । कारणन्तु स्पष्टमेव यद् गुरवोऽपि विद्यया एव गुरवो जायन्ते । विद्यायाः गुरूणामपि गुरुत्व प्रामुख्यञ्च स्पष्टमेव नीतिशतकस्य श्लोकेनानेन—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्,
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परम् देवतम्,
विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः ॥

विद्यासम्पदि सर्वविधवैशिष्ट्ये सत्यपि एतत् सुनिश्चितम् यद् विद्या विनयेनैव शोभते न त्वविनयेन । ये त्वविनयवन्तो विद्वांसस्ते मूर्खा एव गण्यन्ते लोके च हास्यापात्रतामेव भजन्ते । विद्याहीनस्य तु जीवनं जीवनं नास्ति । स तु 'विद्याविहीनः पशुः' इत्युक्त्यनुसारं साक्षात् पशुरेव मन्यते । विद्याविहीनो जनस्तु 'मूर्खस्तु शोभते तावत् यावत् किञ्चिन्न भाषते' इति कथनानुसारम् तावत्कालपर्यन्तमेव शोभते यावत् किञ्चित् भाषणं नहि करोति । अतएव व्यवहारपटुभिर्मौनमेव अपण्डितानाम् भूषणम् उक्तम्—

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥

अपरञ्च विद्याहीनाः सर्वसम्पत्सम्पन्ना अपि सन्तः निर्धना एव भवन्ति । विद्याविहीनानां धनवतामपि कोऽपि निःस्वार्थभावेन आदरं नहि करोति । केवलं स्वार्थिना एव जनेन धनवानाद्रियतेनाऽन्येन । परम् विद्यावन्तस्तु सर्वत्र सर्वैरेव चाद्रियन्ते । अतः सर्वैरेव विद्यामर्जितुम् प्रयतितव्यम्, यद् विद्यारत्नम् महद् रत्नमिति सर्वेषामेवैकमत्यम् । अत एव चोक्तम्—

मातेव रक्षति पितेव हिते नियुंक्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिम् ।
किं किं न साधयति कल्पलतेव विद्या ॥

———

४९

# सन्तोष एव पुरुषस्य परं निधानम्

अनेक विधभोगप्रधानेऽस्मिन् संसारे प्रायशः सर्वेऽपि भोगान् कामयन्ते । सर्वेषामपि मानवानां चेतांसि यया कयाचिदपि कामनया व्याकुलिताः सन्ति, इत्यपि नादृक्

भूमः। किमधिकं "आप्तकामस्य का स्पृहा" इति गौडपादकथनानुसारमाप्तकामोऽपि परमात्मा "सोऽकामयत बहुस्यां प्रजायेय" इत्युपनिषद्वाक्यानुरूपं सिसृक्षाकामनयैव सृष्टिरचनामकरोत्। कथमाप्तकामोऽपि ईश्वरः सकाम इति जिज्ञासायास्तत्र संक्षेपत इदमेव समाधानं यत् परमेश्वरः लीलाकामनयैव सृष्टिं रचयति न तु लौकिक पुरुषाणामिव कयाचित् स्वार्थपूर्णकामनया। परं लौकिकस्वार्थपूर्त्यभिलाषिणो जनाः सर्वथा सकामा एवावलोक्यन्ते। लौकिकजनानां कामनाया या व्याकुलता दृश्यते सा ईश्वरस्य सिसृक्षाकामनायां लेशमात्रमपि नास्ति। का कथा लौकिकानां जनानां ये स्वकामनानां पूरणाय प्रयासं कुर्वन्तः उचितमनुचितं वा, वैधमवैधं वा, आचारमनाचारं वा, ऋतमनृतं वा हिंसामहिंसां वा, पापं पुण्यं वा कर्म अकर्मेति वा न विचारयन्ति। किम् बहुना, तानेव स्निह्यन्ति यैः स्वार्थसिद्धिः सञ्जायते, तानेवोपकुर्वन्ति येभ्यः स्वोपकारस्य सम्भावना, तानेव प्रशंसन्ति ये मिथ्यागुणानुवादं कुर्वन्ति, तानेव मित्ररूपेणाङ्गीकुर्वन्ति ये सर्वदैव स्वार्थसाधनाय सहायकाः भवन्ति। परमिदमाश्चर्यं यत् स्वार्थपूर्त्यनन्तरमपि एते स्वार्थिनः सुखं नह्यासादयन्ति, किं सुखं, 'तृष्णैकातरुणायते' इति कथनानुसारं वृद्धावस्थायामपि कामान् कामयन्तो दुःखभागिन एव जायन्ते। किमेतद्दुःखस्य कारणमिति जिज्ञासा केवलेनैकेनैव शब्देन शाम्यति स चायं शब्दः सन्तोषः। सर्वेषामपि दुःखानाम् मूलमसन्तोष एव वर्तते। अतएव सन्तोषं विना धनिनो निर्धनाः विद्वांसोऽविद्वांसः, सज्जना असज्जनाः बलवन्तो निर्बलाश्च सुखशान्तिं नावाप्नुवन्ति।

सन्तोषभावनयैव मनुष्याणां कठोराण्यपि चेतांसि कोमलायन्ते, स्वार्थिनामपि हृदयं त्यागभावनया सम्पन्नं जायते, निर्धनाश्चात्मानं धनिनो मन्यन्ते। प्राचीनकाले विश्वामित्र-वशिष्ठादयो महर्षयः सर्वदैवसन्तुष्टा आसन्। इदानीमपि विनोबादयः किञ्चिदपि न कामयन्तः सर्वथा सुखिनोऽवलोक्यन्ते।

कस्तावदयं सन्तोषो यः मानवाय सर्वविधमपि सुखं प्रददाति। किं किञ्चिदपि कर्म अकुर्वन् यदि कोऽपि बुभुक्षया पीडितोऽपि सन् स्वकीयां जीवननौकां यथा कथञ्चिद् वहति तदा किं सः सन्तोषी? नहि, नैतादृशो मानवः सन्तोषी कथ्यते। स तु अकर्मण्य आलसी च कथयितुं युज्यते। वस्तुतस्तु त एव सन्तुष्टाः ये जीवने स्वलक्ष्यान् साधयितुं यथाशक्ति प्रयासं कुर्वन्तो यत् किञ्चिदपि लभन्तश्च सन्तोषसुखमनुभवन्ति। ये सन्तोषवृत्तिमस्पृशन्तो यत् किञ्चिदपि लब्ध्वा सन्तोषं तु कुर्वन्ति परं कर्मप्रयासाद्य विरमन्ति। एतदेव सन्तोषस्य माहात्म्यम् यत् सन्तोषवृत्तिप्रधानो मानवः पूर्वकृतकर्मफलेन सन्तुष्टो भवति अन्यच्च कर्म कर्तुं प्रेरितो जायते। सन्तोषाभावे तु मानवेषु निराशाप्रवृत्तेरेवोदयो जायते। नैराश्यञ्च सर्वेषामपि दुःखानां निदानम्। वर्तमानकालिके संसारेजीवनस्य सर्वेष्वपि क्षेत्रेषु सन्तोषाभावकारणादेव नैराश्यजन्यदुःखमनुभूयते। अध्यापकाः, छात्राः, धनिनः, निर्धनाः सर्वेऽप्यद्यासन्तोषमादनया नैराश्यं प्राप्ताः सर्वथा

दुःखिनो दृश्यन्ते। असन्तोषकारणादेव लोके सर्वत्र भ्रष्टाचारस्यापि प्रचारः सञ्जातः। आधुनिकःसन्तुष्टो मानवः भौतिकान् लक्ष्यान् साधयितुमुचिततमनुचितं सर्वमेव कर्तुं तत्पर इति कस्य न ज्ञातम्। उत्कोचक्षिप्राशिषादीनिवर्तमानानि कुफलानि असन्तोषादेवोत्पन्नानि सन्ति। न केवलमतेदेवापितुवर्तमानकालिकोऽसन्तुष्टे। मानवः कदाचिदन्येषां हत्या करोति कदाचिच्चात्मानमेव हन्ति। का गणना, असन्तोषस्य कुफलानिसर्वदैव दृश्यन्ते। रावणो सन्तोषकारणादेवहतः, कंसोऽपि असन्तोषकारणादेव विनाशितः शिशुपालश्चापि असन्तोषवृत्तेरेव फलस्वरूपं मृत्युं गतः।

अतोऽयमस्माकमाशयो यद् वर्तमाने-विविधकष्टव्याप्तायिते संसारे सुखं शान्तिञ्च स्थापयितुमेकमेव सन्तोषामिधमौषधं नान्यत्।

---

५०

# संघे शक्तिः कलौयुगे

कृते, त्रेतायुगे द्वापरे कलियुगे च प्रत्येकस्मिन्नपि युगे सघशक्तेर्महिमा स्वकरणीयः। सामान्यतयाऽपि यत्कार्यमेकेन मानवेन न साध्यते तत् कार्यम् मानवसङ्घेन सरलतयाऽल्पकाल एव सम्पाद्यते, इति को निराकर्तुं समर्थः। परं कलियुगे संघशक्तिमाहात्म्यस्यात्यानस्यान्येऽपिपक्षः। सोऽयं—कलावितर युगापेक्षयाऽसत्यस्यान्यायस्य च प्राधान्यमतश्च सत्योपमहितान्यायपूर्णाञ्च गिरं कोऽपि तावन्नशृणोति। यावत् सघेन न प्रस्तूयते। सघेन चारव्यानि कठिनातिकठिनान्यपि कार्याणि सरलतयैव सिध्यन्ति। एतत्प्रतिपादकानि बहून्यपि उदाहरणानि दृश्यन्ते यथा 'कांग्रेससंघ' द्वारा स्वतन्त्रता प्राप्तिर्यथाच 'मुस्लिमलीग' सघ द्वारा पाकिस्तानप्राप्तिः।

सङ्घानामपि विविधानिरूपाणि दृश्यते। यथा राजनैतिक-सामाजिक-धार्मिक-साहित्यिकादयश्च बहवः सङ्घाः। राजनैतिकाः सङ्घाः-राष्ट्रसंघ-कांग्रेस-जनसघ-हिन्दूमहासभा-रामराज्यपरिषदादयः सघा.सन्ति। सेवासमित्यादयश्च बहवः संघाः सामाजिकाः सघा वर्तन्ते। नगरेषु दलवनामकाः सघा अपि सामाजिकाः संघा एव। सनातनधर्मस्य आर्यधर्मस्य वा प्रचारकाः धर्मसंघार्यसमाजादयो बहवो धार्मिकाः सघाः

सन्ति । अखिलभारतीयसंस्कृतपरिषदादयः, विद्यालयेषु विभिन्नविषयाणाम् परिषदश्च साहित्यिकस्वरूपेणैव शोभन्ते ।

संघशक्तेश्चमत्कारो जीवनस्य सर्वेष्वपि क्षेत्रेष्वनुभूयते । संघसामर्थ्येनैव राजनैतिकक्षेत्रे कस्या अराजनैतिकविचारधारायाः प्रभावः समाजे सम्यक् पतति । संघशक्तिकारणादेव कश्चिद्राजनैतिकः संघः शासनसत्ताम् प्राप्नोति । धार्मिकश्च संघः कस्यापि धर्मसूत्रस्य सर्वदा सर्वत्र च प्रचारं कर्तुं समर्थः । सामाजिकाश्च संघाः सर्वथा सेवां कर्तुं योग्याः एवमेव साहित्यिकाअपि संघाः कस्यापि साहित्यस्य बहूपकारं कर्तुं शक्ताः । एकाकिनस्तु राजनीतिज्ञस्य, धार्मिकस्य, समाजशास्त्रिणः साहित्यिकस्य वा तादृशः प्रभावो न दृश्यते यादृशस्तत्तत्संघविशेषस्य । अनेन संघशक्तेर्माहात्म्यम् सुस्पष्टम् ।

'संघे शक्तिः कलौयुगे' इत्यनेनस्त्वयमाशयो यत् कलियुगे संघ एव शक्तिर्वर्तते । संघशक्तिं विना कलियुगे विद्वानपि मूर्खो गण्यते, धनी निर्धनो मन्यते, सदाचारी अनाचारी कथ्यते सर्वथा योग्यश्चायोग्यो मन्यते, किमधिकं संघं विना प्राणधारिणो मनुष्यस्य कोऽपि नामापि न गृह्णाति । अतएवेदं सर्वथा सिद्धम् यत् "संघे शक्तिः कलौयुगे" ।

कलियुगे संघशक्तिपरिणामा असंख्याः दृश्यन्ते । भगवान् बुद्धः स्वकीयाम् विचारदृष्टिं प्रसारयितुं बौद्धसंघानां स्थापनां कृतवान् । बौद्धसंघैश्च बौद्धविचाराणाम् प्रचारो न केवलं भारतवर्षं एवापि तु विदेशेष्वपि निष्पादितः । संघस्य महत्तां स्वीकृत्यैव बौद्धैः 'संघं शरणं गच्छामीत्युदीरितम् । महत्तयागसम्पन्नेन महात्मना गान्धिना नेहरूपाह्वेन जवाहरलालेन वा नैकाकिना स्वातन्त्र्यम् प्राप्तमपितु कांग्रेससंघस्य साहाय्येनैव । एवमेव नैकाकिना मोहम्मदअलीजिन्ना महोदयेन भारतवर्षस्य खण्डौ विधाय पाकिस्तानदेशस्य स्थापना कृता, अपितु मुस्लिमलीगनामकसंघस्य स्थापनां कृत्वैव । किं बहुना, अधुना तु धार्मिक-संघाः, छात्रसंघाः, अध्यापकसंघाः विविधाश्चान्ये शासनकर्मचार्यादिसंघाश्च स्वावश्यकताः प्रस्तूय, यत् साफल्यं प्राप्नुवन्ति तदत्र संघशक्तिरेव निदानम् । संघादेकस्मिन्नपि पुरुषे पृथक्भूते सति महतोऽतिमहान्बलशाल्यपि कार्यम्भारयितुमसमर्थं एव । विभीषणस्य स्वभ्रातरं रावणं त्यक्त्वा रामेण मिलनमत्रोदाहरणम् । विभीषणे भिन्ने सति रावणो रामञ्जेतुमसमर्थ एव सञ्जातः । जयचन्द्रे च पृथ्वीराजाद् भिन्ने सत्येव मुहम्मदगोरी पृथ्वीराजं जेतुं शक्तोऽभवत् । अतः संघशक्तिं विना साफल्यमनिश्चितम् ।

संघस्य यदोपर्युक्ताः बहवो लाभा सन्ति तदा तस्य दुर्लभा अपि विचारणीया एव । कस्यापि संघस्य सदस्यः संघस्योचितानुचितान्वा नियमान् पालयितुं बाध्यते । अतः संघवर्तिना मानवेन मानसिकं स्वातन्त्र्यन्नानुभूयते, इति संघस्य दुर्लभ एव ।

---

५१

# महान् महत्येव करोति विक्रमम्

सामान्येनात्र संसारे द्विविधा जीवा अवलोक्यन्ते । तत्रैके महान्तोऽमहान्तश्चापरे । महत्ता चेयं विविधस्वरूपेष्वपि स्पष्टमेव यत् एकस्मिन् यदि शारीरिकशक्तिसम्बन्धिनी महत्ता दृश्यते तदाऽपरस्मिन् बुद्धिबलसम्बन्धिनी । एको यदि स्वसैन्येन महान् तदाऽपरो वैदुष्येन महान् । वस्तुतस्तु गौरवन्तु न केवलं शारीरिकशक्तिवर्ति न वा वैदुष्यादिवर्त्ति, तत् किञ्चिदान्तरिकमौन्नत्यमेव । अतो ये विविधप्रकारकमहत्तया सह प्रकृत्यापि महान्तस्त एव वस्तुतो महान्तो नान्ये । ते गौरवशालिनो यदि शक्तिबलवीरास्तदा ते आवश्यकतानुसारं वीरैः सह एव स्वकीयां शक्तिं प्रदर्शयन्ति न तु दुर्बलान् प्रति प्रकृप्य अपयशः गृह्णन्ति । वीरैः सह एव वीरत्वप्रदर्शनेन वीराणां महत्त्वं गण्यते नाऽन्यथा । एवमेव ये विद्यावन्तोऽपि महान्तस्तेऽपि विद्वद्भिः सह एव शास्त्रार्थं कुर्वन्ति नेतरैः । समानस्थितिकैः विद्वद्भिः सह एव शास्त्रार्थकरणेन विदुषाम् महिमा वर्द्धते । उदाहरणार्थम् आधुनिको महामल्लो दारासिंहश्चेत् केनचित् दुर्बलशरीरधारिणा मनुष्येण सह मल्लयुद्धं कृत्वा विजयते तदा नासौ कीर्तिभाजनतां प्राप्नोति अपितु अयशस एव कालिमया कृष्णतां याति । इयमेवगतिर्विदुषाम् वीराणाञ्च ।

प्रायशो विजय एव मानवानां सुखकरः, परं समानस्तरविदुषा पराजितो विद्वान्, वीरेणपराजितोवीरः, मल्लेन पराजितो मल्लोऽत्यन्तं दुःखं नानुभवति । विपश्चिद्वादयश्च पराजिता अपि विद्वद्वादीनां वैदुष्याधिक्येन प्रोत्साहनं प्रेरणञ्च गृह्णन्ति । अतः समानबलशालिभिः सह युद्धादिकरणेन जातः पराजयोऽपि श्रेयस्कर इति नानुचितं ब्रूमः । अत एव भारविणा महात्मभिः सह विरोधोऽपि समर्थितः —

वरं विरोधोऽपि समं महात्मभिः

ये तु विद्वांसो, वीराः, मल्लाः, धनिकाः, देशाः वा असमानस्थितिवतः विद्वदादीन् प्रति विजिगीषवस्ते तान् तान् विजित्यापि अपयशो लभन्ते लज्जास्पदताञ्चानुभवन्ति । उदाहरणार्थम् महद्धनबलशालिना अमरीकादेशेन वियतनामदेशं जेतुं यः प्रयासो विहितः सः सर्वथा निन्द्य एव । न केवलमस्माभिः भारतीयैरेवापितु बहुभिः रूसादिदेशीयैरपि जनैरमेरिकायाः व्यवहारस्य घोरनिन्दा कृता ।

बलशालिना विदुषा वा यदि समानबलवैदुष्यरहितेन सह युद्धः शास्त्रार्थो वा क्रियते तदा एकाऽपरा हानिः, सापेयम् यत् यदि दैववशात् गर्वाधिककारणाद् वा बलशाली विद्वान् वा विजयं न हि प्राप्नोति तदा तु लज्जया तस्य मरणमेव शरणम् । वियतनामदेशमजित्वा अमेरिकायाः पराजयः एव वक्तव्यः । एवञ्चातीव लज्जास्पद-

मस्मैदेशाय कृते इति को मानवतावादी नालोचयति । अन्यच्च मन्दातिमन्दगतिशालिना कच्छपेन सह प्रतियोगितां विधाय शशकेन यदपयशः अर्जितं तदपि जानात्येव सर्वथा लोकः । अद्यतने लोके एतादृशानि उदाहरणानि अवलोक्यन्ते। नेदमपि कथनमत्रानुचितं यदाधुनिको लोकः स्वकीयां महत्तां सर्वथा त्यक्त्वा निर्लज्ज एव जातः । अस्यैवैतत् फलं प्रत्यक्षं दृश्यते यत् आधुनिकाः अधिकारिणः दुर्बलान् कर्मचारिणः सर्वथैव तिरस्कुर्वन्ति । एते आधुनिका अधिकारसम्पन्ना जना न केवलं तिरस्कुर्वन्ति एव दुर्बलानपितु कोप-कुटिलया दृष्ट्या इत्थं घूर्णयन्ति यदेते शक्तिहीनाः प्राणैः जीविता अपि मृताः प्रतीयन्ते । अन्यच्च यदेतेऽधिकारिणः प्राणघातिनस्ते व्यक्तिगतसेवाभावरहितानां दुर्बलानां कर्मचारिणामाजीविकां नीत्वा तेषां हत्यामेव कुर्वन्ति । एते दुर्बलाः आजीविकारहिताः कदाचित् तु बुभुक्षिता एव म्रियन्ते, कदाचिच्च अत्यन्तदुःखिताः,प्राणघातमपि कुर्वन्ति, इति विषये नोदाहरणानामपेक्षावर्तते । धिग् बलमेतेषाम् अधिकारबलशालिनाम् । एवमेवान्येऽपि प्रवृत्या महान्तो विद्याबलशालिनोऽपि क्षुद्रा एव ।

अतो यस्तु यस्य कस्यापि क्षेत्रस्य महान् स महति एव पुरुषे स्वकीयं विद्याबलादिनैपुण्यं प्रदर्शयति नान्येऽवले । यथा सिंहः शृगालं न हन्ति न वा शशकम् । अतो विद्वद्भिः विपश्चिद्भिः, वीरैः सुवीरैः, अधिकारिभिः अधिकारिभिः मल्लैः सुमल्लैः राजनीतिज्ञैश्च कूटनीतिज्ञैरेव सह स्वबलस्य नैपुण्यं परीक्षितव्यम् न खल्वितरैरिति मे मतिः । महतामयमेव पन्थाः । न केवलं चेतनमेव जगदपितु जडोऽपि पदार्थः संसार एनमेव महनीयम् पन्थानमनुसरति, यद् प्रभञ्जनो यदि बलशाली तदा सः पुष्टमूलयुक्तान् वृक्षानेव उन्मूलयति न तु प्रासादीन् इति सर्वथोचितमेवोक्तम्—

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः
स तूच्छ्रितानेव तरून् प्रबाधते
महान् महत्येव करोति विक्रमम् ॥

———

२२

## गुणाः पूजास्थानं गुणिषु न लिङ्गं न च वयः

परमेश्वरपूजेवपुरुषपूजाऽपि संसारेऽनादिकालादेव प्रचलति । पुरुषोऽपि 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति कथनमनुसृत्य नहीश्वरादभिन्नः । अत एव

मानवोचितगुणान्विताः धर्मपरायणाश्च पुरुषाः स्त्रियो वा, बालका वृद्धाः वा, धनिनो निर्धना वा, कृष्णाः गौराः वा, स्वदेशीयाः विदेशीयाः वा, ब्राह्मणाः क्षत्रियाः वा, वैश्याः शूद्राः वा, सर्वेऽपि पूजामर्हन्ति । पूजा च श्रद्धाभावार्पणम् । एवञ्च गुणा एव श्रद्धाया आश्रयभूताः । अतएव गुणाश्रितपूजासमर्थनकारिणा महाकविना भवभूतिना चित्रितयाऽरुन्धत्या सीतां प्रति स्वकीयः श्रद्धाभावः प्रदर्शितः । या सीताऽग्निपरीक्षा-पारिताऽपि स्फुरितकठोरगर्भमादधाना निर्जने वने परित्यक्ता तां सम्बोध्यारुन्धत्या उक्तम् यत् त्वं शिशुरस्तु शिष्या वा, त्वयि शिशुत्वमस्तु स्त्रैणं वा, परं त्वदीयो विशुद्धताया उत्कर्षो मम श्रद्धां दृढां करोति, यत्पूजाया आधाररूपा गुणा एव सन्ति, न तु लिङ्गं न वा वयः । श्लोकश्चायम्—

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा,
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु, ननु वन्द्यासि जगतां,
गुणाःपूजास्थानं गुणिषु न लिङ्गं न च वयः ।

गुणाश्रितायाः पूजाया इदमपरं वैशिष्ट्यं यद् गुणी पुरुषः कस्यचिदेकस्यैव श्रद्धाभाजनं पूजाभाजनं वा न भवति अपि तु विश्वव्यापिगुणकारणात् सर्वस्यापि जगतः पूजा-पात्रत्वं भजते । इदमेव कारणं यत् रामः श्रीकृष्णो वा केवलं दशरथस्य वासुदेवस्य वा कस्यचित् स्वबान्धवस्यैव वा प्रियोनाऽऽसीत् अपितु सर्वेषामेव । अत्र सर्वत्वेन त एव ग्राह्या ये धर्मप्रियाः मानवोचितगुणप्रियाश्च, न तु रावणादयः कंसादयो वा ये रामा-दीनां धर्ममपि अधर्मम् गुणांश्च दोषानिव अमन्यन्त । एतादृशैस्तु रामादीनां गुणाना-मज्ञैस्तेषां रामादीनां निन्दा नास्वाभाविकी । यदुक्तमेव—

न वेत्ति यो यस्य गुणप्रकर्षं
स तस्य निन्दां सततं करोति ।

गुणवांस्तु पुरुषः सम्बन्धेन लघुरपि महतां पूज्यः श्रद्धेयश्च भवति । उदाहरणार्थं जनकेन, रामभद्रेण परित्यक्ता स्वतनयाऽपि सीता विनयकारणात् मातृवदादृता । यदुक्तमुत्तररामचरिते—

"आर्ये, मातर्देवयजनसम्भवे ! ईदृशस्ते निर्माणभागः परिणतः ।"

अत एव,गुणवान् धर्मपरायणश्च पुत्रोऽपि पित्रा, शिष्योऽपि गुरुणा, सेवकोऽपि स्वामिना माननीयश्च एव ।-अधर्मपरायणो गुणरहितश्च सन्निकटो महानपि च जनः धर्मप्रियैः सच्चरित्रवदादिमश्च जनैर्न केवलं अनाद्रियत एवापितु त्यज्यतेऽपि इति नान्यथा उच्यते । निदर्शनार्थं धर्मप्रियेण मर्यादापुरुषोत्तमरामभक्तेन विभीषणेन परमपहितः स्वभ्राताऽपि रावणः परित्यक्त इति को न जानाति । इत्यनेनेदं सर्वथैव स्पष्टं यत्

पूजायाः श्रद्धायाः वाऽऽधारभूता गुणा एव सन्ति न तु पुत्रादयः सम्बन्धाः। गुणवांश्च जनः कस्यचित् सम्बन्धिजनस्यापेक्षयाऽधिकमेव सम्मानं लभते, इत्यपि नायथार्थं कथनम्।

अस्माकं वर्णव्यवस्थाया अपि आधारभूता गुणा एव आसन् न तु जन्मानुसारं ब्राह्मणादयो वर्णाः। यदि प्राचीनकाले ब्राह्मणानाम् महत्त्वमासीत् तदा वेदाध्ययनाध्यापनादिकर्मकरणादेव। एवमेव च सज्जनानां रक्षकाः क्षत्रिया एव श्रद्धेया आसन्नतु भक्षकाः। अनेनैव प्रकारेण व्यापारगुणवन्तो वैश्याः सेवागुणसम्पन्नाश्च शूद्राः सर्वथा स्वगुणकारणादेव परस्परमाद्रियमाणाः स्वजीवनमयापयन्त। अनेनेद स्पष्टं यद् ब्राह्मणानां महत्ता कुलजन्मानुसारन्नासीत्, अत एवोक्तिरियम्—

"सूतो वा सूतपुत्रो वा योवा को वा भवाम्यहम्।
दैवायत्तं कुले जन्म ममायत्तं तु पौरुषम्॥"

अद्यतनी तु स्थितिः सर्वथा भिन्नैव यदधुना निरक्षरा अपि बहवोब्राह्मणा ब्राह्मणकुले जन्मग्रहणादेवात्मनः शिरोधार्यान् मन्यन्ते मदिरामत्ताश्चानेके क्षत्रियाः सतामनुपकारमपि कुर्वन्त आत्मन सुवीरान् गणयन्ति। किमधिकमद्यतु गुणाः गौणाः वर्तन्ते जात्यादीनि लिङ्गानि च प्रधानानि। अद्यतनोजातिपक्षपातो नितरां दूषितः। यदनुसरं बहवोब्राह्मणा ब्राह्मणानेव क्षत्रियाः क्षत्रियानेव, वैश्या वैश्यानेव शूद्राश्च शूद्रानेवोपकुर्वन्ति नान्यान्। अस्माकं भारतवर्षस्यावनतेरिदम् प्रमुखम् बीजम्। यदस्माकं देशे तेषां कृते एवोन्नतिसौकर्यं वर्तते येषां सम्बन्धिन उच्चाधिकारिणः। अन्ये बहवो उच्चात्युच्चोपाधिभाजोऽपि गुणवन्तोऽस्मिन् देशेऽनपेक्षितवृक्षमिव शुष्यन्ति। एतान् विपश्चिद्वर्यान् कोऽपि तृणमिवापि न गणयति। एते च गुणवन्तो, न केवलमेतदेव यत् पदोन्नत्यादिकं साफल्यं नाप्नुवन्ति, अपि तु एते गुणविरहितैर्जनैः सहासं मूर्खोपाधिभाजो विधीयन्ते। गुणविरहितास्तु बहवो जनाः क्वचित् चरणवन्दनेन, क्वचित् मिथ्याप्रशंसया, क्वचिदुत्कोचेन क्वचिच्च सेवावृत्या स्वकार्यं साधयन्ति न विचारयन्ति स्वाभिमानं स्वकीयं मानवीयं चरित्रञ्च। एतांश्च गुणविरहितान् जनान् सफलीभूतान् दृष्ट्वा बहवो गुणिनोऽपि तेषामेव पद्धतिमनुसरन्ति, परन्नहि सर्वे। एते आदर्शभूता गुणिनो भौतिकावनतिं स्वीकुर्वन्ति, बुभुक्षया-पीड्यमाना अपि जीवनं यापयन्ति अनेकांश्च क्लेशान् सहन्ते परं प्राणेभ्योऽपि प्रियं स्वचारित्र्यं मानवीयांश्च गुणान्न त्यजन्ति। तेषान्तु इयमेव धारणा—

"मानो हि महतां धनम।"

वस्तुतस्तु मानवजीवने गुणानाम् महन्मूल्यं वर्तते। वैदुष्यादिगुणकारणादेव गुणिनो विद्वांसो राज्ञोऽपेक्षयाऽधिकैर्जनैः पूज्यन्ते। राजा तु स्वराज्य एव पूज्यते, परं विद्वान् सर्वत्रैव। अत एवोक्तम्—

"विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥"

अत्रैवेदमभिवक्तव्यं यद् वैदुष्यादिगुणापेक्षया मानवीया गुणाः स्पष्टमेव प्रशस्ततराः । विद्वांसोऽपि चरित्रगुणान् विना कदाऽपि न शोभन्ते । 'विद्या विनयेन शोभते', 'आचार-हीनान्नपुनन्ति वेदाः' 'शीलं परं भूषणम्' इत्याद्युक्तयः मानवचरित्रस्यैव प्राधान्य प्रति-पादयन्ति । तदिदं चरित्रबलं महाबलम् । चरित्रबलाभावे तु वेदपारङ्गतं विद्वांसं कोऽपि कथमपि न गणयति । अतो यद्यपि विद्यादिगुणा अपि मानवस्य पूजायाः कारणानि सन्ति, परं चारित्र्यादिगुणशोभितस्य मानवस्य या पूजा विधीयते साऽतिशयश्रद्धासम-न्विता अधिकक्षेत्रव्यापिनी च । उदाहरणार्थम्, कोऽपि विद्वान् विद्याप्रियैरेव जनैरा-द्रियते परं सत्यादिवैशिष्ट्यसम्पन्नस्तु जनः न केवलं विद्वद्भिरेवापितु मूर्खातिमूर्खैरपि-सम्पूज्यते । महात्मनागान्धिना संसारे या पूजा श्रद्धा च प्राप्ता सा न स्वकीयवैदुष्य-कारणादपि तु चरित्रबलकारणादेवेति सर्वैः स्वीकर्त्तव्यम् । अतो विद्वत्तादिगुणैः सह यदि चारित्र्यबलमपिस्यात्तदा तु स्वर्णे सुगन्धयोगस्यैव स्थितिः ।

सामान्यतया तु गुणानामभावे मानवजीवनं पशुवदेव वर्तते । येषु न विद्यादयो गुणाः वर्तन्ते न च परोपकारादय एव तेषान्तु व्यर्थमेव जीवनम् । एतादृशास्तु जनाः 'काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते', इत्यनुसारं केवलं जीवनभारमेवावहन्ति न तु मनुष्यजीवनं यापयन्ति । अत एवोक्तम्—

'येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूताः,
मनुष्यरूपेण मृगाश्चरन्ति ॥'

मानवेनातो याथार्थ्येन मनुष्यजीवनं यापयितुं विद्यादिगुणानां चरित्रगुणानाञ्च प्राप्तये सर्वथा प्रयत्नो विधेयः । गुणैर्यादृशं सम्मानं, स्नेहः प्रतिष्ठा च प्राप्यते तत् सर्वं नान्यैरसत्साधनैरित्यस्माकं दृढो निश्चयः । गुणातिरिक्तैः असत्साधनैर्यत् सम्मानं प्रतिष्ठा च प्राप्यते सा न स्थायिनी न वा लोकव्यापिनी न च सज्जनानुमोदिता । अतोऽस्माभिर्गुणानेव विचार्याऽन्येषामादरः कर्त्तव्यः, न तु केवलम् आयुरादिलिङ्गम् दृष्ट्वेति कथनमेवास्माकं प्रधानम् । यद्यस्मद्देशीया अधिकारिणः शासकाश्च गुणान् विचार्य स्वकार्यं पारयिष्यन्ति तदाऽस्मद्देशवर्ती भ्रष्टाचारः शीघ्रमेव पलायिष्यत, इति वयं समुचितमेवाशंस्महे ।

---

५३

# व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः

प्रेम जीवनस्य मूल्यातिमूल्यतमं वस्तु इति विषये न कस्यापि वैमत्यं भवितुमर्हति। प्रेम किञ्चिदेतादृशं तत्त्वं यज्जडेष्वपि चैतन्यमारोपयति, विविधानपि पदार्थान् योजयति, दूरातिदूरस्थानपि सन्निकटमानयति, असंख्यानपि जनान् एकसूत्रेण बध्नाति, अपरिचितानपि परिचितान् करोति। किमधिकम्, प्रेम परमात्मानपि प्रापयति।

किं प्रेम्णः स्वरूपमिति जिज्ञासायां तु इदमेव वक्तव्यं यत् न रूपम्, न वा वित्तम्, न वा किञ्चिदन्यद्बाह्यं वस्तु प्रेम्ण आश्रयभूतम्, अपि तु प्रेम कश्चिदान्तरिक एव पदार्थः यश्चानिर्वचनीयोऽपि। अतएव उत्तररामचरितस्य षष्ठेऽङ्के यदा पुत्रत्वेनापरिचितमपि लवं दृष्ट्वा रामस्य चित्तं स्नेहेनाकृष्टं तदा तेनैतदेव सुनिर्णीतं यत् कोऽपि आन्तरिक एव हेतुः पदार्थान् अन्योऽन्यसंसक्तान् करोति। अन्यच्च प्रीतयः पितृ-पुत्रादीन् विविधान् सम्बन्धान् अपि नापेक्षन्ते। उपर्युक्तामेव धारणामर्थान्तरन्यासेन पोषयता महाकविना भवभूतिनोक्तं यद् यथा सूर्योदयं दृष्ट्वा पुण्डरीकविकासस्य चन्द्रमसं दृष्ट्वा चन्द्रकान्तमणेश्च द्रवणस्य कोऽपि आन्तरिकोहेतुस्तथैव प्रीतिहेतुरपि कश्चिदन्तर्भूत एव। तदेवोक्तम् मनोविज्ञानविशारदेन कविवरेण भवभूतिना—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु
र्नखलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं,
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥

यत् खल्वान्तरिकञ्च प्रेम तदेवादर्शभूतमपि। आन्तरिकप्रेमपरिपुष्टाः जनाः सदैवाद्वैतभावनावशीभूताः सुखदुःखावस्थयोः समानरूपेणैवावतिष्ठन्ते। एषैव प्रेम्णोऽद्वैतता या सुव्याख्याता उत्तररामचरितकृता—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात्परिणते यत्प्रेमसारेस्थितं,
भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत्प्राप्यते॥

अतो यत् प्रेम केवलं सुखे एव वर्तते न दुःखे, यत् रूपसौन्दर्यमपेक्षते नाऽन्यत् यत् तरुणिमानमेवापेक्षते न जराम्, यत् समृद्धिमपेक्षते न दैन्यम् न तत् वास्तविकं

प्रेम । वास्तविकन्तु तदेव प्रेम यत् दुःखेऽपि प्रकटीभवति, दीने, करुणे, वृद्धे च वसति । एवञ्च ये जनाः जातिं गोत्रञ्चाश्रित्य प्रेम कुर्वन्ति न तेषां तत् प्रेमापि तु प्रवञ्चनमेव । विशुद्धास्तु प्रेमिणो न जातिं चिन्तयन्ति न वा किञ्चिदन्यद् बाह्यं लिङ्गम् विचारयन्ति । किमस्माकमादर्शपुरुषेण रामचन्द्रेण शबर्याः बदरीफलानां भक्षणावसरे तस्याः शबरजातिर्विचारिता ? नह्येतत् । एवमेव यदि भक्तप्रियेण श्रीकृष्णेन विदुरशाकोऽपि सानन्दं स्वीकृतस्तदा तत्र प्रेम एव हेतुर्नान्यत् । एवमेव यदि कश्चित् कुरूपो, दीनो, हीनो वा केनचित् स्निह्यति तदा तत्रान्तरिकमेव प्रेम हेतुतया ग्राह्यम् ।

यदिदमान्तरिकं प्रेम तत् स्वार्थात् दूरातिदूरं वर्तते । शुद्धश्चप्रेमी बाह्यतः स्वार्थसिद्धिमपूरयन्नपि प्रेमिणोऽपूर्वां सिद्धिं साधयति । अत एव कविकुलगुरुणा भवभूतिनाऽपि उक्तम्—

न किञ्चिदपि कुर्वाणः, सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥

यदुपर्युक्तेनश्लोकेन सर्वथा स्पष्टं प्रेमी कस्यापि अद्भुतमेव द्रव्यं वर्तते । अन्येषां लौकिकानां द्रव्याणामुपलब्धिः सरलतया भवितुमर्हति परं शुद्धस्य प्रेम्णो लाभो न सरलः । शुद्धप्रेमयुक्तं वास्तविकन्तु सन्मित्रं एकमेव पर्याप्तम्—यदुक्तं भर्तृहरिणा—

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा
एको वासः पत्तने वा वने वा
एका नारी सुन्दरी वा दरी वा ॥

स्वार्थपूर्तिवशात् कृतन्तु प्रेम न आन्तरिकं न च स्वाभाविकम्, तत्केवलं प्रदर्शनमात्रं प्रवञ्चनमात्रञ्च । एते स्वार्थसाधनपरास्तु प्रेमप्रदर्शकाः प्रवञ्चकाः मूर्खमपि विद्वांसमिव स्निह्यन्ति, सरलं विद्वांसञ्च मिथ्याप्रेमप्रदर्शनेन प्रवञ्चयन्ति । कुत्सितम् एतदवास्तविकं प्रेम यत् स्वार्थिनो जनान् स्वार्थवशात् गर्दभमपि पितरमिव पूजयितुं प्रेरयति । स्वार्थवशाज्जातम् एतादृशन्तु प्रेम स्वार्थपूर्तौ सत्याम् किञ्चित्कालानन्तरमेव समाप्तिं याति । परमेतद्विपरीतं यदान्तरं वास्तविकञ्च प्रेम तत्र स्वार्थमुद्दिश्यवर्द्धते न वा हीयते, तस्य तु स्वाभाविकी एव उत्तरोत्तरवृद्धिरिति स्पष्टमेवोक्तं विपश्चिद्भिः—

आरम्भगुर्वी क्षयिणीक्रमेण लघ्वीपुरा वृद्धिमती च पश्चात् ।
दिनस्यपूर्वार्द्ध-परार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥

अतश्चायमाशयः स्पष्ट एव यत् वास्तविकं शुद्धञ्च प्रेम किमपि बाह्यं नापे-

क्षते, तत् किमपि आन्तरिकम् अनिर्वचनीयञ्च हेतुमेवाश्रित्यावतिष्ठते इत्यञ्चायमेव कोऽपि विलक्षणो हेतुः पदार्थान् व्यतिषजति, इति 'व्यतिषजति पदार्थानान्तर: कोऽपि हेतुः' इत्युक्त्वा भवभूतिना सम्यगेव प्रतिपादितम् ।



२५

## चक्रवत् परिवर्तन्ते सुखानि च दुःखानि च

परिवर्तन प्रकृतेर्नियम एव । परिवर्तनञ्च प्रकृते: कश्चिदेतादृश: शासको यस्य कठोरम् कोमलम् वा शासनम् सर्वेऽपि प्रणतभावेन स्वीकुर्वन्ति । जडो वा चेतनो वा नरो वा कुञ्जरो वा नृपतिर्वा भिक्षुर्वा ज्ञानी वाऽज्ञानी वा कीटा: वा पतङ्गा वा सर्वेऽपि परिवर्तनशासनात् मुक्ता: भवितुं नार्हन्ति । तत्राऽत्र: परिवर्तनस्य अक्षयशासनस्यैवाय प्रत्यक्ष: परिणाम: यद् यत्र पूर्वं प्रासादा आसन् तत्राद्य तेषां भग्नावशेषा एव विराजन्ते, ये पूर्वं निर्जनप्रदेशा आसन् तेऽद्य विविध-विधरामणीयकशोभितै: प्रासादै: शोभन्ते । यत्र पूर्वं जलान्यासन् तत्राद्य स्थलानि दृश्यन्ते यत्र च स्थलान्यासन् तत्राद्य पयांसि पीयन्ते । एतत् सर्वं परिवर्तनस्यैव विलक्षण कर्म यद् ये ह्यो राजान आसन् तेऽपि भिक्षुका: सन्ति ये चाद्य समृद्धिशालिन: श्रेष्ठिन: राजानो वा विराजन्ते ते ह्यो भिक्षुकाएव आसन् । कश्च जानाति यत् परिवर्तनकृपया ते 'पुनर्मूषको भवेति' रीत्या पुनर्भिक्षवो भविष्यन्ति । अद्यतने प्रजातन्त्रे शासनेऽस्य असंख्यानि उदाहरणानि दृश्यन्ते, यत् यो ह्य: साधारणातिसाधारणं जीवनमयापयत् सोऽद्य मन्त्रिपदमलङ्कृत्य राज्यसुखमनुभवति अन्यस्मिन्नेव च दिने स्वकीयस्य संघस्य बहुमतहाने: पूर्वकालिकीमेव स्थितिं पुन: प्राप्नोति । अनेनेदं स्पष्टं यत् परिवर्तनस्य सत्ता सुखकरी क्लेशकरी च । परिवर्तनमहिम्ना एव च क्षणमात्र एव सुखं दुःखस्य, दुःखं च सुखस्य स्थानं गृह्णाति । अतएवोक्तं यत् सुखदुःखानि रथादिचक्रवत् परिवर्तनशीलानि सन्ति—

"चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च"

सुखदुःखयो: प्रत्यक्षमेव क्षणिकत्वदर्शनात् लोके कोऽपि न सर्वत: सुखी न च दुःखी भवितुमर्हति । अस्य कारणन्त्विदमेववर्तते यत् सुखदुःखयोराधारभूता: लौकिकविषया

एव यदा क्षणिकास्तदा तदाश्रितानि विविधानि सुखदुःखानिस्वभावत एव क्षणिकानि भविष्यन्ति। परिवर्तनमेव कैश्चित् भागधेयमपि उच्यते। ये खलु नियतिवादिनो भाग्यवादिनश्च तेषां तु इद कथन यत् मानवस्य सुखम् वा दुःखम् वा सर्वभाग्याधीन-मेव वर्तते। भाग्यस्य पंक्तिश्चापि चक्रारपंक्तिरिव परिवर्तनं याति। यच्चोक्त भासेनाऽपि—

"कालक्रमेण जगतः परिवर्तमाना
चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः।

सुखदुःखादिकस्य कर्तुः विनाशयितुश्च परिवर्तनस्य सर्वेशम् परमात्मानमति-रिच्य सर्वमेव व्यवहारक्षेत्रम् वर्तते। अस्य परिवर्तनसम्राजः सैन्यमपि विपुलम्। कदाचित अतिवर्षणम्, कदाचित् भीषणः प्रभञ्जनः, कदाचित् भूचालोपद्रवाः, कदा-चित् महाव्याधिः कदाचिच्च महायुद्धानि परिवर्तनस्य सैन्यरूपेण काय कुर्वन्ति। परिवर्तनस्य सैन्येन दत्ते महति दुःखे प्राप्ते सति पूर्वानुभूतस्यातिमहतोऽपि सुखराशेः केवल स्मृतिच्छाया एव मनुष्यस्य हृदयपटलेऽङ्किता सती त तीव्रपरितापेन सन्ताप-यति। इदन्तु अतीव विस्मयकारकम् यत् सुखदुःखयोः क्षणिकत्व साक्षात् अनुभवन्नपि मानवः सुख प्रति लालायितः भ्रष्टाचारपरश्च दृश्यते। यदा सुखानां क्षणिकत्व स्वभावसिद्धमेव तदा तेषां कृते मानवस्य तृष्णाधिक्यम् सर्वथानुचितमेव प्रतीयते। अतः मनुष्यस्येदमेव कर्त्तव्य यत्तेन महद्वैभव सुखराशिञ्च आसाद्यापि अहङ्कार-भावनया मदोन्मत्तेन न भाव्यम्। तेन तु इदमेव कालिदासोक्तम् महत्त्वपूर्ण कथनम् मनसि धार्यम्—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।"

यथा ऐश्वर्यशालिभिः सुखराशिमवाप्यापि मदोन्मत्तैर्नभाव्यम् तथैव अनेकविधदुःखा-नुभवद्भिरपिजनैरतिव्ययेन विकलैर्नभाव्यम्। यथा सुखानि क्षणभङ्गुराणि तथैव दुःखा-न्यपि। महतोऽतिमहदपि दुःख क्षणमात्रेणैव विनश्यतीति नाश्चर्यास्पदम्। अतिनिर्धनः सुदामा नामको विप्रः भगवत्कृपया कथं क्षणमात्रेणैव विविधवैभवसम्पन्नः सञ्जात इति विदितमेव सर्वेषाम। अधुनाऽपि 'लाटरी' पद्धत्या श्रमिकाः, भारवाहकाः निर्धन-कृषकाः अतिनिर्धनाश्चाऽन्ये जना अनायासमेव लक्षाना पञ्चकं, त्रयं द्वयम् वा प्राप्य क्षणमात्रेणैव वैभवसम्पन्नाः जायन्ते। अतो महत्यामपि विपदि व्यसनेप्राप्ते मनुष्येण हतोत्साहेन न भाव्यम्। ये व्यसने न मुह्यन्ति ते श्रेयांसि प्राप्नुवन्त्येवेति सरित्सा-गरेऽपि सम्यगुक्तम्—'अश्नुते स हि कल्याणं व्यसने यो न मुह्यति।' अतो न सुखात्

अत्यन्तं हर्षितव्यम् न वा दुखात् भेतव्यम् यद्द्वौ अपि परिवर्तनशीलौ क्षणिकौ च। अत एव सुखदुःखयोः समताया उपदेशो भगवता श्रीकृष्णेन अर्जुनमपि दत्तः —

"सुखदुःखे समे कृत्वा लाभालाभौजयाजयौ।
ततो युद्धाय युज्यस्व नैवम्पापमवाप्स्यसि ॥"



५५

# उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः

लोके लक्ष्म्याः बहूनि रूपाणि दरीदृश्यन्ते। यथा राज्यलक्ष्मीः, विजयलक्ष्मीः धनलक्ष्मीश्च। भोगप्रधाने चास्मिन् संसारे मानवस्य लक्ष्मीप्राप्त्यै प्रयासोऽपि स्वाभाविकः। ये लक्ष्मीवन्तस्त एव सर्वगुणसम्पन्ना अपि मन्यन्ते। अत एवेयमपि उक्तिः प्रसिद्धा जाता—

*"सर्वे गुणाः काञ्चनमाश्रयन्ते"*

*लक्ष्मीप्राप्तिः कथं भवेदिति कृतेऽपि मानवस्य जिज्ञासा स्वाभाविकी।* अत्रेदमपि निगदनं नानुचितं यत् संसारे लक्ष्मीप्राप्त्यै प्रयतमानाः जनाः द्विप्रकारका अवलोक्यन्ते। एके तै ये आत्मानं दैवाधीनं कृत्वा लक्ष्मीप्राप्त्यै प्रयतन्ते अपरे च ते ये उद्योगं कृत्वा लक्ष्मीमधिगन्तुमीहन्ते। ये च पूर्वे दैवाधीना अनुद्योगिनस्ते स्वकीये लक्ष्यलाभे प्रायशोऽसफला एवावलोक्यन्ते। *यैः कैश्चिद् विनैव प्रयासं लक्ष्मीप्राप्तिः क्रियते* चेत्तदा तैस्तादृश आनन्दो नानुभूयते यादृश उद्योगिभिर्लक्ष्मीप्राप्त्यनन्तरम्। अपरञ्चानुद्योगेन प्राप्तायाः लक्ष्म्याः दैवपरैर्जनैः रक्षाऽपि कर्तुं न शक्यते। अतो दैवाधीनतया लक्ष्मीप्राप्तिप्रयासः सर्वथा निष्फल एव। ये चोद्योगिनो लक्ष्मीसमुपासकास्ते सर्वदैव हृष्टा अवलोक्यन्ते। उद्योगिभिस्तु जनैः साफल्याभावेऽपि उद्योगजन्य आनन्दोऽनुभूयते एव। सामान्यतयोद्योगिनः सर्वदैव लक्ष्मी प्राप्नुवन्ति।

कार्पण्यदोषयुक्ता एव जनाः दैवाधीनाः जायन्ते। मनुष्यैः सदैव दैवाधीनताम् परित्यज्य उद्योगो विधेयः। उद्योगे कृतेऽपि यदि कार्यं न सिध्यति तदा नायम् मानवस्य दोषः, अतोऽस्मिन् विषये मानवेन पश्चात्तापो न विधेयः। अत एवोक्तम्—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी—
दैवेन देयमिति कापुरुषाः वदन्ति।

दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥

अतः लक्ष्मीप्राप्त्यै प्रयस्यमानैर्मानवैरुद्योगपरैर्भाव्यम् । केवलं कल्पनेन विचारणेन वा बलवतामपि कार्याणि न सिध्यन्ति । यदुक्तमपि—

उद्योगेनैव सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

उद्योगेन साफल्यमभिलषतामस्माकं नायमाशयो यद् वय दैवं नहि स्वीकुर्मः । वयमपि दैवविश्वासिनः, परमस्माकम् कृते उद्योगस्यैव प्रधानता न तु दैवस्य । उद्योगेन साफल्य प्राप्तवता बहूनि उदाहरणानि सन्ति । किं पुरुषाः, पशुपक्षिणः कीटाश्चापि उद्योगेन स्वकार्ये साफल्यमाप्नुवन्ति । किमत्र नोचितम् पिपीलिकाया उदाहरणम्, या स्वकीयेनोद्योगेन महत्या अपि वालुकाराशेः शर्कराकणानाञ्च सचयं कृत्वा शर्करारा शि सञ्चिनोति । विश्वे सर्वदा सर्वैरेव महापुरुषैः स्वोद्योगसाधनेनैव साफल्यम् प्राप्तम् । उद्योगसाधनेन जना असम्भवान्यपि कार्याणि साधयन्ति । आङ्गलदेशीयैः शासके शासिते भारतवर्षे स्वतन्त्रताप्राप्तेः कल्पनाऽपि नासीत् । परं स्वातन्त्र्याभिलाषिभिर्महात्मागान्धिजवाहरलालादिभिर्भारतीयैर्देशभक्तैस्त्यागमयेन स्वकीयोद्योगेनासम्भवापि स्वतन्त्रता सम्प्राप्ता, इति को न जानाति ।

लौकिकानामेव साध्यानां प्राप्त्यै उद्योगो नापेक्ष्यते अपि तु अलौकिकसाध्यं मोक्षं प्राप्तुमपि उद्योगस्यापेक्षा वर्तत एव । यथा ज्ञानमार्गानुगामिभिरात्मस्वरूपस्य बोधार्थं "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यनुसारं श्रवणादीनां साधनता स्वीक्रियत एव । अतो लौकिकानामलौकिकानाम् वा साध्यानां प्राप्तिः प्रायश उद्योगमपेक्षत एवेति सुनिश्चितम् ।



३६

# कामी स्वतां पश्यति

कामो मनसिजः । मनसो जातत्वात् कामस्य प्रबलत्वं सहजम् । अस्य त्वेतदेव कारणं यन्मनसो वेगः प्रभावश्च सर्वाधिकः । विवेककर्त्री बुद्धिरपि मनसा जीयते ।

आत्मतत्त्वजिज्ञासापि च मनसोवेगमवलोक्य दूरं पलायते । एतन्मनश्चाञ्चल्यं स्वाभाविकम् । अतएव गीतायां

चञ्चलं हि मनः कृष्ण प्रमाथिबद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥

इत्युक्त्वा मनसः प्राबल्यं सूचितम् । मनसः प्राबल्ये सति कामिनो हृदि विवेकाभावो-निवार्यः । वस्तुतस्तु कामी मदान्धोनृप इवास्ति । यथा मदान्धो नृपः विवेकं विस्मृत्य स्वेच्छया आचरति तथैव कामीजनोऽपि कामान्धो भूत्वा स्वेच्छापूर्त्यर्थमेव सर्वथा प्रयतते । कामिनो विविधाः, कामानाम् असंख्यत्वात् । कश्चित्, यदि अर्थं कामयते तदाऽन्यो विद्याम्, कश्चिद् यदि प्रतिष्ठां कामयते तदाऽन्यः पुत्रादीन् अन्यश्च रमणीम् । यद्यपि सर्वेऽपि कामा अशान्तेरविवेकस्य च कारणानि सन्ति पर सर्वेष्वपि मदनोत्पादितस्य कामस्य प्रभावोऽतिशयेन बलीयान् । के न वशीभूता अस्य कामस्य । तत्वज्ञानी महर्षिर्नारदोऽपि कामाकुलो भूत्वा मोहिनीम् दृष्ट्वा मुग्धो बभूव । एवमेवातस्त्वन्यान्यपि उदाहरणानि प्राप्यन्ते । इत्यञ्च कामस्य प्रभावो दुर्जेय एव ।

कामिनः स्वभावस्तु कश्चिद् विलक्षण एव । मदनप्रभावप्रभावितोऽन्धश्च कामो सर्वमपि जगत् स्वेच्छानुरुपमेव मनुते । यदि कामो कामपि सुन्दरीमभिलपति तदा तस्य स्वयमेव निर्णयो यत् सापि तमवश्यमेवेच्छति । यदि कदाचित्काचिद् रमणी किञ्चिदन्यत् पदार्थमवलोकयन्ती कामिनः संमुखमास्ते तदा स्वयं सर्वथैव निश्चिनोति यदियम् मयि अनुरक्ता एव । कामिनोऽयमपि स्वभाव उल्लेखनीयः यदयम् केवलं चेतनप्राणिनामेव क्रियाकलापान् आत्मपरान् न मनुतेऽपितु जड़प्रकृतेरपि क्रियामात्मन्यारोपयति । अयमेव हेतुर्यत् कलिकायाः कम्पने कामिना प्रियायाः सङ्केतानमनुमीयते । पत्राणाम् प्रकम्पे च रमण्याः भ्रूविलासोऽनुभूयते कोकिलायाश्च रवे विरहिण्याः वेदनास्रावः श्रूयते । किमधिकम्, कामिना काका अपि विरहदग्धप्रियायाः धूमात् धूमायिता अवलोक्यन्ते कामिनस्तु कृते नाहारजलान्यपि अश्रूणि, बिल्वफलान्यपि कठोरस्तनानि, मधुकरगुञ्जितान्यपि सुगीतानि, विद्युल्लेखाऽपि च प्रिया करधनी इव प्रतिभाति । अत्यन्तं ज्वलन्तञ्चात्रोदाहरणाम् मेघदूतान्तर्गतकालिदासचर्चितस्य यक्षस्य यः प्रियाविरहाद् व्याकुलो मेघमेव स्वसन्देशहरं दूतम् अमनुत । एवञ्चायम् कामी यक्षः स्वकामवृत्त्यैव मेघन सह बान्धवसम्बन्धमपि अस्थापयत् । कथञ्चास्य यक्षस्य हृदि निष्प्राणं मेघं प्रति-दूतभावः बान्धवभावश्च समजनि, इत्यस्याः समस्याया उत्तरं कालिदासेन मेघदूत एव इत्थं दत्तम्—

धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः,
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।

इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे,
कामार्ता हि प्रकृति कृपणाश्चेतनाचेतनेषु ॥

यत् कालिदासस्य 'कामार्ता' इत्यादि कथनेन स्पष्टं कामिनो जनाः जड्चेतन-प्रकृतिकृतां सर्वामपि क्रियाम् आत्मपरायणाम् मन्यन्ते। कामिनो दुष्यन्तस्योदाहरणेनैतत् स्पष्टमेव दृश्यते यत् कामवासनावासितः कामी कथं सर्वानपि प्रियाकृतव्यापारान् आत्मार्थकृतान् मन्यते। यदधोलिखितेन शाकुन्तलश्लोकेन सुविज्ञातम्, दुष्यन्तः प्रियायाः शकुन्तलाया विविधानपि व्यापारान् आत्मपरायणानेव जग्राह—

स्निग्धं वीक्षितमन्यतोऽपि गमने यत् प्रेरयन्त्या तथा,
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी,
सर्वं तत् किल मत्परायणमहो कामी स्वतां पश्यति॥

कामिना केवलं आत्मपरायणामानुकूल्यमेव प्रकृतौ न दृश्यतेऽपितु प्रतिकूलताऽपि। उदाहरणार्थं कामी नलः कैतकमवलोक्यैदमेव अकल्पयत् यत् पुष्पधन्वा कामो मधुना आर्द्रकरः सन् केतकधरागंधूलिहस्तयन् दमयन्त्यासक्तम् माम् उद्दिश्य स्वकीय धनुः शरसात् करोति। न केवलमेतदेवापितु कामी नलस्त कैतक रुषा क्रुश्यत्यपि। एतदेव स्पष्टं श्लोकेनानेन—

धनुर्मधुस्विन्न करोऽपि भीमजापरं परागैस्तवधूलि हस्तयन्।
प्रसूनधन्वा शरसात् करोति मामिति क्रुधाऽक्रुश्यत तेन कैतकम्॥

कामिनः कामपीडा स्वाभाविकी। 'कामी स्वतां पश्यति' 'न कामवृत्तिर्वच-नीयमीक्षते', इत्यपि सहजम्। परम् मानवेनोक्तप्रकारकान् उद्धरणान् गृहीत्वा कामवृत्तेः समर्थनं न हि कार्यमित्यपि लेखनमुचितमेव। यदि मनुष्यः कामवशीभूतोऽनुचितमाचारमाचरेत्तदाऽव्यवस्थैव स्यात्। अतो मानवमर्यादायाः शीलस्य संस्कृतेश्च विकासः तदैव सम्भवति यदा मनुष्यः कामवृत्तेः संयमनाय प्रयतते।

५७

# शीलं परं भूषणम्

अस्माकं देशस्य संस्कृतिः सभ्यताचान्यदेशापेक्षया विलक्षणेति विश्वस्य बहुभिरपि विचारकैः स्वीक्रियते । 'आचारहीनान पुनन्ति वेदाः' आद्याः सूक्तयोऽपि आचारस्यैव महनीयम् महत्वं समर्थयन्ति । अनेक शास्त्रविचक्षणा अपि आचारम् विना न शोभन्ते । शीलञ्चाचारस्य प्रमुखं तत्व गण्यते । अत एव शीलाचारः परमाचारः । शीलाचारम् विना विद्वांसोऽपि अज्ञाः गण्यन्ते, धनिनोऽपि अनाद्रियन्ते, बलशालिनोऽपि प्रभावरहिताः दृश्यन्ते । अतः शीलमुत्कृष्टतमो मानवीयगुण इति निर्विवादम् ।

किं शीलमिति जिज्ञासायान्तु इदमेवास्माकं निवेदनं यत् छात्राणाम् गुरून् प्रति श्रद्धाभावः, बालानां युवकान् प्रति, बालकानां बालयुवकानाञ्च वृद्धान् प्रति समादरः एवञ्च पुत्रस्य पितरम् प्रति, पत्न्याः पतिम् प्रति, अनुजस्य ज्येष्ठभ्रातरम् प्रति विनम्रतापूर्णो व्यवहारः शीलस्यैव प्रत्यक्षं स्वरूपं वर्तते । न केवलमेतदेवापितु सर्वेपामपि मानवानां शिष्टो व्यवहारः शीलस्यैव स्वरूपम् । अन्यञ्च शील मानवस्य सच्चरित्रस्य प्रतीकरूपम् ।

के शीलाचारस्य लाभाः ? किमस्य माहात्म्यमिति तु लोके प्रत्यक्षमेव दृश्यते । यानि कर्माणि धनेन, बलेन, विद्यया वा न सिध्यन्ति तानि शीलाचारेण सरलतयैव सम्पाद्यन्त इति सर्वथा लोकव्यवहारेऽनुभूयते । शीलमेतादृशम् विलक्षणमौषधम् वर्तते येन पाषाणहृदया अपि जना आर्द्रायन्ते, क्रूरा अपि सदया जायन्ते अहंकारज्वरसन्तप्तोश्च शीतलायन्ते । शीलमतिविलक्षणगुणसम्पन्नम् भूषणम् वर्तते । शीलमेतादृशम् भूषणं यद् विना विद्या, वैभवम्, बलम् वेषभूषा चापि न भूषयति । ये चाऽविद्वांसो, निर्धनाः निर्बलाश्च तेऽपि शीलभूषणेन सुभूषिता जायन्त इति नाविदितम् भवताम् । स्त्रीणां कृते तु शीलम् विशिष्टम् भूषणम् विचार्यते अतएवोक्तम्—भोजप्रबन्ध कृता—'शीलेन प्रमदा' इति । अयमाशयोऽत्रास्माकं यन्नार्यः विविधैः सुवस्त्रैः स्वर्णाभरणैश्च न तथा भूषयन्ते यथा शीलगुणेन । शीलम् विना तु नारीणां रत्नाभूषणानि सद्वस्त्राणि च भारभूतान्येव भवन्ति । सुशीला च नारी सद्वस्त्रैः सदलङ्कारैश्च विनाऽपि सम्यक् शोभत एव ।

शीलस्य या इदानीन्तनी गतिवर्तते तद् वय सर्वे जानीम एव । आधुनिकस्तु पुत्रः प्रायशः मातापितरौ न प्रणमति न चादरमेव करोति तयोः । एवमेवान्येपामाधुनिकानां शिष्यादीनामपि कथा । न केवलमेतदेवापितु आधुनिकास्तु अनेकानेकाः पुत्राः शिष्याश्च स्वानुचितस्वार्थस्य पूर्तिमदृष्ट्वा स्वगुरुजनान् गुरूश्चानेकधाऽपमानयन्ति

ताऽयन्ति मारयन्ति च तान् यथावसरमिति नोदाहरणान्यपेक्ष्यन्तेऽधुना यत् क्षणे क्षणे एव एव भूतो व्यवहारः श्रूयते दृश्यते च । यत्र भारतवर्षे 'मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव' इत्याद्यनुसारमुपर्युक्तान् प्रति व्यावहारिकी देवधारणाऽऽसीत् तत्रे-दृशी कुगतिरत्रत्येति महद्दुःखस्य प्रसङ्गः ।

कान्याधुनिकयुगस्य दुःशीलतायाः कारणानि सन्ति, इत्यन्वेषणं न कठिनम् । मम मते तु भौतिकताप्रधानपाश्चात्यसंस्कृतेः प्रभावो भारतीयाध्यात्मिकवृत्तेश्चाभावो भारतवर्षे शीलविघातस्य कारणम् । अतो भारतवर्षे शीलरक्षाया अयमेव प्राथमिक उपायो यद् नैतिकशिक्षाऽनिवार्या स्याद्येन छात्रेष्वारम्भत एवाध्यात्मिकवृत्तेरुदयः स्यात् । शीलम् मनुष्यस्य सर्वोत्तम रत्नम् । अतः शीलस्य रक्षा स्त्रीपुरुषैः स्वप्राणाना-मप्याहुतिं दत्त्वा करणीया । भारतवर्षे एतादृशाः सहस्राधिकाः पुरुषाः सञ्जाता यैः प्राणप्रणैरपि स्वकीय शीलमभिरक्षितम् ।

देव्या सीतयाऽशोकवाटिकायामनेकानपि कष्टान् सहन्त्या स्वशीलस्य रक्षा कृता । एवमेव रामेण कैकेय्याः क्रौर्यपूर्णव्यवहारे सत्यपि स्वकीयं शीलं न परित्यक्तम्, कैकेयी प्रति च पूर्णतयाऽऽदरभावः प्रदर्शितः । एवमेव सर्वैरपि शीलपरिरक्षणमत्या-वश्यकम् । यस्य शीलं नास्ति तस्य किमपि नास्ति यस्य च शील रक्षित तस्य सर्वं सुरक्षितमिति दृढा धारणा स्यात् सर्वेषाम् ।

---

४८

# मौनं स्वार्थसाधनम्

विपुलभोगायतनेऽस्मिन् ससारे मानवानां भोगानां कृते जिह्वालौल्य प्रायश एव दृश्यते । अद्यतनाश्च मानवाः बहुविधान् स्वार्थान् साधयितुं कथमुचितमनुचितञ्च मायाजालम् प्रसारयन्ति, इत्यपि नास्पष्टम्, यदेक यदि अन्येषामनुचितमालोचनं कुर्वन्ति तदाऽन्ये शठस्वभावानुसारम् विवादं कलहादिकञ्च कृत्वा स्वार्थं साधयितुम् प्रयतन्ते । स्वार्थसाधका एते अन्येषां बहुमूल्यान् विपुलानपि गुणान् दोषानिव प्रख्या-पयन्ति सम्पदञ्चान्येषाम् तृणमिव मन्यन्ते । बहुज्ञानां विदुषाञ्च 'एते बुद्धिहीना मूर्खा' इत्युक्त्वा अन्यथाप्रचार कुर्वन्ति । शठैरुपर्युक्ते व्यवहारे कृते सति गुणवद्भिः सम्पन्नै-

विपश्चिदादिभिश्च कथं व्यवहर्तव्यम् इति महत्त्वपूर्णो जिज्ञास्यश्च प्रश्नः । किं गुणवदादिभिः स्वकीयस्य वास्तववैशिष्ट्यस्य निन्दकानामन्यथाप्रचारकानाम् मिथ्या-प्रवादप्रसारकानाञ्च मृषालोचनस्य निराकरणं कर्तव्यम् यद्वा तैः सह विवादः कलहो वा कर्तव्यः ? अत्रेयम् वक्तुकामता यदेतत् उपर्युक्तं सर्वमेवाशोभनं सज्जनानां कृते । सतां कृते तु एकमेव औषधं विज्ञापितं विचक्षणैः शास्त्रकृद्भिः तच्च "मौनं स्वार्थ-साधनम्" वस्तुतो मौनम् मानवगुणेषु बहुमूल्यम् । मौनसाधनेन तु साधारणोऽपि जनः सर्वेषां प्रियः सञ्जायते । निदर्शनार्थं यदि कश्चित् सुजनः शठसम्पादितस्य स्वकीयस्य मृषालोचनस्य निराकरणमकृत्वा मौनमाश्रयते तदानेन मौनिना लाभद्वयम् प्राप्यते । एकस्तावत् लाभो यद् विपक्षी निन्दको वावदूको यदा बहुशः सज्जनस्य निन्दामालो-चनञ्च कुर्वन्नपि सत्पुरुषस्य प्रतिवचनन्नहि प्राप्नोति तदा कक्कुरमिव बुक्कनं कृत्वा स्वयमेव तूष्णीभावं धत्ते । अन्यच्च दुर्जनव्यवहारेणापि अरुष्टम् मौनिनम् सत्पुरुषं दृष्ट्वा लौकिको जनः सर्वथैव तं प्रशंसति । एवञ्चायं सहिष्णुर्मौनी सर्वेषामेव श्रद्धा-भाजनताम् गच्छति । लोकेन निन्दितो घृणितश्चात्याचारी दुरात्मा अत्यन्तं लज्जितः जीवन्नपि मृत इव प्रतीयते । एवमेव जीवनस्य विविधेष्वपि क्षेत्रेषु मौनेनैव कार्याणि सिध्यन्ति । कार्यालयेषु अधिकारिणः श्रेष्ठिनः स्वामिनो वा यदा स्वसेवकानां काममपि त्रुटिं दृष्ट्वा तेषु रोषवर्षणं कुर्वन्ति तदा एके तु अधिकारिजनान् प्रत्युत्तरं ददति विवादञ्च कुर्वन्ति अपरे च सर्वथा मौनमवलम्ब्य तेषां वचः बधिरा इव शृण्वन्ति न च तर्कवितर्कं कुर्वन्ति । एते च कोपोन्मत्ता अधिकारिणः तथैव स्वयमेव शाम्यन्ति यथा घटाटोपयुक्तो मेघः जलवर्षां कृत्वा स्वयमेव शान्तायते । एवञ्च गुरोरपि उपदेशं ये शिष्याः मिथ्यातर्कनामकृत्वा मौनमाश्रित्य शृण्वन्ति त एव ज्ञानमवाप्नुवन्ति नाऽन्ये । विशेषतस्तु अध्यात्मक्षेत्रे ये जिज्ञासवः तर्केण ब्रह्मस्वरूपं ज्ञातुमभिलषन्ति ते "नैषा तर्केण मतिरापनेया", इति उपनिषद्वाक्यानुसारं कदापि आत्मस्वरूपबोधं कर्तुं नार्हन्ति । परमेतद्विपरीतं ये खलु मौनावलम्बिनः ब्रह्मजिज्ञासवः शिष्यास्ते ब्रह्म-विद्योपदेशं सरलतयैव गृह्णन्ति मोक्षपदञ्च लभन्ते । किमधिकम्, जडोऽपि विद्वत्स-भायां तावदेव शोभते यावत् मौनमवलम्बते । विदुषाम मध्ये च जडो यदि किञ्चिद् ब्रवीति तदाऽयम् सर्वेषाम् हास्यतामेव याति । अतश्च मौनम् मूर्खाणामपि अलंकरणम् । अत एव चोक्तमपि—

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणम् मौनमपण्डितानाम् ॥

ये च विद्वांसो धनिनो गुणिनः सेवकाः शिष्याः वा मौनमकृत्वा स्वविरोधिभिः सह विवादं कलहञ्च कुर्वन्ति तेषामेका त्वियं हानिर्यत्तेषां समयस्य दुरुपयोगः सञ्जायते अपरञ्च तेषाम् वैदुष्यादिगुणा अपि हीनतां यान्ति । अतः सद्भिः, विद्वद्भिः, अन्यैः,

गुणिभिः सम्पन्नैर्वा स्वविरोधमवलोक्य मौनमेवधार्यम्। मौनेन सर्वेऽपि विरोधिनः स्वयमेव तथैव शाम्यन्ति यथा घृताहुतीनामभावे तनूनपात्।

मौनं स्वार्थसाधनमिति सिद्धान्तः नहि सार्वत्रिकः न वा सार्वकालिकश्च। अतश्चौरान् चौर्यकर्मरतान् दृष्ट्वा अन्याश्च विविधप्रकारकाननुचितकर्मपरान् दृष्ट्वा मौनावलम्बनम् पापमेव। अतोऽवसरानुसारमेव मौनस्य साधनताऽङ्गीकरणीयेति सुधियः स्वयमेव विचारयन्तु।

---

५९

# मानो हि महतां धनम्

लोकेऽस्मिन् जीवन्मुक्तानतिरिच्यान्ये सर्वेऽपि अनेकप्रकाराणि धनानि प्राप्तुं प्रयतन्ते। एतेषु केचित् विद्याधनाः विद्यामेव सर्वोच्चधनं मन्यन्ते; केचित् 'सर्वेगुणाः काञ्चनमाश्रयन्ते' इति विचारयन्तः काञ्चनमेव सर्वं मन्यन्ते, केचित् सौन्दर्यसम्पन्नां रमणीमेव च सर्वोत्कृष्टं धनं मन्यन्ते। परमेके विलक्षणा एव महान्तः सन्ति येषां कृते विद्या-वैभव-रमण्यादिभ्योऽपि श्रेष्ठं धनं मानधनं वर्तते। तेषां विषये एव इयम् उक्तिः प्रसिद्धा—

"मानो हि महतां धनम्"

ये खलु मानैकधनास्ते तु काञ्चनादिकं तृणवत् मन्यन्ते। लक्ष्मीप्राप्तिस्तु तेषां जीवनस्य आनुषङ्गिकमेव फलं वर्तते। यथोक्तमपि भारविना स्वकीये किरातार्जुनीये—

"अभिमानधनस्य गत्वरैः,
असुभिः स्थास्नुयशश्चिचीषतः।
अचिरांशुविलासचञ्चला,
ननु लक्ष्मीः फलमानुषङ्गिकम्॥

ये मानैकधनाः महान्तः मानवास्ते न अभिलषन्ति धनं नापि वा पदोन्नतिम्। एते क्लेशं सहमानाः अपि स्वजीवनयापनं वरं मन्यन्ते, परन्न मानधनं त्यजन्ति। अतएव बहवोऽपि मानाभिलाषिणः साधवोऽधिकारिणा मिथ्याप्रशंसाकरणं स्वप्राणघातमिव

स्वीकुर्वन्ति । एते तु मानप्रियाः स्वबान्धवान् मित्राण्यपि च त्यजन्ति परं न व्युत्क्रमन्ति मानमर्यादाम् । किमधिकम्, स्वमानरक्षार्थं मानैकधनाः सर्वाण्यपि सांसारिकसुखानि अनुभवायापि उपेक्षन्ते, परं पूर्णरूपेण प्रयतन्ते रक्षितुं स्वाभिमानम् । अयाचनञ्चापि महतां मानिनामनिवार्यमेव लक्षणम् । एते महान्तो मानिनः सर्वमपि परित्यक्तुं समर्था भवन्ति स्वकीयमयाचनव्रतं न त्यजन्ति । तदेवोक्तं नैषधेऽपि श्रीहर्षेण—

"त्यजन्त्यसून् शर्म च मानिनो वरम्,
त्यजन्ति न त्वेकमयाचितव्रतम् ।"

लौकिकसम्पत्त्यभावेऽपि मानशालिनो जनाः कथमाद्रियन्ते आराध्यन्ते जनैरित्यपि नाविदितं भवताम् । महात्मागान्धिना, सरदारभगतसिंहेन च आङ्ग्लानामत्याचारं विसह्य कथं स्वमानरक्षा देशाभिमानप्रतिष्ठा च रक्षिता इति नास्पष्टम् । भारतवर्षे विदेशेषु च स्वमानरक्षाया असंख्यानि उदाहरणानि दृश्यन्ते ।

मानैकधनवृत्तेरिदमपरं फलं यदेतद्वृत्तिसम्पन्नाः मानिनो न केवलं स्वत एव सुखिनो जायन्ते अपितु लोके मानमर्यादायाः प्रतिष्ठामपि कुर्वन्ति ।

ये च धनं पदं वा सर्वं स्वीकुर्वाणाः स्वमानप्रतिष्ठां गौणरूपामङ्गीकुर्वन्ति तेषान्तु कुगतिरेव अवलोक्यते लोके । मानधनरहितास्तु एते न हि केनचित् हृदा आद्रियन्ते न वा आत्मतुष्टिमेवाप्नुवन्ति । स्वार्थपरास्तु जनास्तथैव घृण्यन्ते यथा पापिनः । अतएव आत्मरक्षार्थं, देशप्रतिष्ठार्थं, मानवतायाश्च पुष्ट्यै, मानधनस्य रक्षणं करणीयम्, यन्मानधनं सर्वथाऽमूल्यं सर्वाधिकमहत्त्वपूर्णञ्च । अतएव सत्यं उक्तमस्ति कविमाघेन स्वकीये शिशुपालवधे महाकाव्ये "मानैकधनाः हि मानिनः" ।

---

६०

# आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः

यथा सुधासम्पन्नोऽपि चन्द्र एकेनैव लाञ्छनेन सदोषो जायते, अमलोऽपि जला-शय एकेनैव मत्स्येन कर्दमायते, प्रभूताऽप्यन्नराशिरेकेन घुणेन विनाश्यते सकलाऽपि नौकैकेन पापिना निमज्जते तथैव विद्वानपि गुणवानपि, धनवानपि बलवानपि च पुरुष एकेनैवालस्यरूपेण रिपुणा विहन्यते ।

अत्याश्चर्यास्पदन्त्वेतत् यत् शरीरस्थोऽप्ययं शत्रुमनिवस्य लौकिकमलौकिकञ्च सर्वविधम् पतनं करोति। ये शरीरस्थमालस्यरिपुमेव हन्तुमसमर्था ते बहि:स्थितान् शत्रून् विजेतुं कथं समर्था: भविष्यन्ति।

आलस्यकारणादेव प्रशस्तविचारशीलोपि पुरुष: कामप्युन्नतिं कर्तुमसमर्थ एव। अन्यच्च आलस्यस्य यानि कुफलानि दृश्यन्ते तान्यत्यन्तम् मानवविकासस्यबाधकान्येव।

आलस्येनैव मनुष्ये कर्मण्यनाया नियतिवादितायाश्चोदय: सञ्जायते। आलस्यदोषदुष्ट: पुरुष: अकर्मण्यो भूत्वा नियतेराश्रयं नयति। अतएव एतादृशे पुरुषाय काऽपि सफलता खपुष्पमिवासम्भवा जायते। आलसिनामसफलतायास्त्विदमेव कारणम् यत् कान्यपि कार्याणि केवल कल्पनेनैव न सिध्यन्ति अपितु कर्मण्यतयैव सिध्यन्ति। अतएवोक्तमपि—

उद्यमेन हि सिध्यन्ति कार्याणिनमनोरथै: ।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा: ॥

अनुद्यमिनामालसिनाम् भाग्याधीनता सर्वथा हेया। या भाग्याधीनताकर्मण्यतामालस्यञ्चोत्पादयति सा हेयैव। वस्तुतस्तु भाग्याधीनत्वमभिशापरूपमपि तु वरदानमेव, पर कर्मकरणानन्तरमेव मनुष्येण भाग्यवादिना दैववादिना वा भवितव्यम्। "ममायत्तन्तु पौरुष" मिति भावनाम् विधायैव मनुष्येणोद्यमो विधेयस्ततफलञ्च दैवाधीनमेव मन्तव्यम्। एतादृशो भाग्यवादो गीताया: निष्कामकर्मवादस्यैव पोषकोयदङ्गीकृत्य कर्मण्योऽपि मानव: कर्मसम्पादन एव स्वकीयमधिकारम् मनुते न च कर्मफलप्राप्तौ। यदुक्त गीतायाम्—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।"

उद्यमिनां भाग्यवादिताऽत: सर्वथैवानुकरणीया।

युवावस्थायामपि शरीरशैथिल्यस्य निदानमालस्यमेवास्ति। आलस्यस्यारम्भस्तु पूर्वं सूक्ष्मरूपेणैव जायते, परं यदा शरीरमालस्यजनित सुखमनुभवति तदा मनुष्य: शनै: शनैरकर्मण्यो भूत्वा पूर्णतयैवालसी सञ्जायते। आलसिनान्तु जीवनञ्च जीवनमपि तु यथाकथमपि जीवनयापनमेव, यदेते प्रभूतान्नराशावपि सत्याम् बुभुक्षिता एव दृश्यन्ते, अनध्ययनकारणात् परीक्षायामनुत्तीर्णा एव भवन्ति शक्तिसम्पन्नाश्चाप्यालस्यकारणात् स्वकीयमजयमेव पश्यन्ति। न केवलं व्यक्तेरेवापितु समष्टेरपि हानिरालस्येन सञ्जायते। यदालसिना सैनिकेन समस्तस्यापि राष्ट्रस्य हानि: सम्भाव्यते।

आलस्य प्रवृत्ते: कानि कारणानि सन्तीत्यपि विचारणीयम्। गरिष्ठपदार्थानाम् वासितपदार्थानाञ्चाशनम्, मादकपदार्थानां सेवनम् अधिकम् भोजनम्, शारीरिक श्रमस्याकरणम्, इत्यादीनि बहून्यप्यालस्यस्योदयस्य कारणानि सन्ति। अत: आलस्य-

मनभिलषद्भिः पुरुषैः सात्त्विकं भोजनं कर्त्तव्यम् वासितञ्च न भोक्तव्यम्। शरीर-श्रमोऽल्पभोजनञ्चाप्यालस्यनिवारणायावश्यकमेव।' अन्यञ्च प्रातःकालिकम् भ्रमण-मालस्यनिवारणायाद्वितीय उपायः।

आलस्य रहित एव पुरुषः सर्वविधम् प्राप्तुमर्हति नालसी। अतो मुमुक्षुणा बुभुक्षुणा वा, मूर्खेण विदुषा वा धनार्थिना विद्यार्थिना वा आलस्यम् परित्यज्य स्वधर्मस्य पालनम् विधेयमित्येव श्रेयस्करी पद्धतिः।

---

६१

## विद्वान् सर्वत्र पूज्यते

लोके विदुषः स्थानं शीर्षस्थं वर्तते। यादृशी पूजा संसारे विदुषाम् विधीयते तादृशी अन्येषां केषामपि न। यथावसरम् यद्यपि सर्वेषामेव महत्त्वमाकलय्य पूजा क्रियते, परम् विदुषाम् पूजायाम् यत् शाश्वतत्त्वं सार्वलिकत्वञ्च दृश्यते तन्नेतरेषाम् पूजायाम्। किमधिकम्, लोकेश्वरोऽपि राजा स्वदेशे यथा पूज्यते न तथाऽन्येषु देशेषु। अतएवोक्तम्—

'स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते'

राज्ञां या पूजा जनैः क्रियते सा शासनभयादेव, अतएव तेषाम् पूजा प्रायशः उपचारप्रधाना, परम् विदुषाम् पूजा जनैः स्वाभाविकश्रद्धया विधीयते। उदाहरणार्थ-ममेरिकाराष्ट्रे जानसन्महोदयस्य तद्देशप्रधानस्य यदि कुत्रचित् पूजा विधीयते तदा तच्छासनभयादेव। वस्तुतस्तु वियतनामयुद्धकार्यकारणात जानसनमहोदयस्य कृते अमे-रिकादेशस्य नागरिकाणाम् हृदयेषु लेशमात्रमपि श्रद्धा न दृश्यते, का कथाऽन्येषां देशानाम्। परमेतद्विपरीतं विद्वांसः सर्वदैव सर्वथा पूज्यन्ते। डा० राधाकृष्णन्प्रभृति-भारतीयविदुषां सम्मानं सर्वेष्वपि देशेषु वैदुष्यकारणात् विधीयते। एवमेव इङ्गलैण्डा-दिदेशानाम् वर्ट्रेण्डरसिलादि विद्वज्जनानां सम्मानं भारतवर्षादिषु सर्वेष्वपि देशेषु विधीयते नेदानीमेव पूर्वमपि मैक्समूलर-विल्सन-पीचोप्रभृतिविदुषां सम्मानं भारतवर्षे एतद्देशीयैर्विद्वद्भिरपि कृतम्। एवमेव रवीन्द्रनाथटैगोरादि भारतीयविदुषां सम्मानं विदेशीयैः सर्वथा सर्वदा च कृतमासीत्।

विद्वत्पूजायाः कानि कारणानि सन्ति, इत्यादिकोविचारणीयो विषयः । विद्वज्जनैः दत्तं दानं विद्यादानं सर्वोत्कृष्टं दानं वर्तते । विद्वद्भिरुपदिष्टेन ज्ञानेन जनानां ज्ञानचक्षुषी आलोकं लभेते । अन्यच्च स्वकीयान् शिष्यान् प्रति विदुषाम् प्रेम निःस्वार्थं शुद्धञ्च वर्तते । अतएव शिष्यैः विदुषाम् गुरूणाम्, पूजा ईश्वरवदेव विधीयते भारतीयसंस्कृत्यनुसारन्तु गुरोः स्वरूपं साक्षात् परब्रह्मण एव स्वरूपं निगद्यते—

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुःसाक्षात् परं ब्रह्म तस्मै श्रीगुरवेनमः ॥

विद्वज्जनानां देशविदेशेषु पूजाया इदमपि महत्कारणमस्ति यत् तैर्यज्ज्ञानदानं दीयते तन्नदेशविशेषस्य पुरुषविशेषस्य वा केवलमपि तु सर्वेषामपि पुरुषाणाम् देशानाञ्च । अतएव विदुषः पूजा सर्वेष्वपि देशेषु क्रियते ।

विदुषामतिरिक्तमपि धनिनां, ब्राह्मणानां, वृद्धानां बलिनाञ्चापि समादरो लोके यथावसरम् विधीयते । परमेतेषां यः समादरो विधीयते न सः स्थायी न च सार्वत्रिकः । धनिनो मूर्खैरेव पूज्यन्ते, ब्राह्मणाः धार्मिकैरेव आद्रियन्ते, वृद्धाः समायामेव समाद्रियन्ते बलिनश्च दुर्बलैरेवाभिपूज्यन्ते । परम् विद्वज्जनानाम् पूजा सर्वैः सर्वदा समानरूपेण विधीयते । विदुषामेतदपि वैशिष्ट्यमुल्लेखनीयमस्ति यत्तेषु दिवङ्गतेष्वपि संसारे तेषाम् पूजा जनाः श्रद्धाभावेन कुर्वन्ति ।

विदुषां स्थानं संसारे मूर्ध्नि शोभते । यस्मिन् समाजे देशे वा विद्वांस आद्रियन्ते स समाजः देशे सर्वदा उन्नतो जायते । अतः सर्वैरपि विदुषाम् पूजा मनसा वाचा कर्मणा च श्रद्धायुक्तेन चेतसा विधातव्या ।

---

६२

# आचारहीनान्न पुनन्ति वेदाः

भारतीयधर्मस्यानुशीलनेनास्य व्यावहारिकता प्रयोगपरता च स्पष्टैवानुभूयते । भारतवर्षे धर्मशास्त्रप्रतिपादकैराचार्यैर्धर्मस्य स्वरूपं केवलं सैद्धान्तिकम् वाचिकम् पुस्तकीयम् वा एव न निर्धारितम् । एवञ्च अत्रत्यैर्धर्मविद्भिर्धर्मस्य व्यावहारिकपक्ष-

स्यानुमोदनमात्रमेव न कृतमपितु तस्याऽनिवार्याऽऽवश्यकताऽनुभूता । धर्मस्य व्यावहारिकपक्ष एव तस्याचारपक्षः । सन्ध्यावन्दनादिकम्, यज्ञादिविधानम्, सत्यभाषणम्, अहिंसाव्रतपालनम्, परोपकारकरणम्, स्वाध्यायः विद्वत्सेवनञ्चेत्येतत् सर्वमाचारान्तर्गतमेवज्ञेयम् । येष्वेतानि उपर्युक्तादीनि आचारलक्षणानि न प्राप्यन्ते ते तु सर्वथा निकृष्टाः कालुष्ययुक्ताश्च । एतान् सत्वाचाररहितानखिलधर्ममूलम् वेदोऽपि पवित्रीकर्तुं न शक्नोति, अतएवोक्तिरियं प्रसिद्धा—

'आचारहीनान्न पुनन्ति वेदाः'

इयमाचारपरम्परा च वर्णाश्रमभिन्नताऽनुरूपमनेकानि रूपाणि धारयति । यथा वर्णव्यवस्यानुसारम् ब्राह्मणस्याचारो वेदाध्ययनमध्यापनादिकञ्च, क्षत्रियस्य चाचारः स्वबलेन ब्राह्मणादीनां रक्षणम्, वैश्यस्याचारश्च व्यापारप्रधानः शूद्रस्य च सेवाया इति वर्णानुसारमाचारस्यभिन्नता प्रतिपादिता । आश्रमभेदादपि आचारस्य भिन्नताऽवलोक्यते । ब्रह्मचर्याश्रमस्थितस्य आचारो यदा विद्याध्ययनादिब्रह्मचर्यधर्मानुकूलस्तदा गृहस्थिन आचारव्यवस्थायां ब्रह्मचर्यधर्मविरुद्ध गृहस्थाश्रमानुकूलाचारस्यौचित्यम् मन्यते । एवमेव वानप्रस्थस्याचारव्यवस्थाऽपि भिन्नैव संन्यासी तु सर्वस्य संन्यसनात् शिखासूत्रादिकमपि न धारयतीति सन्यासाश्रमस्याचारप्रणाली सर्वथैव भिन्ना इतराश्रमापेक्षयेति सर्वथा विदितमेव । अनेन विधानेन वर्णाश्रमव्यवस्थानुरूपं सर्वेषामाचारप्रणाली पृथक्-पृथगेवाङ्गीकर्तव्या । परम्, सत्यमक्रोधो हिंसादयस्तु आचारस्य सामान्यलक्षणानि सन्ति । आचारस्तु विचाराणां साक्षात्कार एव । परम् विचारापेक्षयाऽऽचारस्य प्रभविष्णुताऽत्यधिका । धर्मसिद्धान्तविशेषज्ञोऽपि यद्याचारशून्यः स्यात्तदा तस्य धर्मोपदेशाः वाचालतामात्रमेव गण्यन्ते न च कोऽपि तदुपदेशैः प्रभावितः सञ्जायते । आचाररहितस्य तु धर्मधुरन्धरस्योपदेशवचनानि अश्रद्धया श्रूयन्ते, श्रुताश्च तृणवन्मन्यन्ते, किमधिकं जनैरेकण्या श्रुत्वा पुनश्च श्रोतुमपि नाभिलष्यन्ते । परमेतद्विपरीतमाचारशोभितैस्तु जनैर्यद्यदुच्यते तत् सर्वम् श्रोतृणाम् मानसेषु तथैव चित्रतां याति यथाऽम्बुवस्तुच्छाया दर्पणे च वस्तुप्रतिबिम्बः । निश्चयमेवाचारवतः पुरुषस्योपदेशः श्रद्धालुतया श्रूयते अविलम्बमेव गृह्यते, मनसा, वचसा, कर्मणा च व्यवहृयते । एषैवाचारस्य महत्ता । वेदशास्त्रादिसमर्थिते धर्मक्षेत्र एवाचारस्य महिमा न मन्यतेऽपि तु समाजे विविधक्षेत्रेषु वर्तमानानां जनानां स्वस्वधर्मक्षेत्रेषु अपि आचारस्यानिवार्या मूल्यवत्ता स्वीकार्या । उदाहरणार्थं यदि राजनीतिज्ञः स्वराजनीतिसिद्धान्तानुसारमाचरणमपि करिष्यति तदा तस्य वचसामक्षुण्णः प्रभाव सुनिश्चित एव । यथा महात्मागान्धि–नेहरू–लालबहादुरशास्त्रि–प्रभृतीनां राजनीतिज्ञानामाचारस्यैवायम् प्रभावः यदेतेषां राजनैतिक विचारान् जनाः श्रद्धया स्वीचक्रुरिदानीञ्च अत्यादरेण गृह्णन्ति । परमेतद्युगवर्तिनाम् दुन्दुभिनादमात्रेण स्वराजनैतिकविचारानुद्घोषयतामाचाररहितानां

राजनीतिविशारदानां का गतिरिदानीमिति न वर्णितुं शक्यते न चापेक्ष्यते यत् नूनमेव क्षणे क्षणे सर्वदैव सर्वैश्चावलोक्यते। निदर्शनार्थं वर्तमानराजनीतिज्ञानाम् भाषणावसरे कुत्रचित् प्रस्तरवर्षणं क्रियते कुत्रचिच्च खगाण्डानि प्रक्षिप्यन्ते। एतत् सर्वमेतेषाम् परोपदेशकुशलानामाचारशून्यताया एव परिणामः यदेतेषां वचसि किञ्चिदन्यत् आचारे चान्यत्। अनेनेदं सिद्धं यत् कीदृशा अपि उन्नतविचाराः स्युः परमाचाराभावे तेषाम् मूल्यवत्ता शून्यैव। सुविचारितमप्यौषधं यथा नाममात्रेणैव कमप्यरोगं न करोति तथैवोन्नता अपि विचाराः आचाराभावे निष्फला एव। उक्तमेव यथा—

शास्त्राण्यधीत्यापि भवन्ति मूर्खाः,
यस्तु क्रियावान् पुरुषः स एव।
सुचिन्तितञ्चौषधमातुराणाम्,
न नाममात्रेण करोत्यरोगम्॥

आचारस्यैतन्महन्माहात्म्यम् यदाचारवतः पुरुषस्य न केवलं दर्शनेनापितु आचारश्रवणेनैव कस्यचिच्चेतः प्रभावितं सञ्जायते। एवञ्चाचारवताम् पुरुषाणां प्रतिष्ठा सार्वकालिकी भवति। बुद्धमहावीरशङ्कराचार्यादयः सदाचारसम्पन्नाः महापुरुषाः यद्यपीदानीं शरीरेणोपस्थिताः न सन्ति परन्तेषामाचारादर्श इदानीमस्माकमनुकरणीयः। आचारस्य गन्धो महान् येन सर्वत्र सर्वथा च मानवसमुदायः पूतः प्रभावितश्च जायते। अत एवोक्तम्—

आचारः परमो धर्मः।

आचारं विना सर्वं व्यर्थमिति मत्वा पुरुषैः स्वकीयआचार एव प्रधानो मन्तव्यः। परेषां कल्याणसम्पादनार्थमपि आचारस्यैवापेक्षा न तूपदेशस्येति स्पष्टमेव प्रमाणितं श्रीमद्भगवद्गीतायाम्—

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्॥

———

६३

# पुरासामित्येव न साधु सर्वम्

भौतिके वैचारिके च जगति परिवर्तनं सहजम् । पूर्वं यत्रारण्यानि तत्राद्यहर्म्याणि, यत्र प्रासादास्तत्राद्य निर्जनप्रदेशाः, यत्र वेदनादवस्तत्राद्य हर्षानुभवरवः, यत्र पारतन्त्र्यत्रस्तो लोकस्तत्राद्य स्वातन्त्र्यसुखसुप्ताश्च जना दृश्यन्ते । एवमेव च पूर्वकालिकाः शिशवोऽद्य वृद्धाः वृद्धाश्च दिवङ्गता अवलोक्यन्ते । वैचारिकी स्थितिरपि विलक्षणैव । यथा धर्मक्षेत्रे भारतवर्षे सन्ध्यावन्दनयज्ञादीनि यानि कर्माणि पुण्यकर्माणि नीयन्ते स्म तानीदानीं पापकर्माणीव गण्यन्ते अनृतभाषण-परपीडनपरद्रव्यहरणादीनि च यानि अधर्मकार्याणि मन्यन्तेस्म तानीदानीं स्वार्थैकोद्देश्यवतः पुरुषस्य सुधर्मतया गृह्यन्ते । एवमेव राजनीतिक्षेत्रेऽपि पूर्वं राजानः प्रजायाः प्रसादनार्थं स्वप्राणानपि नाचिन्तयन्, यथास्पष्टमेव रामवचनैरुत्तररामचरिते—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥

परमद्यतनास्तु राज्यशासनाधिकारिणः प्रजातन्त्रमुदघोषयन्तोऽपि प्रजाहितमगणयन्तः सर्वथा स्वार्थपूर्तिमेव प्रथमतया समीहन्ते । स्वकीयस्याधिकारसम्पन्नस्यासनस्य रक्षणमेवैषाम् प्रथम उद्देश्यः । किमधिकम्, अद्य तु सरसतायाः स्थाने नीरसता, उपकारस्य स्थानेऽनुपकारः, मानवतायाः स्थाने दानवता, सच्चरित्रस्य स्थाने दुश्चरित्रता च ससाफल्यमभिराजते । स्वतन्त्रभारतराष्ट्रस्याधुनिका बहवो मन्त्रिणो वर्तमानराजनैतिकादर्शानां स्पष्टमेव निदर्शनरूपाः सन्ति । विज्ञानस्याधुनिकतमाविष्कारैश्च कृतम् परिवर्तनमपि कियदद्भुतमिति सर्वथा जानीम एव वयम् । पूर्वं यत्कार्यसम्पादने दिनानामपेक्षाऽऽसीत् यन्त्रसाहाय्येन तत् कतिचित् क्षणेष्वेव सम्पाद्यते । एवमेवानेकानेकविधवैज्ञानिकाविष्कारकृतम् वैलक्षण्यमधुना-प्रत्यक्षमेवानुभूयते । वर्तमानशिक्षापद्धतिरपि सर्वथा भिन्नैव । प्राचीनकालिकी गुरुकुलप्रणाली अद्य कुत्रापि नहि दृश्यते । पूर्वकालिकेन छात्रेण गुरुसमीपे समित्पाणिना गन्तव्यम् इति पद्धतिरासीत् परमाधुनिकस्तु छात्रः प्रायशः प्रार्थ्यमानोऽपि कक्षायां गन्तुं नाभिलषति । एवञ्च जीवनस्य विविधेष्वपि क्षेत्रेषु परिवर्तनस्य लीलाविलासो विलसति । एवञ्चाधुनिकी धर्मस्य गतिरपि विषमैवाधुना । यत्र जनाः पूर्वम् पौराणिकं वैदिकञ्च धर्मं सर्वस्वमन्यन्त तत्राद्यतनास्तु पुरुषाः प्रायशो वैदिकपौराणिक-धर्मानुपालकान् वैशिष्ट्यादद्देतोः अङ्गुलिनिर्देशयोग्यान् कतिपयान् पुरुषान् तृणवदपि न मन्यन्ते मूर्खांश्च तान् कथयन्ति । उपरिचर्चितं वैषम्यमेव विचार्याधुनिके संसारे महान् संघर्षोऽनुभूयते । यत् केचन प्राचीनधर्मसंस्कृत्यनुसारिणः प्राचीनैरनुसृतम् पन्थानमनुसर्तुमनुरुन्धन्ति अन्येचाधुनिकतानुसारिणो

जनाः पूर्वकालिकं धर्मं दर्शनञ्च व्यर्थमुक्त्वा नवीनं धर्मदर्शनादिकमेव सर्वथा प्रचारयन्ति । अस्यां विषमस्थितौ किमाधुनिकेन मानवेन कार्यमिति जटिलः प्रश्नः । किन्तेन परम्पराप्राप्तः प्राचीनः पन्थाः अनुसरणीयो यद्वाऽऽधुनिकैः प्रचलितेन पथा गन्तव्यम् । एतादृशीम् भाविनी जटिलतामनुभवताऽस्माकं प्राचीनेनैव महाकविना कालिदासेन प्राचीननवीनयोः समन्विता एव सरणिरनुसरणयोग्योद्घोषिता—

पुराणमित्येव न साधु सर्वं न चापि सर्वं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥

वस्तुत एव महाकविना कालिदासेन निर्दिष्ट उपर्युक्तः पन्थाः प्रशस्त एव । यत् सर्वथा स्पष्टमेव कालिदासवचनैः, सुधिया मानवेनान्धानुसरणमकृत्वा स्वधिया विचार्यैव जीवनस्य सर्वेष्वपि क्षेत्रेषु व्यवहारो विधेयः ।

प्राचीननवयोस्त्वयमेव समन्वयः यत् मानवस्य मौलिकोद्देश्यान विचार्यैव धर्म-दर्शनादीनां व्यवहारः कार्यः । एवन्तु सुनिश्चितमेव यत् परिस्थित्यनुसार धर्मस्य बाह्यं स्वरूपं परिवर्तितं सञ्जायते । उदाहरणार्थम्, "यतोऽभ्युदय निःश्रेयससिद्धिः सधर्मः", इत्यस्यां धर्मपरिभाषायामभ्युदयनिश्रेयसोः सिद्धिरभिप्रेता वर्तते, अतो मानवेनैतादृशस्य धर्मस्यैवानुपालनं कार्यं येन मानवाभ्युदये बाधो न स्यात् । नवीनातिनवीनैराधुनिकैराविष्कारैरपि यदि मानवस्य हितं सम्भाव्यते तदाऽवश्यमेवैतेषां प्रयोगः कर्तव्यः । परं केवलं नवताप्रदर्शनार्थमेव यदि नवीनसिद्धान्तानां प्रचारो विधीयते तदेतत् सर्वथा समीचीनमेव । अतो यत्र प्राचीनैरेव सिद्धान्तैर्व्यवहारैश्च मानवहितं सम्भाव्यते तत्र नवीनसिद्धान्तानां विचाराणाञ्चानपेक्षैवानुभवनीया । एवञ्च प्राचीननवीनयोः पक्षपातं परित्यज्य यथापेक्षितं द्वयोरपि ग्रहणं विधायमानवेन स्वनिर्णीतेन एव पथा गन्तव्यम्, प्राचीननवीनप्रचारकानाञ्चान्येषामुपदेशश्चान्धानुकरणमिव नहि ग्रहीतव्यम् ।

अस्माकं भारतवर्षे यत्राद्य प्राचीननवीनयोर्महान् सघर्षोऽवलोक्यते एतादृशानामेव पथप्रदर्शकानामवश्यकताऽनुभूयते ये प्राचीननवीनयोः समन्वय शिक्षयेयुः । एतदभावे तु नवनवोपासका बहव आधुनिकाः भारतीययुवकाः पथभ्रष्टाः दृश्यन्ते, इति नोदाहरणमपेक्षते । एते तु नवीनतोपासका आधुनिकाः सतामानपि प्राचीनधर्मसंस्कृति सिद्धान्तान् विषमिव विचारयन्ति, अहितकरांश्च नूतनान् विचारान् प्रियातिप्रियान् मन्यन्ते । भारतेऽधुना धर्मसंस्कृत्योः पतनस्यायमेव हेतुः । अतोऽद्यास्मिन् देशे जवाहरलालनेहरू-सदृशानां देशोद्धारकानामावश्यकताऽनुभूयते यैर्न सर्वथा प्राचीनसिद्धान्तानामुपेक्षा कृता न च साकल्येन नवीन एव पन्थाः गृहीतः । अयमेव व्यवहारप्रकारः सर्वथा साधीयानिति मे धारणा ।

---

६४

# समाचारपत्राणि

वर्तमानसंसारे समाचारपत्राणाम् महत्त्वमत्यन्तं स्पष्टम् अनुभूयते। समाचारपत्राणाम् पठने मानवानामधुना एतादृशी रुचिर्दृश्यते यत्ते समाचारपत्रपठनाय भोजनमपि त्यजन्ति, मित्रालापमपि न कुर्वन्ति, पुत्रादीन् परिवारजनांश्च न शृण्वन्ति। किं बहुना समाचारपत्रपठनाभ्यस्तानामनेकेषाम् मानवानान्तु समाचारपत्राणाम् पठनाभावे सर्वमेवारुचिकरं सञ्जायते। वस्तुत एवैतत् सर्वं स्वाभाविकम्। आधुनिके विचारप्रधाने युगे विभिन्नधार्मिकसम्प्रदायानाम्, अनेकराजनैतिकसङ्घानाम् च विचाराणामनुशीलनमेकस्मिन् स्थाने समाचारपत्राणामभावेऽसम्भवमेव दृश्यते। अतोऽचेतनान्यपि समाचारपत्राणि चेतनपुरुषानिव व्यवहरन्ति लौकिकांश्च जनान् स्वबहुज्ञतया विविधप्रकारकं ज्ञानं ददति।

समाचारपत्रैरेव देश-विदेशानां समाचाराणाम् विवरणमस्माभिः शीघ्रं ज्ञायते। रेडियो-वायरलैसादियन्त्रैरपि देश-विदेशाना समाचाराणां ज्ञान शीघ्रं जायते, परमेतादृशानि साधनानि सर्वसुलभानि न सन्ति। अपरञ्चैतादृशैः साधनैः समाचाराणाम् विवरणमपि ज्ञातुमतिकठिनमेव वर्तते। एकेनैव समाचारपत्रेण च बहवोऽपिजनाः बहुविधान् समाचारान् ज्ञातुं समर्थाः भवन्ति। सार्वजनिकपुस्तकालयेषु च विभिन्नानां समाचारपत्राणां पठनस्य सौविध्यमपि सर्वेषां कृते वर्तते।

अत्रेदमपि निवेद्यं यत् समाचारपत्रेषु केवलं राजनैतिकविचाराणामेवोल्लेखो न विधीयते, अपि तु विज्ञप्तिप्रकाशनम्, साहित्यिकसमीक्षा, वैज्ञानिकानुसन्धानाविष्काराणाम् प्रकाशनम्, ऐतिहासिक-पौराणिकतथ्योद्घाटकानां लेखानां प्रकाशनं, कादाचित्कत्वाच्च दार्शनिकलेखानां प्रकाशनञ्चापि समाचारपत्राणामुद्देश्यो वर्तते। अनेन प्रकारेण कस्यापि राजनैतिकविचारस्य, साहित्यिकसिद्धान्तस्य, नवीनवैज्ञानिकाविष्कारस्य, इतिहासपुराणसम्बन्धितथ्यस्य च प्रचारः सारल्येन सञ्जायते। समाचारपत्राणां विज्ञप्तिपक्षश्चातिशयेनोपयोगितापूर्णः। अनेकानेकविभागेषु रिक्तपदानां सूचनाऽपि समाचारपत्रैः सरलतया प्राप्यते। लौकिकव्यवहारस्यानेकविधवस्तूनां पुस्तकादीनाञ्च ज्ञानमपि समाचारपत्रैः सौविध्येन भवति।

प्रजातन्त्रे, यत्र जनताशासनस्य नीतीनां समर्थनं विरोधोवाऽपेक्ष्यते समाचारपत्राणां योगदानमत्यन्तं स्तुतियोग्यम्। समाचारपत्रेष्वेव वयं शासनस्य विचाराणाम्, नीतीनां क्रियमाणकार्याणाञ्च विशदं स्वरूपं ज्ञातुं पारयामः। समाचारपत्रसाधनेनैव वयं शासनस्य सिद्धान्तानां, नीतीनां कार्याणाञ्चालोचनं कर्तुं शक्नुमः। शासनस्यानुचितनीतीनां निराकरणं प्रजातन्त्रशासनेऽत्यन्तम् अपेक्षितं वर्तते। समाचारपत्रकृते-

नालोचनेन शासनं जनतायाः अपेक्ष्यमुद्देश्यं जानाति तच्च साधयितुं प्रयतते। एवमेव शासनाधिकारिणोऽपि जनतायाः यदपेक्षन्ते तदपि समाचारपत्रेषु प्रकटयन्ति। अनेन प्रकारेण जनताऽपि शासनस्यापेक्षितम् पूरयितुं प्रयतते। यदा यदा देशे आपत्कालिकी-स्थितिः सञ्जायते तदा तदा समाचारपत्रैः शासकैस्तस्याः स्थितेः व्याख्यानं विधीयते। निदर्शनार्थम् यदा चीनदेशेन १९६२ ईसवीयवर्षेऽस्माकं देश आक्रान्तस्तदा समाचार-पत्रैस्तात्कालिकस्थितेः समुचिता व्याख्या प्रतिदिनमेव सम्पादिता। युद्धानाञ्च विवरणं समाचारपत्रेषु सम्यक् प्राप्यते। अतो न केवलं राष्ट्रियदृष्ट्याऽपि तु अन्ताराष्ट्रिय-दृष्ट्याऽपि समाचारपत्राणामुपयोगिता स्वीकरणीया।

प्रत्येकस्यापि प्रमुखस्य समाचारपत्रस्य सर्वेष्वपि प्रमुखनगरेषु देशेषु च सन्देश-हरा निवसन्ति। ते तत्तन्नगरेषु देशेषु च विशेषोत्सवावसरेषु आमन्त्रणं लभन्ते। एवञ्चैते सन्देशहराः सर्वान् महत्त्वपूर्णान् समाचारान् स्व-स्व-समाचारपत्राणां सम्पाद-कानावेदयन्ति।

आधुनिकेषु समाचारपत्रेषु बहवोऽपि दोषा अवलोक्यन्ते। अनेकानि समाचार-पत्राणि तु शासनस्योचितानामनुचितानाञ्च सर्वासामपि नीतीनां समर्थनं कुर्वन्ति। एतत्तु सर्वथाऽनुचितम्। समाचारपत्रैस्तु सर्वदैव निष्पक्षतया व्यवहर्तव्यम्। समाचार-पत्राणां सम्पादकानामन्येषाञ्चाधिकारिणामिदं कर्त्तव्यं स्याद् यत्ते आवश्यकान् समा-चारान् स्वयमेव प्रकाशयेयुः अनावश्यकांस्तु समाचारान् स्वपत्रेषु स्थानं न देयुः। परमधुना समाचारपत्रेषु बहूनाम् अकिञ्चनानामपि पुरुषाणाम् चरित्राणि प्रकाश्यन्ते, वस्तुतो महत्त्वशालिनाञ्च नामोल्लेखोऽपि न विधीयते। अतएव केषाञ्चिदिदं कथनं सर्वथा समीचीनमेव यत् समाचारपत्राण्येवावीरं वीरं कुर्वन्ति अविद्वांसं विद्वांसं कुर्वन्ति, देशद्रोहिणं देशभक्तं कुर्वन्ति चरित्रहीनञ्च सच्चरित्रशोभितं प्रदर्शयन्ति। समाचार-पत्राणामेतादृशो व्यवहारः सर्वथा निन्द्यः। समाचारपत्राणां वर्णनसामग्र्याः प्राधान्येन वर्तेतप क्षद्वयं—एका घटनानां यथार्थचित्रणरूपपक्षोऽपरश्चालोचनापक्षः। यथार्थ-चित्रणपक्षे समाचारपत्राणामिदमनिवार्यं कर्तव्यं स्याद् यत्ते यत्रकुत्रापि प्राप्तानां घटनानां यथार्थचित्रणमेव कुर्युः न चायथार्थम् चित्रणम्। आलोचनापक्षे च समाचारपत्राणाम-धिकारिभिः सदसतोः सम्यक्परीक्षणं विधायैव स्वकीयाऽऽलोचनापूर्णटिप्पणी देया नान्यथा। समाचारपत्राणां यद्येतादृशो व्यवहारः सम्पत्स्यते तदाऽस्यां धरायामेव स्वर्ग-सदृशं जीवनं सम्भविष्यतीत्यस्माकं निश्चितम् मतम्।

———

६५

# प्रजातन्त्रम्

यथा पुरातनकाले अधिनायकतन्त्रादीनि शासनस्य अनेकविधानि रूपाण्यासन् तथैवाऽद्यापि विश्वे कुत्रचित् साम्राज्यवादमनुसृत्य शासनपद्धतिः सञ्चाल्यते, यथेङ्गलेण्डादिदेशेषु कुत्रचित् साम्यवादमनुसृत्य यथा रूसचीनादिदेशेषु कुत्रचित् च प्रजातन्त्रवादमाश्रित्य प्रजाशासनम् सम्पाद्यते, यथा भारतवर्षे । प्रजातन्त्रवादविचारकारणादेव भारतीयं शासनं प्रजातन्त्रमित्यभिधीयते ।

यथाऽस्य अभिधयैव स्पष्टं प्रजातन्त्रे प्रजाया एव स्वकीयं शासनं भवति । एतदेव प्रजातन्त्रस्य स्वातन्त्र्यम् प्रजातन्त्रशासने यत्तस्मिन् नहि कश्चिद् राजा शासनं करोति न च कश्चिद् वर्गविशेषः । प्रजातन्त्रमेव गणतन्त्रमपि निगद्यते ।

प्रजातन्त्रशासने जनतयैव निर्वाचिता व्यक्तयो विधिनिर्माणादिकम् शासनकार्यं कुर्वन्ति ।

भारतीयप्रजातन्त्रान्तर्गतम् उच्चतमं पदं राष्ट्रपतिपदम् वर्तते । राष्ट्रपतेः सर्वतन्त्रस्वतन्त्रता सर्वदैव सुरक्षिता । सङ्कटकाले राष्ट्रपतिः स्वातन्त्र्येण विधिनिर्माणं कर्तुं क्षमः । राष्ट्रपतेरतिरिक्तमुपराष्ट्रपतिरपि प्रजातन्त्रशासने निर्वाचितो जायते । भारतीयगणतन्त्रस्य प्रथमः राष्ट्रपतिः डा० राजेन्द्रप्रसाद आसीत् । अस्य महाशयस्य सारल्यं सौजन्यञ्चातिशयेन प्रख्यातम् । तदनन्तरम् डा० राधाकृष्णन्महाभागाः राष्ट्रपतिपदमलञ्चक्रुः । एतेषाम् विविधविद्यावैदुष्यन्तु विश्वविख्यातमेवास्ति । डा० राधाकृष्णन्महोदया अध्यापकानामदर्शभूता आसन् । विश्वस्य सर्वासामपि दर्शनपद्धतीनामेते विज्ञातारः आसन् । भारतीयदर्शनस्य च वैशिष्ट्येन विद्वांस आसन् । तत्राप्येतेषां निष्ठा शाङ्करवेदान्त एव प्राबल्येन अवर्तत ।

ततो भारतीयगणतन्त्रस्य राष्ट्रपतिः डाक्टरजाकिरहुसैनमहोदय आसीत् । अयमपि महानुभावः महात्मागान्धिनः परम्परायाः श्रद्धापरो भक्त आसीत् । तदनन्तरञ्च वराहगिरि-वेङ्कटगिरिनामको लोकप्रियो महानुभावो राष्ट्रपतिपदमलङ्कृतवान् । तदनन्तरं फखरुद्दीनअलीमहोदयः राष्ट्रपतिपदमलंचकार । अस्य महोदयस्य १९७७ वर्षे यदा निधनं जातं तदा तत्पदे श्रीबसप्पादानप्पाजत्तीमहोदयः (उपराष्ट्रपतिः) राष्ट्रपतिपदे आसीनः । साम्प्रतञ्च भारतस्वातन्त्र्यस्य विशिष्टः सेनानी नीलमसंजीवारेड्डी विशिष्टमेनम् पदमलङ्करोति, इति भारतभुवः परमम् भागधेयम् ।

केन्द्रस्य शासनस्योच्चतमोऽधिकारी प्रधानमन्त्री । प्रधानमन्त्री स्वराजनीतिमतानुसारिणाम् मध्यादेव मन्त्रिमण्डलस्य निर्माणम् विदधाति । औपचारिकरूपेण तु

राष्ट्रपतिरेव मन्त्रिमण्डलस्य निर्माणं करोति परम् राष्ट्रपतिरपि प्रधानमन्त्रिण एव परामर्शेण तन्निर्माणं कर्तुं महंति नान्यथा । मन्त्रीमण्डलस्याधिकारिणः प्रामुख्येन तत्तद्-विभागानाम् मन्त्रिण एव भवन्ति । एवैव प्रणाली राज्येषु (प्रान्तेषु) वर्तते । तत्र तु सर्वोच्चपदप्रतिष्ठितः राज्यपालः मन्त्रिमण्डलस्य च नेता मुख्यमन्त्रीति कथ्यते ।

अनेनैतत् स्पष्टमेव यत् शासनसत्ता जनतया निर्वाचितानाम् सदस्यानां हस्ते-ष्वेवावतिष्ठते । अस्मादेव हेतोः भारतीयम् राज्यम् प्रजातन्त्रमिति निगद्यते ।

वस्तुतस्तु जनतया निर्वाचितैः सदस्यैः शासिते भारते जनैः यथेष्टसुखं भोक्त-व्यम् । भारतीया जनाः कदाचित् एवमपि वदन्ति स्म यद् भारतवर्षे तु अधिनायक-तन्त्रमेव सर्वथा समीचीनम् । भारतवर्षे जनतन्त्रशासनस्य विफलतायाः यानि कारणानि सन्ति तान्यवश्यमेव विचारयितव्यानि । जनतन्त्रशासनस्य साफल्याय जनतायाः शिक्षा आवश्यिकी ।

जनतन्त्रशासनं तत्रैव साफल्यम् प्राप्नोति यत्र जनाः प्रायशः शिक्षिताः भवन्ति । अस्माकं देशे शिक्षायाः पूर्णविकासस्याभावोऽपि जनतन्त्रशासनस्य साफल्यस्य कारणम् । अन्यच्च अधिकारिणाम् चारित्र्याभावश्चापि प्रजातन्त्रस्यासाफल्यस्य कारणं वर्तते । बहवो मन्त्रिणः पदाधिकारिणश्च औचित्यम् विहाय स्वोदरभरणार्थमेव सर्वदा प्रयतन्ते । अतो जनतन्त्रवादस्य साफल्याय जनतायाः नैतिको विकासः परमापेक्षितः ।

सुनिश्चितमेवैतत् यज्जनतन्त्रशासनस्य बहवो गुणाः सन्ति । जनतन्त्रशासन एव जनानाम् मानसिकं स्वातन्त्र्यं सम्भवम् । जनतन्त्रशासने जनाः यदावश्यकम् मन्यन्ते तदेव स्वनिर्वाचितैः जनैः निष्पादयितुम् पारयन्ते । एवञ्च जनतन्त्रशासने जनाः स्वयमेव विधिनिर्मातारो भवन्ति । जनतन्त्रवादे जनाः मन्त्रिणाम्, प्रधानमन्त्रिणः, राष्ट्रपतेश्चापि विचाराणाम् समीक्षणं कर्तुं समर्थाः । अनेनाधिकारिणोऽपि बिभ्यति । मन्त्रिणश्चेत् जनतायाः हितैषिणो न भवन्ति तदा ते पुनर्निर्वाचने निर्वाचिता न हि दृश्यन्ते । न दूरमस्योदाहरणम् वर्तते । १९६७ ईसवीयाब्दस्य निर्वाचनावसरे प्रायशो बहूनां कांग्रेसमतानुयायिनामसाफल्यस्य एतदेव प्रमुखं कारणमासीत् यदेते स्वकार्यकाले केवलं स्वार्थचिन्तनपरा एव आसन् । देशवासिनां सौविध्याय कृते एभिः कांग्रेसमन्त्रि-भिरन्यैरधिकारिभिश्च प्रजासन्तुष्टिप्रदं किञ्चिदेव काठिन्येन प्रतिपादितम् । एतदेव कांग्रेसस्य पराजयस्य कारणमासीत् । एतादृशानि एव कारणानि १९७७ वर्षे कांग्रेसस्य पराभवस्य हेतुत्वेन वक्तुं शक्यन्ते । प्रजातन्त्रशासने विभिन्नमतानुयायिनां सङ्घानां सत्ताऽपि प्रजाहितदृष्ट्याऽतीवोपयुक्ता । सर्वेऽपि राजनैतिकसङ्घाः, अन्योऽन्यस्यालोचनं कुर्वन्ति । एतेन सर्वेऽपि सङ्घाः सावधानतया कार्यं सम्पादयन्ति । एतदतिरिक्तमपि, मानवसिद्धान्तः धर्मस्वातन्त्र्यम्, शिक्षास्वातन्त्र्यम्, सांस्कृतिकम् स्वातन्त्र्यम्, स्वसम्प-त्त्यधिकारश्च प्रजातन्त्रस्योल्लेखनीयाः गुणाः सन्ति ।

परमधुना प्रजातन्त्रवादस्य गुणा एव दोषत्वेन परिणताः सन्ति । निर्वाचनकाले स्वातन्त्र्यस्य दुरुपयोगः नापरिचितः । केचन मतदातारः रुप्यकाणि नीत्वा स्वमतं विक्रीणन्ते । केचिच्च अन्यैः प्रभाविता एवाविचार्य मतदानं कुर्वन्ति । अन्ये स्वार्थधियैव स्वामूल्यम् मतं ददति । एके च मतदानस्य महत्तामज्ञात्वा मतदानमेव नहि कुर्वन्ति । एतादृशास्तु कतिपया एव सन्ति ये सर्वथा विचार्य मतदानं कुर्वन्ति । एवञ्च प्रजातन्त्रशासनेऽपि त एव बहुशो निर्वाचिताः भवन्ति ये जनतासमक्षं मिथ्याप्रलोभनानिप्रस्तुवन्ति, अयथार्थमाश्वासनं ददति, अनुचितसाधनानि च प्रयुञ्जते । ये च साधनहीनाः उच्चतमा अपि देशभक्ता सन्ति तेऽपि साधनाभावात् निर्वाचने सःफल्यं नहि प्राप्नुवन्ति । परम् १९७७ वर्षे जनतायाः विजयप्राप्तिविलक्षणमेवोदाहरणम् प्रजातन्त्रवादस्यायमपि प्रमुखोदोषः यद् विभिन्नराजनैतिकसंघानाम् नेतारः स्वमतसमर्थनायान्येषां संघनेतृणाम् विचाराणा खण्डनं स्वकीयम् अनिवार्यं कर्त्तव्यम् मन्यन्ते । एवञ्च सर्वेऽपि शासनविरोधिनः संघाः सर्वदैव शासननीतीनामालोचनं कुर्वन्ति । अनेन शासनादेशानामनुपालने जनता सन्दिग्धप्राया भवति । अस्यैवैतत् फलं यत् प्रजायामनुशासनहीनताया उदयो जायते ।

उपर्युक्तप्रकारेणावलोकनेन प्रजातन्त्रे गुणानां दोषाणाञ्च सत्ता सारल्येन दृश्यते । परन्त्वविमतमाशास्यते केषामपि यत् प्रजातन्त्रशासनमेव सर्वेभ्योऽधिकाधिकम् प्रियदायकम् । यदा परमार्थसत्ये ब्रह्मणि मायारूपो दोषः, चन्द्रमसि मृगलाञ्छनं दोषः, दिवाकरे चातपरूगो दोषोऽनुभूयते तदा प्रजातन्त्रवादेऽपि दोषाणां सत्ता नास्वाभाविकी । भारतवर्षे प्रजातन्त्रस्य दोषाणाम् निदानभूताः ब्रिटिशकालस्य परतन्त्रताजन्याः संस्कारा अपि सन्ति । सत्यां स्वातन्त्र्यस्य पुष्टौ, प्रजातन्त्रवाद एव भारतीयेभ्यः सकलां समृद्धिं सौख्यञ्च दास्यतीति अस्माकं सुनिश्चितम् मतम् ।

प्रजातन्त्रभावनायाः साक्षात्कारोऽस्माभिः १९७७ वर्षे लोकसभायाः विधानसभायाश्च निर्वाचने कृतः यदा शासनसंघस्य कांग्रेसस्य प्रत्याशिनः जनतासंघेन सनन्दं हेलयैव पराजिताः । एतदनुसारमेव भारतवर्षस्य महान् राजनीतिज्ञः, गान्धिविचाराणामनुसर्ता, मानवताग्रदूतः, संस्कृतसंस्कृतिभक्तः श्रीमोरारजीदेसाईमहोदयः प्रधानमन्त्रिपदे शोभते । किमितोऽप्यधिकं सम्भाव्येत यत् प्रधानमन्त्रिपदे आसीना श्रीमती इन्दिरा गान्धी अपि जनतया परास्ता । प्रधानमन्त्रिसुपुत्रः सञ्जयोऽपि पराजयमपश्यत् इति तु किमुल्लेख्यम् । अनेन जनता जनार्दनः, इति सुप्रमाणितम् । सत्यं त्विदं यदस्मिन्निर्वाचने जनतासंघस्य विजयः भारतीयजनताया एव विजयः । जनतायाः विजयेन चाऽनेन समग्रेऽपि विश्वे प्रजातन्त्रस्य नूतन आदर्शः प्रस्थापित इति प्रत्यक्षमेव सर्वथा ।

६६

# आधुनिकम् विज्ञानम्

वर्तमानसंसारे विज्ञानस्य प्रचारः सर्वविदित एव वर्तते । वयं व्यावहारिके जीवने विज्ञानस्य वैभवान्मुक्ताः भवितुं न शक्नुमः । प्रतिदिनमेव आजागरणात् शयनं यावद् विज्ञानप्रभावात् प्रभाविताः वयम् । वैज्ञानिकैर्यन्त्रैरुष्णतां शीतलताञ्च प्राप्तम् पयः पिबामः, वैज्ञानिकयन्त्रैरेवं भोजनं भक्षयामः, वैज्ञानिकवाहनैः पर्यूलाः विद्यालयं कार्यालयम्वा गच्छामः, वैज्ञानिकैराविष्कृतवाष्पयान-वायुयान-जलयानादिभिर्देशविदेशानां यात्रां कुर्मः, रेडियोयन्त्रेण विभिन्नान् समाचारान् जानीमः, सङ्गीतं च शृणुमः । विज्ञान-साधनेनैव चलचित्रं पश्यामः, विज्ञानरीत्यैव हृदयपरिवर्त्तनं कुर्मः मस्तिष्कचिकित्साञ्च कर्तुं पारयामः । किमधिकम्, वैज्ञानिकाविष्कारैरेव जीवनदानमपि कर्तुं प्रयासो विधीयते । मृत्युदण्डं तु वैज्ञानिकैर्यन्त्रैरधुनाऽपि दीयत एव । साम्प्रतमन्तरिक्षयात्रि-भिश्चन्द्रलोकादीनां यदन्वेषणं कृतं तदपि आधुनिकविज्ञानस्य विकासस्यैव सूचकम् । आधुनिकैर्वैज्ञानिकैः पूर्वजानां वयो ग्रहीतुमपि ध्वनियन्त्राणामाविष्कारः क्रियते । सम्प्रति युद्धसम्बन्धीनि शस्त्रास्त्राणि विज्ञानस्यैवफलभूतानि सन्ति । एटम-हाईड्रोज-नादिअस्त्राणामाविष्कारोऽपि विज्ञानस्यैव शक्ति सूचयति । अनेनैतत् सुस्पष्टं यत् अस्माकं जीवनस्य कदाचिदेव कश्चित् क्षणः स्यात् यो विज्ञानेनाप्रभावितो भवेत् । किं बहुना, आकाशे, पाताले सर्वत्रापि विज्ञानस्य गतिर्दरीदृश्यते । नात्राश्चर्यास्पदं किञ्चिद् यदाधुनिकम् विज्ञानं प्रकृतिमपि जिगीषते असम्भवञ्च सम्भवं कर्तुं प्रयतते । आधुनिकविज्ञानस्यैवैतत् फलं यत्र केवलम् भारतेऽपितु विश्वस्मिन्नपि विश्वे विज्ञाना-श्रयेण कृषिक्षेत्रे, औद्योगिकविकासक्षेत्रे, चिकित्साक्षेत्रे चापूर्वो विकासः सञ्जातः । यानि भूमिकर्षणादीनि कृषिसम्बन्धीनि कर्माणि प्राचीनसाधनैर्मासैः पारयितुं शक्यन्ते तान्या-धुनिकट्रैक्टरादिसाधनैः कतिपयघण्टास्वेव साधयितुं पार्यन्ते । एवमेवाधुनिकैरौद्यो-गिकैर्यन्त्रैः वस्त्रनिर्माणादिकार्यमधिकपरिमाणं स्वल्पकाले एव साध्यते ।

का कथा वर्त्तमानायाः विज्ञानसिद्धायाश्चिकित्साप्रणाल्याः यया असाध्येभ्यो-ऽसाध्यानामपि हृदादिरोगाणाञ्चिकित्सा कैश्चित् क्षणैरेव संपाद्यते । मनुष्याणां शरीरेषु मर्कटादीनां हृदयमपि वर्त्तमानचिकित्सकैः संयोज्यत एवेति न नवीनं रहस्यमधुनावक्तुं शक्यते । उपर्युक्तरीत्या वैज्ञानिकानामाविष्कारानाश्रित्य विश्वस्यापि सर्वाङ्गो विकासः स्वाभाविकः ।

परमाधुनिकवैज्ञानिकविकासस्यापरोऽप्येकः पक्षः । आधुनिकाः वैज्ञानिका आविष्काराः यत्र मानवस्य बहुधा श्रेयसः सम्पादनं कुर्वन्ति तत्रैव मानवस्य हानिरपि वैज्ञानिकैराधुनिकैराविष्कारैः स्पष्टमेवानुभूयते । एटमबम्बादीनां परम ध्वस्त्राणामन्ये-

पाश्चाधुनिकास्त्राणामाविष्कारस्योद्देश्यो मानवहानिरेव प्रतीयते। एटमबम्बाद्यानामस्त्राणां धारयताम् रूसामेरिकादिदेशानामेतत् कथनमनुचितममानवीयञ्च यत् स्वरक्षार्थं एतादृशानां भयावहानामस्त्राणां योजनमावश्यकम्। यैर्हिंसिकैरुपायैरात्मरक्षा सम्भाव्यते ते कुत्सिताः घृण्याश्च। अन्यच्च यदा सर्वेऽपि देशाः एटमादीनिशस्त्रास्त्राणि धारयन्तः रक्षापराः स्युस्तदा विश्वशान्तिस्तु स्वप्नेऽपि असम्भवा सकलस्यापि विश्वस्य विनाशश्चानिवार्यः।

अतः सर्वेषामपि देशानां वैज्ञानिकैः, मानवश्रेयस एव ज्ञानस्य विज्ञानस्य वा सत्तां स्वीकृत्य स्वकीयस्य विज्ञानस्य प्रयोगो विधेयः। अनेनैव प्रकारेण विज्ञानस्य साफल्यं विश्वशान्तिश्च भवितुं शक्यते नान्यथा। एतद्विषयेऽस्माकं भारतीयनेतृणां नीतिरतिशयेन स्तुत्या यदनुसृत्य भारतवर्षीयाः वैज्ञानिका अहिंसापराः सन्तः परमाण्वस्त्राणां निर्माणं न कुर्वन्ति परमाण्वस्त्रनिर्मातॄश्चामेरिका रूसादिदेशान् निर्भीकं निन्दयन्ति। नात्रायमाशयो ग्राह्यो यद् वयं भारतीयाः परमाण्वस्त्राणां निर्माणेऽज्ञाः। भारतीयाः वैज्ञानिकाः परमाण्वस्त्राणां निर्माणकार्ये सर्वथैव कुशलाः सन्तोऽपि मानवजातेः कल्याणविचारेणैव परमाण्वाद्यस्त्राणां निर्माणं नहि कुर्वन्ति। अत एवाऽस्माकं देशे वैज्ञानिकैर्बहुविधविकासहेतोरेव अणुशक्तेर्विकासो विहितोऽस्ति। भारतवर्षस्यैषा नीतिः समग्रस्यापि विश्वस्य प्रशंसाभाजनं वर्तते। अस्माकं राष्ट्रस्य नीतेस्त्वयमेवाधारः—

'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥'

---

६७

# अन्तरिक्षयात्रा

विज्ञानमाधुनिकयुगस्यात्यन्तमाकर्षकं ज्ञानम्। विज्ञानस्य प्रभावो लोकेऽधुना सर्वत्रैव दृश्यते। पाकशालायां पाठशालायाम्वा, गृहे वने वा, सर्वत्रैव विज्ञानस्य चमत्कारा अस्माभिः अवलोक्यन्ते। आधुनिकेन विज्ञानेन तु असम्भवः सम्भवताम् प्राप्तः। किमधिकमाधुनिकास्तु वैज्ञानिका मृतमपि जीवितं कर्तुम् प्रयतन्ते। एवञ्च सर्वमी-

श्वरीयं सामर्थ्यम् प्राप्तुमीहन्ते वर्तमानकालिका: वैज्ञानिका:। परम् 'नहिकश्चित् सर्वज्ञ:, सर्वज्ञस्तु परमेश्वरएव, इति कथनानुसारम् मनुष्य: कियदपि विज्ञानम् अर्जयतु-परं सर्वज्ञत्वं नहि प्राप्स्यति, इत्यस्माकं दृढो निश्चय:। परम् मानवेन ज्ञान-विज्ञानस्य वृद्धि: सदैव करणीयेति तु सर्वेषामेव ग्राह्य: पक्ष:। अत: वर्तमानकालिकं वैज्ञानिकं ज्ञानम् विज्ञानस्य वृद्धे: सूचकमिति सर्वथा सत्यम्।

अन्तरिक्षयात्रा वर्तमानकालस्याधुनिकतमश्चमत्कार:। १९६८ वर्षस्य जनवरी-मासस्य द्वादशतारिकायां अमेरिकादेशस्य बोरमैनप्रभृतिभिर्वैज्ञानिकैरन्तरिक्षयात्रायामद्भुतं साफल्यमुपलब्धम्। अमेरिकादेशस्य वैज्ञानिकत्रयेण 'अपोलो ८' यन्त्रेण अन्तरिक्षयात्राम् विधाय भारतीयानां देवविद्वेषस्य 'चन्द्रमसोऽतिसमीपात् दर्शनं कृतम्' इति सर्वथा विलक्षणोऽयमाविष्कार:। धन्येयमेषांविदेशिनां ज्ञानजिज्ञासा महत्त्वाकांक्षा च ये स्वप्राणानामपि चिन्तामकृत्वा स्वोद्देश्ये साफल्य प्राप्तुं स्वप्राणानपि समर्पयन्ति। उदाहरणार्थं १९६० वर्षस्य जनवरीमासस्य सप्तविंशतितमे (२७) दिवसे अमेरिका देशे 'अपोलो २०८' परीक्षणकाल एव यदा भस्मीभूतस्तदा तत्रस्था: वर्जिलग्रिसम-एडवर्डह्वाइट-राजरचैफी महोदयाश्चापि वैज्ञानिका: पञ्चत्वं गता:। एवमेवान्येऽपि: सञ्जाता: यै: स्वप्राणा अपि एतत्कृते विसर्जिता:।

अन्तरिक्षयात्राया: प्रसङ्गे रूसदेशस्य यूरीगागरिननामकस्य वैज्ञानिकस्य नाम वैशिष्ट्येनोल्लेखनीयम्। अयमेवान्तरिक्षयात्राया: प्रथमसेनानी। अनेनैव विज्ञानवीरेण सर्वप्रथममन्तरिक्षयात्राकृता। १९६१ वर्षस्यअप्रेलमासस्यद्वादशतारिकायामयम् वैज्ञानिक: अष्टोत्तरशतेषु मिनटेष्वेव पृथिव्या एकां परिक्रमां कृत्वा सकुशलो निवर्तित:।

अन्तरिक्षयात्राया: विषये रूसामेरिकयोर्द्वयोरपि देशयो: योगदानं स्तुत्यम्। अनयोर्देशयोर्वैज्ञानिकानान्तु योजना चन्द्रमसि गृहनिर्माणस्य वर्तते। एतेषान्त्वियमपि कल्पना यद् मंगलशुक्रयोर्या यात्रा इदानीम् मासेषु पूर्यते सा कतिपयघण्टास्वेव सम्भविष्यति। अत: इदं सर्वथा स्पष्टं यदाधुनिकैर्वैज्ञानिकैरन्तरिक्षविज्ञानविषये यदुपलब्धयच्चोपलब्धुमेते कल्पयन्ति तत् सर्वमेवात्यन्तमाश्चर्यास्पदम्।

परमेकोऽपरोऽपि विचारणीय: पक्ष:, सचायं यत् कौतूहलोत्पादकेभ्यो वैज्ञानिकाविष्कारेभ्यो यो विपुलधनव्यय: क्रियते तत् किमौचित्यम्। एतत्कृते प्रयुक्तेन धनेन लक्षाधिकानामपि बुभुक्षितानामुदरपूर्तिर्भवितुमर्हति। उदाहरणार्थम्, इदानीं यावत् अमेरिकादेशेन चन्द्रमसमधिगन्तुं चतुर्विंशति-अरबडालराणां व्यय: कृत:। का कथा रूसदेशस्य, अनेन तु तदधिकएव धनव्यय: कृत: स्यात्। अतएवामेरिकादेशस्य आईजनहावरामिधेन भूतपूर्वेणराष्ट्रपतिना चन्द्रयात्राया अनावश्यकताया एवानुमोदनं कृतम्। अस्मिन् विषये मदीया तु इयं विचारदृष्टिर्वर्तते यद् वस्तुतोज्ञानविज्ञानस्या-

नुसंधानमावश्यकम् । परमत्रैवेदमपि वक्तव्यं यत्तैरेव देशैः एतादृशेभ्य आविष्कारेभ्यो धनव्ययः कर्त्तव्यो ये सुखेन जीवनं यापयन्ति । न च तैर्देशैर्येषां वासिनो बुभुक्षया प्राणत्यागं कुर्वन्ति । अपरञ्चेदमपि विचार्यं यत् यद् ज्ञानं विज्ञानम्वा मानवस्य हितकारकं वर्त्तते तदेव ग्राह्यं नान्यत् । एनमेव निकषमाश्रित्य समालोचकैर्विज्ञानस्य निन्दा स्तुतिर्वा कर्त्तव्या, इति मे मतिः ।

---

६८

# वैज्ञानिकानां चन्द्रलोके प्रवेशः

आत्मा परमात्मा चेति प्रकारद्वयेन परमेश्वरः सर्वेषां भूतानां हृदि प्रतिष्ठते, विशेषेण मानुषाणाम् । यस्य परमात्मनः कर्तुमकर्तुम्, अन्यथाकर्तुम् च सामर्थ्यम्, तस्यैवांशस्यजीवात्मनोऽपि, अग्नेः विस्फुलिङ्गस्य इव परमेश्वरांशस्य शरीरिणो विलक्षणं सामर्थ्यम् वर्तते इति नात्र संदेहलेशोऽपि । मानुषोऽपि यद्यत् कर्तुमिच्छति, तत्तत् करोति ।

आलोकदेशम् चन्द्रलोकमभियानञ्च वर्तमानकालस्याधुनिकतमश्चमत्कारः । चन्द्रलोकयुगस्य सूत्रपातस्तु १६५७ तमेईसवीयाब्दे अक्तूबरमासस्य चतुर्दशदिनाङ्केऽभवत्, यदा रूसदेशेन स्पूतनिकः–१ चन्द्रलोके प्रेषितः । चन्द्रलोकस्यान्वेषणप्रसङ्गे रूसदेशस्य यूरीगगारिनस्य नाम वैशिष्ट्येनोल्लेखनीयम् । अयमेव चन्द्रलोककोलम्बसः । अयमेव चन्द्रलोकयात्रायाः प्रथमः सेनानी । अनेनैव विज्ञानवीरेण सर्वप्रथमम् चन्द्रलोकयात्रायाः पन्थाः प्रशस्तः कृतः । १९६१ वर्षस्य अप्रैलमासस्य द्वादशतारिकायाम् वोस्तोक–१ यानेन अयम् वैज्ञानिकः अष्टोत्तरशतेषु मिनटेषु पृथिव्याः एकाम् परिक्रमाम् कृत्वा सकुशलो स्वभूमिं निर्वतितः ।

एतदतिरिक्तम् १९६३ तमेईसवीयाब्दे जूनमासस्य षोडशतिथौ तेरेश्कोवा वोस्तोक- नाम्ना यानेन चन्द्रलोकयात्रामकरोत् । रूसदेशस्य वेलेन्तिना तेरेश्कोवा विश्वस्य प्रथममहिलाऽऽसीत् यया चन्द्रलोकयात्रा कृता । वैज्ञानिकानुसारं तु नार्यः चन्द्रलोकयात्रायै अधिकोपयुक्ताः प्रतीयन्ते ।

परमियंतु भाग्यविडम्बना एव यत् अद्यावधि कापि महिला चन्द्रलोके न गता ।

१९६८ वर्षस्य दिसम्बरमासस्य पञ्चविंशतारिकायाम् अमेरिकादेशस्य केप-केनेडीनगरादुड्डीय फ्रैंक बोरमैन–जेम्स ए० लावेल–विलियम ए० एण्डर्सेतिवैज्ञानिक-त्रयेण अपोलो ८ यानेन चन्द्रलोकयात्राम् विधाय भारतीयानाम् देवविक्षिपस्य चन्द्र-मसोऽति समीपात् दर्शनम् कृतम्, इति सर्वथा हर्षस्य विषयः।

१९६९ वर्षस्य जुलाईमासस्य एकविंशतितमं शुभदिनम् चन्द्रवारः विश्वस्ये-तिहासे रोमाञ्चकरम् नवीनम् क्षणम् योजयति। यदाऽमेरिकादेशस्य कमाण्डर-आर्मस्ट्राङ्गः, एडविनएल्ड्रिन-माइकल-कालिन्सा एकादशेन अपोलोयानेन चन्द्रमसो जलविहीने शान्तिसागरेऽवातरन्। भारतीयसमयानुसारंतु महति प्रत्यूषे एकवादनान-न्तरम् सप्तचत्वारिंशत् मिनटेषुगतेषु मानवः भासमानम् चन्द्रलोकमाप्नोत्। चन्द्रतले चावतीर्य सर्वप्रथमं नील-आर्मस्ट्राङ्ग आह–आश्चर्यमिदम्, भूमण्डलमपि दूरात् चन्द्रवत् भासमानम् पश्यन् नीलआर्मस्ट्राङ्गः आह–

Earth looks big, bright and beautiful

अर्थात् अहो। महती, उज्ज्वला रमणीया च-पृथ्वी।

एल्ड्रिन महोदयेनापि भावावेशस्वरेण भाषितम्–

रम्यः दृश्यः सर्वतश्च आकर्षकः। वस्तुतश्चन्द्रतलमत्यन्तम् रम्यम् निर्जनञ्च स्थलम्। सर्वविधमानवविकासाय, सुखाय सम्पन्नतार्थं च वयमत्रागताः।

वैज्ञानिको जनः चन्द्रमसम् धूलिमयं, मृण्मयं गर्तप्रस्तर-प्रायंचप्रदेशमकथयत्। संस्कृतशास्त्रं एवं वर्णयन्ति चन्द्रमसम्–

"तारापतिः सः ब्राह्मणानामस्माकम् राजा।
स उदधेः पुत्रः, लक्ष्मी देव्याः सोदरो भ्राता।"

ओषधीनामधिपतिः, अमृतस्य च निधानम् चन्द्रः सः।

एवम् प्रकाशमाने चन्द्रेऽधुनातना वैज्ञानिकाः केवलां धूलिराशिम् लभेरन्। इदमत्र युज्यते वक्तुम्–

सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभौसोदरौ,
कार्यमृयस्य सुदीप्तयोऽपि किरणाः पीयूषधाराकिरः।
लब्धं खर्परधूलिमूलमखिलं हा हन्त ! दुःखम् विधो,
सत्यासत्यविचारचर्चनपराः जानन्तु लोकाः विधुम्॥

वयं चन्द्रतलं स्पृशतां चन्द्रलोकयात्रिणां महाव्यवसायिनां शूराणां स्वागतं व्याहृत्य तान् धन्यवादान् प्रयच्छामो यत्ते प्राणभयं परित्यज्य चन्द्रमसः पृथिव्याश्च दूरमदूर-मकुर्वन्।

———

६९

# गद्यं कवीनां निकषं वदन्ति

भावानुकूल्यं धारयता छन्दोविधानेन कवयितुः कवेः काव्यसृष्टिः सरलतयैव सहृदयानां मनांसि रमयति, इति सर्वथा स्पष्टमेव ज्ञेयम्। कथञ्च शिखरिणी-मन्दाक्रान्ता-मालिन्यादिसरसछन्दोभिः शोभितां कवितां निपीय सहृदया जनाः काव्याशयमबुद्ध्वैव आनन्देन दोलायमानाः सञ्जायन्ते, इत्यपि नास्ति अविदितम्, यद् गङ्गालहरी-सौन्दर्यलहरी-आनन्दलहर्यादिस्तोत्राणां श्रवणेनैव कस्य मनो न प्रसन्नं भवति। अतश्छन्दोविधानं कवेः काव्यसौन्दर्यं वर्द्धयितुं विशिष्टं साधनं वर्तते। इदमेवकारणं यच्छन्दोबद्धकाव्ये, यत्र आस्वादयितुश्चित्तं छन्दस्यपि रमयति, कवेः काव्यनैपुण्यस्यालोचनं शीघ्रं सम्यक्कर्तुं न युज्यते। एवञ्च गद्यकाव्ये एव, यत्र कवेः भावैः सह एव अनुशीलनकर्तुः प्रत्यक्षः सञ्जायते, कवेः काव्यचातुरी पूर्णतया परीक्षितुं शक्यते। अतएव कैश्चित् निःसकोचमेव निगदितम्-गद्यं कवीनां निकषं वदन्ति। वामनेन स्वकीयकाव्यालंकारसूत्रवृत्तौ उद्धृतमिदं कथनम्।

संस्कृतगद्यस्य बहून्यपि रूपाणि सन्ति यथा वैदिकं गद्यम्, सूत्रात्मकं गद्यं; शास्त्रीयं गद्यं, साहित्यिकं गद्यं प्रशस्तिरूपं गद्यञ्च। संहितावर्त्ति, ब्राह्मणवर्त्ति, आरण्यकवर्त्ति, उपनिषद्वर्त्ति च यद् गद्य तद् वैदिकमेव गद्यम्। सूत्रात्मकं गद्यञ्च श्रौतादिसूत्राणाम् पाणिन्यादिरचितसूत्राणाम्। पतञ्जलेर्महाभाष्यस्य शंकराचार्यादीनाञ्च भाष्यग्रन्थानां यद् गद्यं तद् गद्यं शास्त्रीयमेव। दण्ड्यादीनां गद्यग्रन्थाः साहित्यिकगद्यस्यैव प्रमाणभूताः सन्ति। रुद्रदामनस्य गिरिनारशिलालेखः, हरिषेणादिरचिताश्च समुद्रगुप्तप्रशस्त्यादयः प्रशस्तिगद्यस्यैवोदाहरणभूताः सन्ति।

यद्यप्यनेनोपर्युक्तप्रकारेण संस्कृतगद्यस्य विविधानि रूपाणि दृश्यन्ते, परमेतेषु केवलं साहित्यिकमेव गद्यं प्रामुख्येन कवित्वस्य निदर्शनम्। एतदेव गद्यं संस्कृतकवीनां निकषं भवितुमर्हति नान्यत्। साहित्यिकगद्यस्य त्रय आचार्यास्तु प्रख्याता एव। ते च—दण्डी, सुबन्धुः बाणश्च। एतेषामतिरिक्तञ्चाम्बिकादत्तव्यासः, क्षमारावपण्डितादयश्चाधुनिकगद्यस्य लेखकाः सन्ति। एतेषामपि महत्त्वं आधुनिकगद्यस्य क्षेत्रे विशेषतयोल्लेखनीयं वर्तते। साहित्यिकगद्यस्याचार्याणां कवित्वपूर्णगद्यग्रन्थान्तर्वर्तिकाव्यसौन्दर्यस्याकलनेनैतत् सुस्पष्टं भविष्यति यत् "गद्यं कवीनां निकषं वदन्ति", इति।

साहित्यिकगद्यस्य प्रमुखः प्रथमश्चाचार्यो दण्डी। दण्डिना सुकविना अवन्तिसुन्दरीकथा दशकुमारचरितञ्चेतिगद्यकाव्यद्वयं लिखितम्। दण्डिनःपदलालित्यन्तु प्रसिद्धमेव। दण्डिनो गद्यस्य शब्दयोजनायां रमन्ध प्रावाहश्च स्वाभाविकम्। वाग्वैदग्ध्यं हास्योत्पादकत्वञ्च दण्डिनो गद्यस्यासारं वैशिष्ट्यम्। दण्डिनोऽलंकृतापि भाषा सरला

सरसा मनोरमा च वर्तते । एतत् प्रतीयते यत् सुललितसुपरिष्कृतगद्यलेखने महाकवि-दण्डी सर्वथैव निष्णातः ।

"श्लेषमार्मिकः" सुबन्धुश्च साहित्यिकगद्यस्य द्वितीयो निपुणः कविः । निश्चयमेव सुबन्धोः काव्यरचना श्लेषालंकारसुबद्धा । प्रायशश्चास्य कवेः श्लेषसौन्दर्यं श्लाघ्यमेव दृश्यते । उदाहरणार्थं वासवदत्ताया निम्नोद्धृते स्थले श्लेषसम्बन्धिसौष्ठवं कियत् सहजमित्यवलोकनीयम्—

"नन्दगोप इव यशोदयान्वितः जरासन्ध इव घटितसन्धिविग्रहः—दिलीप इव सुदक्षिणयान्वितः" एवं विधान्यनेकान्यपि उदाहरणानि सुबन्धोर्गद्ये प्राप्यन्ते ।

बाणस्तु संस्कृतगद्यस्य सूर्य एव वर्तते । बाणस्य गद्यं संस्कृतकविरवस्य साकल्येन निकषः कथ्यते । अतएव विदग्धमुखमंडनस्य रचयिता धर्मदासेन बाणस्य वाण्याः प्रशंसा निम्नोद्धृतया उक्त्या कृता—

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी ? नहि नहि वाणीबाणस्य मधुरशीलस्य ॥

बाणस्य वर्णनशैली संस्कृतगद्यक्षेत्रेऽद्भुतैव । हर्षचरितम् कादम्बरी चेति ग्रन्थद्वयं बाणस्य सुललितसंस्कृतगद्यस्योदाहरणभूतम् । ग्रन्थद्वयेऽपि बाणस्य वर्णनप्रतिभाया विलक्षणानि उदाहरणानि सन्ति । हर्षचरिते सिंहनादोपदेशेऽस्य वर्णनमत्यन्तमेव शोभनं वर्तते । सिंहनादोपदेशः कादम्बर्याः शुकनासोपदेशसमानमेव शोभनं दृश्यते । का कथा कादम्बर्याः, यत्र काव्यरसास्वादनं कुर्वते सहृदयायान्यत् किमपि न रोचते । यदुक्तमपि केनचिदालोचकेन—

"कादम्बरीरसज्ञानामाहारोऽपि न रोचते ।"

बाणस्य वर्णनपद्धतिस्तु तया पाश्चात्यामिधया रीत्या समन्विता यत्र शब्दार्थयोः रुचिरः समन्वयः समुपलभ्यते । तदेवोच्यते—

शब्दार्थयोः समो गुम्फः पाञ्चालीरीतिरिष्यते ।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥

कादम्बर्यां बाणस्य वर्णनशक्त्यन्तर्गतोऽलंकारनिर्देशोऽतिशयेन रमणीकः । रशनोपमाया अधोलिखितेऽंशेऽलंकारसौन्दर्यं कियत्सुन्दरमित्यवेक्षणीयम्—

"क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयौवनेन पदम्" (कादम्बरी) । एवमेव परिसंख्यालंकारस्यापि सौन्दर्यं कादम्बर्यां विलक्षणं दृश्यते । जाबाल्याश्रमस्य वर्णनावसरे परिसंख्यालंकारस्य योजना स्तुत्या । यथा—

"यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितम्, वयःपरिणामे द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनाम् भूमिमत्त्वम्, एणकानां गीतिव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजंगमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः।"

बाणस्य वक्रोक्तिसौन्दर्येणापि कादम्बरी सर्वथा सज्जिता । उदाहरणार्थम्, एकस्मिन् स्थले मदलेखया वक्रोक्तिमाध्यमेन चन्द्रापीडं प्रति कादम्बर्या अतिशयासक्तिर्व्यक्तीकृता—

"कुमार। किं कथयामि दारुणोऽयमकथनीयः खलु सन्तापः, अपि च कुमारभावोपेतायाः किमिवास्या यन्न सन्तापाय। तथा हि मृणालिन्याः शिशिरकिसलयमिव हुताशनायते, ज्योत्स्नाप्यातपायते। ननु किसलयतालवृन्तवातैर्मनसि जायमानं किं न पश्यसि खेदम्? धीरत्वमेव प्राणसञ्चारणहेतुरस्याः।"

बाणस्य विरोधाभासयोजनन्त्वतिशयेन विलक्षणम्—

"शिशिरस्यापि रिपुजनसंतापकारिणः, स्थिरस्याप्यनवरत भ्रमतः निर्मलस्यापि मलिनीकृताराातिवनितामुखकमलद्युतेः अतिधवलस्यापि सर्वजनरागकारिणः।"

कादम्बर्याम् बाणस्यानुप्रासयोजनाऽपि प्रायशः स्वरमाधुर्यसम्पन्ना दृश्यते। एकमुदाहरणमत्र प्रस्तूयते—

"इभकलभकोल्ललनपल्लववेल्लितलवलीवलयैः, मधुकरकुलकलंककालीकृतकालेयककुसुमकुड्मलेषु।"

एवमेव च कादम्बर्या बाणस्य प्रकृतिचित्रणं नितान्तम् मनोहारि काव्योपयोगि च दृश्यते। तपोभिः पूते जाबाल्याश्रमेसूर्यास्तकालिकम् वर्णनं बाणेन यादृशं सुन्दरम् प्रतिपादितम्, तदिदम्—

"अनेन च समयेन परिणतो दिवसः। स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तदम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुद्वहत्। ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभिरूष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपो दिवसस्तनिमानमभजत्। उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः पारावतचरणपाटलरागो रविरम्बरतलादलम्बत। आलोहितांशुजालं जलशयनगतस्य मधुभिदो विगलन्मधुधारमिव नाभिनलिनंप्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत। विहाय धरणितलमुन्मुच्य कमलिनीवनानि शकुनय इव दिवसावसाने तपोवनतरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत।" एवमेवाच्छोदसरोवरादीनाम् वर्णनावसरे बाणस्य प्रकृतिचित्रणसम्बन्धिनैपुण्यम् भूरिशः स्तुतियोग्यम्। कादम्बर्या प्रकृतिचित्रणस्य साहाय्येन तीव्रा भावानुभूतिः सञ्जायत इति निर्विवादम्।

सामान्येनापि कादम्बर्याम् वाणस्य वर्णनशक्तिः सम्मोहयति सहृदयानां चेतांसि। अस्याश्च वर्णनशक्तेः प्रभावोत्पादकताऽतीव सबला। लक्ष्मीदोषवर्णनावसरे शक्तिशालिनी वाणवर्णनशैली द्रष्टव्या—

"नह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या। लब्धाऽपिखलु दुःखेन पाल्यते। दृढगुणपाशसंदाननिष्पन्दीकृताऽपि नश्यति। न परिचयं रक्षति, नाभिजनमीक्षते। न रूपमवलोकयते। न कुलक्रममनुवर्तते न शीलं पश्यति। न वैदग्ध्यं गणयति।" न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति।"

वाणेन कादम्बर्यामोजमाधुर्य–प्रसादगुणानाञ्च व्यवहारोऽपि निपुणतया कृतोऽस्ति। ओजगुणस्तुकादम्बर्याः प्राण एव। अतएव च वाणस्य शैली समासबहुला दृश्यते। रसदृष्ट्याऽपि कादम्बरी संस्कृतगद्यसाहित्यस्योत्कृष्टा रचना गण्यते। कादम्बर्यां प्रधानरसस्तु शृङ्गार एव, परम् वीराद्भुतकरुणबीभत्सादीनां रसानामङ्गरूपेण योजनापि अवलोक्यते। अत्रत्विदमेव वक्तव्य यद् वाणस्य वर्णनशैली, भाषासौष्ठवम्, अलंकारनिर्देशः, प्रकृतिचित्रणम्, रसपरिपाकादिकञ्चैतत्सर्वमेवाऽऽदर्शरूपम् वर्तते। अतो वयं यदि वाणस्य कादम्वरीगद्यमुत्कृष्टसंस्कृतगद्यस्य निकषं कथयामस्तर्हि सर्वथोचितमेव समाधेयं सुधीभिः।

---

७०

# एको रसः करुण एव

समालोचकैः काव्यशास्त्रिभिश्च 'शृङ्गारो वीर एव वा' इत्यादिकमुक्त्वा प्राधान्येन शृङ्गार-वीररसयोरेव महत्त्वम् प्रतिपादितम्, परन्नाटककृता भवभूतिना काव्यक्षेत्रे करुणरसस्य महत्ता प्रतिपादिता। करुणरसस्य प्रतिपादनहेतोरेव भवभूतिना-काव्यक्षेत्रे करुणरसस्य महत्ता संसाधिता। करुणरसस्य प्रतिपादनहेतोरेव भवभूतिराचार्यपदवीमवाप। करुणस्याचार्येण भवभूतिनाऽद्वैतवेदान्तस्य विवर्तवादसिद्धान्तमाश्रित्य करुणरसस्य रसराजता सम्पादिता। करुणस्य रसराजताम् प्रतिपादयताचार्येण करुणो रसः सर्वेषामपि रसानाम् मूलत्वेनाङ्गीकृतः। अतएव स्वकीये उत्तररामचरिते नाटके स्पष्टमेवोक्तम् भवभूतिना कविकुलसुधांशुना—

एको रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक्-पृथगिवाश्रयते विवर्त्तान् ।
आवर्त्तबुद्बुदतरङ्गमयान् विकारान्,
अम्भो यथा सलिलमेव तु तत् समग्रम् ।।

यथा एकस्यैवाम्भस आवर्तबुद्बुदतरङ्गरूपा अनेकाः विकाराः दृश्यन्ते परमम्भस्त्वेकमेव, एवमेव एक एव करुणरसो निमित्तभेदात् विवर्तरूपतां धारयति। शृङ्गारादयश्च रसाः करुणस्यैव विवर्त्तरूपाः सन्ति। करुणरसवर्णनायां स्मरणालङ्कारमाश्रित्य संयोगशृंगारस्यापि वर्णनम् प्रायशः सम्भवत्येव। भवभूतिनोत्तररामचरिते स्मरणालङ्कारस्यसाहाय्येन संयोगशृंगारस्यातीव स्वाभाविकं सजीवञ्च वर्णनं निष्पादितम्। एकस्यैव श्लोकस्य प्रस्तुतिः भवभूतेः करुणान्तर्गतं शृंगारं साधयितुमलम्, सेयम्—

किमपि किमपि मन्दं मन्दमासत्तियोगा—
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः,
अविदितगतयामा रात्रिरेव व्यरंसीत् ।।

यथा करुणरसान्तर्गतं शृङ्गाररसस्य क्षेत्रमभिवर्तते तथैव विप्रलम्भशृङ्गारे करुणरसस्यापि निष्पत्तिः सञ्जायते। अतएवानयोर्द्वयोरपि रसयोर्वैधर्म्यं न वर्तते अपितु साधर्म्यमेव वर्तते।

करुणस्य रसराजताया अन्यान्यपि कारणानि सन्ति। कानिचिदत्र प्रस्तूयन्ते।

प्रथमं तावत्, वाल्मीकिनाऽऽदिकविना कविताया आरम्भे एव करुणमाश्रित्योक्तम्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीसमाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।

अनेन करुणस्य रसोद्रेकता स्पष्टैव। अन्यच्च करुणस्यानुभूतिर्युवकैः, बालैः वृद्धैश्च सर्वैरपि क्रियते, परं शृङ्गाररसस्यानुभवः प्राधान्येन युवकैरेवानुभूयते। एतस्मात् कारणात् शृङ्गारापेक्षया करुणरसस्य क्षेत्रम् विशालतरम्। लोकशिवत्वदृष्ट्याऽपि करुणस्य महिमा प्रशस्ततरः। शृङ्गाररसस्यास्वादेन व्यक्तेः केवलंमनोरंजनमेव जायते परम् करुणस्यास्वादयिता काव्यश्रवणकाले नाटकदर्शनकाले च करुणस्यास्वादनं कृत्वा तदनन्तरं लोकहितायापि तत्परो भवति। लोकहितस्यैषा भावना करुणं शृंगारापेक्षया प्रशस्ततरं साधयति।

भवभूतेरुत्तररामचरितातिरिक्तमपि संस्कृतसाहित्ये नागानन्दप्रभृतीनि करुणरसप्रधानानि नाटकानि सन्ति । अन्यत्रापि नैषधीयचरितरघुवंशादिग्रन्थेष्वपि प्रकीर्णरूपेण करुणरसस्य हृदयस्पर्शकम् प्रतिपादनम् वर्तते । परम् भवभूतिना उत्तररामचरिते करुणस्य यद् वर्णनं कृतमस्ति तदप्रतिमम् । करुणस्य प्रभावशालिताम् वर्णयता उत्तररामचरितकृता भवभूतिना निगदितम्—

"अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्"

करुणरसस्य स्पष्टीकरणार्थमपि भवभूतिना यान्युपमानानि प्रदत्तानि सन्ति तानि समुचितान्येव सन्ति । उत्तररामचरितस्यैव तृतीयेऽङ्के तुलनया करुणरसस्य पुटपाकोपमानेन यत् स्वरूपं निर्दिष्टम् तत् करुणरसस्य गम्भीरत्वम् घनत्वञ्च द्योतयति । तदिदम्—

अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥

---

## नैषधं विद्वदौषधम्

देवगिरः संस्कृतभाषायाः समुपासकेषु कविप्रवरेषु नैषधीयचरितस्य रचयितुः श्रीहर्षस्य काव्यप्रतिभायाः सौन्दर्यमतिशयेन विलक्षणमिति सर्वथा विदितमेव साहित्यसेविनाम् । नैषधपूर्ववर्तिभिः कालिदास–भारवि–माघकवीनां रघुवंश–किरातार्जुनीय-शिशुपालवधकाव्यैरपि द्युतिमद्भास्करैरिव काव्यगगनमालोकितमिति निःसन्देहमेवाङ्गीकरणीयम् । परं श्रीहर्षविरचिते नैषधीयचरितचन्द्रे समुदिते सति अन्येषां कविनक्षत्राणामालोकः सर्वथा न्यक्कृतिगतः । अत एवोक्तम्—

"उदिते नैषधे काव्ये क्व माघः क्व च भारविः"

नैषधीयचरितम् महाकवेः श्रीहर्षस्य नितान्तमभिरामालङ्कृतिः ।

"अस्याङ्गुलरसप्रदेशभणितौ" इत्यादिभिरुक्तिभिः श्रीहर्षेण नैषधीयचरितस्यानुपमता एव उद्घोषिता । नैषधवर्णितविविधविषयकं गम्भीरपाण्डित्यम्, मनोमुग्धकारिणी काव्यसरसता नैसर्गिकञ्च काव्यसौन्दर्यमस्य महाकाव्यस्याभिनवत्वमेव साध-

यति । परं तत्रापि नैतद्वक्तव्यं यदनेन महाकविना पूर्ववर्तिभ्यः कालिदासादिभ्यः कविभ्यः किमपि न गृहीतम् । कालिदासस्यवर्णनप्रणाल्याः, भारवेरर्थगौरवस्य माघस्य च श्लिष्टरचनापद्धतेः प्रभावो नैषधे निश्चितमेव स्वीकार्यः । एवञ्चार्थरुचिरता, समुचितशब्दयोजना, निरवधिकथाप्रवाहो विविधविषयकञ्चकाव्यवैदग्ध्य नैषधीयचरिते यत् दृश्यते तत् सर्वं श्रीहर्षस्य काव्यनैपुण्यमेव समर्थयति । अत एव सम्यगेवोक्तम्—

"श्रीहर्षो निपुणः कविः"

नैषधीयचरितान्तर्वर्तिकाव्यनैपुण्यं किञ्चिदेतादृश यदेतत् रसज्ञानां मनांसि मोहयति, शब्दवैचित्र्योपासकानां काव्यपिपासां पूरयति वैदुष्याभिलाषिणाञ्च विविदिषां तोषयित्वा तेषु वैदुष्यमानयति । नैषधे प्रदर्शितं श्रीहर्षस्य काव्यपाण्डित्यं तु काव्योपासकानां कृते तद्वदेवानन्दकरं यथा रोगिणां कृते सदौषधमानन्दकरम् । अतो नैषधीयचरितमधीत्य जना विद्वांसो जायन्त इति समुचितमेवकथनम्—

"नैषध विद्वदौषधम्"

नैषधस्य वैदुष्यवर्द्धकत्वे इदं प्रत्यक्षमेव प्रमाणं यत् नैषधमाश्रित्य आनन्दराजानकेन 'नैषधीयतत्ववृत्तिः', ईशानदेवेन 'नैषधटिप्पणम्', उदयनाचार्येण 'मनोहारिणी', गोपीनाथेन, 'हर्षहृदयम्', 'चाण्डूपण्डितेन 'नैषधदीपिका', चारित्रवर्द्धनेन 'तिलकटीका' जिनराजेन 'सुखावबोधा', नरहरिणा 'दीपिका', नारायणेन 'नैषधप्रकाशटीका' (नारायणीति नाम्ना प्रसिद्धा) भगीरथेन 'भागीरथी', भरतसेनेन 'सुबोधा', भवदेवेन 'सारसरस्वती', मल्लिनाथेन 'जीवातु' रामचन्द्रशेषेण 'भावद्योतनिका', विश्वेश्वराचार्येण पदवाक्यार्थपञ्जिका नाम्नी च टीका विरचिता । नैषधीयचरितस्यैतासु टीकासु, विविधविषयकेन नैषधीयचरितस्य पाण्डित्येन प्रवृद्धस्य टीकाकर्तृणां वैदुष्यस्य स्पष्टमेव प्रमाणं प्राप्यते । अतोऽनेकविषयगतेन पाण्डित्येन पूर्णमिदं काव्यं विद्वत्तासमुत्पादकमित्यत्र नाऽवसरः सन्देहस्य । अन्यच्चात्र वैशिष्ट्येनोल्लेखनीयं यदस्मिन् काव्ये केवलं काव्यीयं सौन्दर्यमेव नोपलभ्यतेऽपि तु धर्मशास्त्र[1]-दर्शनशास्त्र[2]-आयुर्वेद[3]-धनुर्वेद[4]-सामुद्रिकशास्त्र[5]-संगीत[6]-नाट्य[7]-मन्त्र[8]-तन्त्र-राजनीति[9]-अलंकरण[10]-माणिक्य[11]

1. नैषधीयचरितम्, २।१०
2. नै० १।८३, १।५९
3. नै० ४।११६
4. नै० ३।१२६, १२७
5. नै० १।१८, १।..१, ?।१०५
6. नै० ११।६
7. नै० ९।११७
8. नै० ७।२३, १४।८८
9. नै० १।१३, ४।८१
10. नै० १।५१, १५।२७, १५।२९
11. नै० ७।७६

ज्ञान तुरग[1] ज्ञान–रश्मिविज्ञान[2]–जलचरविज्ञान[3]–कलाज्ञान[4]–शिल्पज्ञान[5]–शकुन[6]–पाक-विज्ञान[7]–लोक[8]–रीत्यादि-विषयाणामपि विवेचनं कृतं वर्तते। वर्णाश्रम–विवाह–भोजन–वस्त्राभूषण–विलास–द्यूतक्रीडा–चित्रकला–देव–पूजादिविषयाणामपि चित्रणमस्मिन् महाकाव्ये वर्तत एव। अतश्च नैषधीयचरिते समुपलभ्यमानं विविध-विषयकं पाण्डित्यमद्भुतमेव यत्र कवयः, काव्यशास्त्रिणः, ज्योतिर्विदः, धार्मिकाः, दार्शनिकाः, भिषजः, सङ्गीतज्ञाः, राजनीतिविशारदाः, तान्त्रिकाः, मन्त्रिकाः, अश्ववाहाः, शिल्पिनः, पाकविद्याविशारदाश्चापि स्वानुकूलं नैपुण्यं प्राप्नुवन्तीति सत्यमेव निगदितम्–"नैषधं विद्वदौषधमिति।"

---

८२

# उपमा कालिदासस्य

उपमाऽलंकारः सर्वेषामप्यलंकाराणां शिरोऽवतंसायते। केषाञ्चिदालंकारिकाणान्तु एतदपि कथनं यत् उपमैव सर्वेषामलंकाराणाम् मूलं वर्तते। 'साधर्म्यमुपमा', इत्युक्त्वा अलंकारशास्त्रस्य विपश्चिद्भिः उपमालंकारः परिभाषितः। एतदनुसृत्य समानधर्मता सादृश्यम्वा उपमायाः मूलम्। उपमायाः धर्मं–च वाकोपमानोपमेयरूपाणि चत्वारि अङ्गानि सन्ति।

कालिदासस्योपमासम्बन्धिसौन्दर्यस्य सुबोधत्वं सरसत्वमुपयुक्तत्वञ्चातिशयेन

---

1. नै० १।५७
2. नै० २।३, ४
3. नै० ४।३५
4. नै० २२।११
5. नै० २०।३६
6. नै० ५।१३४
7. नै० १४।७८, १५
8. नै० १।०५, ३।१३१

स्तुत्यम् । रघुवंशमहाकाव्ये उपमाऽलंकारस्य प्रयोगं कुर्वन् कालिदासः नन्दिन्याः विषये वर्णयन् कथयति यत् दिलीपसुदक्षिणयोर्मध्ये नन्दिनी तद्वदेव शोभते यथा दिनक्षपयोर्मध्यकाले सन्ध्या विराजते—

"दिनक्षपामध्यगतेव सन्ध्या"

कालिदासस्योपमानामुपमानगतमौचित्यमपिश्लाघ्यम् । रघुवंश एव ताम्रवर्णशोभितायाः नन्दिन्याः शोभां वर्णयन् कविकालिदासः तस्यै पतंगस्य प्रभाया उपमानं प्रस्तौति । तदेतत्—

"प्रभा पतङ्गस्य मुनेश्च धेनुः"

उपमाऽलंकारस्य सजीवता तत्र तु प्रामुख्येनावलोकनीया यत्र वशिष्ठधेनोरार्त्तनादेनाकृष्टो धनुर्धरो राजादिलीपः पाटलवर्णशोभितायाः नन्दिन्याः उपरि स्थितं केसरिणम् पर्वतस्य गैरिकमय्याम् शिखरभूम्यांविकसितं लोध्रवृक्षमिव पश्यति । रघुवंशस्य द्वितीयसर्गस्याधोलिखितेंऽशे सुस्पष्टमेवोपयुक्तमुपमानम्—

"अधित्यकायामिवधातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ।"

सौन्दर्यवर्णनेऽपि कालिदासस्योपमानां योगदानमाधिक्येन प्रशंसनीयम् । अभिज्ञानशाकुन्तले शाकुन्तलं सौन्दर्यं वर्णयन् उपमापटुः कालिदासः अनाघ्रातपुष्पादीनि अनेकानि उपमानानि चिनोति । एतानि उपमानानि अतीव स्वाभाविकानि रञ्जकानि च सन्ति । तान्येतानि सन्ति—

अनाघ्रातं पुष्पं किसलयमलूनंकररुहैः,
रनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघ,
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

नाऽत्र वयमधिकं ब्रूमः यत् कालिदासोपममुपमासम्बन्धि सौष्ठवमन्यत्रावर्णितमेव दृश्यते । अतएव समालोचकैः कालिदासस्योपमाविषयकं सौन्दर्यं वर्णयद्भिः स्पष्टमेवोक्तम्—

उपमा कालिदासस्य भारवेरर्थगौरवम्,
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ।

७३

# कालिदासस्य काव्यसौन्दर्यम्

सरसमाधुर्येण मधुरा, नलिनीवरमणीया, मुक्तामालेव गुणगुम्फिता, सुधेव सरसा, कोकिलविलासकूजनमिवानन्दप्रदा महाकवेः कालिदासस्य काव्यवाणी कस्य चित्तं न रमयति। अस्य कवेरप्रतिमं सौन्दर्यमेव विचार्य कविना श्रीकृष्णेनोक्तम्—

"अस्पष्टदोषा नलिनीव हृद्या हारावलीव ग्रथिता गणौघैः।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी॥"

संस्कृतकाव्यसंसारे कालिदासेन या प्रतिष्ठा प्राप्ता सा इदानीं यावत् न केनाऽपि इति कथनमस्माकं न पक्षपातमावहति। कालिदासस्य महाकवेर्यशसः आधारभूताः—रघुवंश-कुमारसम्भव-मेघदूत-ऋतुसंहाराभिज्ञानशाकुन्तल-मालविकाग्निमित्र विक्रमोर्वशीयेति सप्तग्रन्थाः सन्ति। एतेषु ग्रन्थेषु कवेराकर्षकं भावसौन्दर्यम्, लालित्यपूर्णा शब्दरचना, सुरम्यं प्रकृतिचित्रणम्, सहजसौन्दर्यनिरूपणम्, उपयुक्तालंकारयोजना, प्रेम्णः स्वाभाविकंचित्रण, भारतीयसंस्कृतिसम्पोषकत्वञ्चाद्भुतमेव। अतएवोक्तिरियं प्रख्याता प्रतीयते—

"पुरा कवीनां गणनाप्रसंगे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥"

महाकवेः काव्यसम्बन्धि भावसौन्दर्यं न केवलं संयोगे एवापितु वियोगेऽपि समानमेव दृश्यते। रघुवंशस्य त्रयोदशसर्गस्य सः प्रसङ्गोऽत्र विशेषतयोदाहर्तव्यो यत्र लंकाविजयानन्तरं पुष्पकविमानेनायोध्यां गच्छन् रामोऽशोकवृक्षस्य तन्वीं लतां पश्यन् सीताहरणजन्यां पूर्वकालिकीं वियोगस्थितिं स्मृतवान्—

इमां तटाशोकलतां च तन्वीम्,
स्तनाभिरामस्तवकाभिनम्राम्।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः,
सौमित्रिणा साश्रुरहं निषिद्धः॥

अस्मिन् श्लोके रामस्याशोकलतायां सीताभ्रमो रामस्य दैन्यपूर्णां वियोगदशां स्पष्टमेव व्यनक्ति 'त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः" इत्यनेन च रामस्य सीतां प्रति प्रेम्णः स्वरूपञ्च सर्वथा ज्ञायते। शृङ्गारस्य संयोगवियोगपक्षयोः पृथक्-पृथक् चित्रणमपि कालिदासस्य काव्येऽद्भुतमेव दृश्यते। शकुन्तलाया विलक्षणं सौन्दर्यं वर्णयन् कविः कथयति—

"अनाघ्रातं पुष्पं किसलयमलूनं कररुहै—
रनाविद्धं रत्न मधुनवमनास्वादितरसम् ।
अखण्ड पुण्यानां फलमिव च तद्रूपमनघं,
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

एवमेव मेघदूतेऽपि नायिकायाः सौन्दर्यवर्णनस्यानेकानि उदाहरणानि प्राप्यन्ते दिङ् मात्रं यथोदाह्रियते—

तन्वीश्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी,
मध्ये क्षामाचकितहरिणीप्रेक्षणा निम्न-नाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां,
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥

कालिदासस्य प्रेम्णः वैशिष्ट्यं तस्य सूक्ष्मता स्थूलं शारीरिकसौन्दर्यमेव च न अपितु पूर्वजन्मसंस्कारानाश्रित्य प्रेम विकसित भवति, इति कालिदासस्य दृढीभूता धारणा-न्नन्भावस्थिराणि जननान्तरसौहृदानि ।" केषाञ्चिदयमाक्षेपोऽपि नितान्तमसंगतो यत् कालिदासोऽसंयमितप्रेम्णः पक्षपाती । "वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखीवृत्तिः" इत्युक्त्वा महाकविना एतदेवसमर्थितं यत् संयमिनां चेतः परकलत्रेभ्यो विमुखमेव दृश्यते ।

कविरयं विरहिण्याः सौन्दर्यचित्रणेऽपि महान् पटुः । शाकुन्तले विरहिण्या आदर्शप्रेमिकायाः शकुन्तलाया रूपस्य चित्रं प्रस्तुवता कालिदासेनोक्तम्—

'वसने परिधूसरे वसाना नियमक्षाममुखीधृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला ममदीर्घं विरहव्रतं बिभर्ति ॥"

( कालिदासस्य सौन्दर्यप्रतिपादनचातुरीमेवावलोक्य जर्मनकविगेटेमहोदयैः

( Wouldest thou the young year's blossoms
& the truits of decline
And all by which the soul is charmed
enraptu.ed, feasted, fed ?
wouldest thou the earth & leaven it self
in one sole name combine ? )
I name the, O shakuntala, and all at once is said.

इत्यादिकमुक्त्वा शाकुन्तलसौन्दर्यस्यातिशयेन प्रशंसाकृता ।

संयोग-वियोगवर्णनातिरिक्तमत्यन्तकारुणिकप्रसंगानामपि वर्णने दक्षोऽयम् महान् कविः । कुमारसम्भवस्य रतिविलापः रघुवंशस्य चाजविलापः कस्य मनो न

रोदयति। कुमारसम्भवे शंकरस्य शापेन भस्मीभूतस्य मदनस्य शरीरस्य समीपस्था विलापं कुर्वती रतिः कस्य हृदयं न कम्पयते—

गत एव न ते निवर्तते स सखा दीप इवानिलाहतः।
अहमेव दृशेव पश्य कामविपह्य व्यसनेन धूमिताम् ॥

कालिदासस्य काव्यशैली तस्य काव्यसौन्दर्यं सर्वथाऽभिवर्द्धयति इत्यपि सुस्पष्टमेव। प्रायशः कवेरस्य भाषाशैली मधुरशब्दसुभूषिता, ललितपदरचना सुगुम्फिता, सरला सरसा च दृश्यते। तदनुरूपमेव कविकुलगुरोरस्य काव्ये माधुर्यप्रसादयोरेव गुणयोः प्राधान्यम् प्राप्यते। यद्यपि ओजसोऽपि स्थितिः कालिदासकाव्ये प्राप्यते, परं यत्र कुत्रचिदेव। माधुर्यप्रसादगुणाभ्यांतु सुकवेः काव्यश्रीरद्भुतमेव शोभते। शाकुन्तलस्य प्रथमांक एव यत्र निपुणेन कविना शकुन्तलायाः सहजसौन्दर्यमनोहरस्यवपुषो वर्णनं कृतं तत्र माधुर्यस्याभिव्यक्तिः स्पष्टमेवावलोकनीया।

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं च इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥

एवमेव प्रसादगुणस्य सौन्दर्यमपि शाकुन्तलेऽत्यन्तमेव मनोहारि—

भव हृदय ! साभिलाषं संप्रति संदेहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिह स्पर्शक्षमम् रत्नम् ॥

माधुर्यप्रसादगुणसमन्विता कालिदासस्य काव्यशैली साहित्यशास्त्रग्रन्थचर्चितासु शैलीसु वैदर्भीशैल्यन्तर्गतं गृह्यते। वैदर्भीशैलीमाश्रित्य च स्पष्टमेव निगदितम् साहित्यदर्पणे—

माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥

प्रत्येकस्यापि कवेः प्रकृतिः महती सम्पत्तिः। प्रत्येकभाषाया अपि सुकविना प्रकृतेः सदुपयोगोऽनिवार्य एव। प्रकृतिरेव मानवभावानाम् प्रत्यक्षकारिणी। महाकविकालिदासस्य प्रकृतिचित्रणस्य कानिचित् प्रमुखवैशिष्ट्यानि सन्ति, यथा प्रकृतेः सजीववर्णनम्, प्रकृतेः सहृदयरूपवर्णनम्, प्रकृत्यङ्गरूपाणां पशुपक्षिणामपि सहृदयस्वभाववर्णनम् (यथा शकुन्तलायाः पतिगृहगमनावसरे) प्रकृतेरुपदेशकरूपेण वर्णनम्, प्रकृतेः स्वाभाविकरूपचित्रणम्, आलम्बनोद्दीपनरूपचित्रणञ्च। प्रकृतिचित्रणस्यैतेषु सर्वेष्वपि प्रकारेषु, आलम्बनोद्दीपनरूपेण कृतं प्रकृतिचित्रणं काव्येऽत्यन्तमुपयोगि। आलम्बनोद्दीपनप्रकृतिचित्रणद्वारैव कविः पात्राणां चरित्रं साफल्येनोद्घाटयति। भ्रमरं सम्बोध्य कृतं शाकुन्तलवर्तिप्रकृतिचित्रणमालम्बनरूपं यथा—

अभिनवमधुलोलुपो भवांस्तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥

षष्ठेऽङ्के राज्ञो दुष्यन्तस्य मित्रम् विदूषकं प्रति निम्नांकितकथनम् प्रकृतेरुद्दीपनरूपस्यैवोदाहरणम—

मुनिसुता प्रणयस्मृतिरोधिना,
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः।

काव्यशोभावर्द्धकत्वादलङ्काराणामुपयोगिता सर्वैरेव स्वीकरणीया। कालिदासस्य काव्येऽलङ्काराणाम् प्रयोगो नितान्तं स्वाभाविकः रमणीयताप्रतिपादकश्च। तत्रापि उपमाकालिदासस्येत्यादिभिर्यत् स्पष्टमुपमापलङ्कारस्य चित्रणे तु महान् पटुरयम् महाकविः। अस्य कविवरेण्यस्योपमानामौचित्यं सर्वत्रैव महत्सौन्दर्यसम्पन्नम्। अस्योपमानां विविधताऽपि अनुपमेयैव। क्वचिदस्य कवेरुपमा प्रकृतिसम्बन्धिनी यथा रघुवंशे नन्दिन्यै—'दिनक्षपा मध्यगतेव सन्ध्या', शाकुन्तले च शकुन्तलायौवनायकृते 'कुसुममभिनवलोभनीयम्' इति। क्वचिच्चास्य कविकुलगुरोरुपमा दार्शनिकी यथा रघुवंश एव ब्राह्मसरोवरान्निसृताया सरयूनद्या उपमा कालिदासेन सांख्यदर्शनसम्मतप्रकृतेरुरूपत्वेन बुद्धितत्वेन प्रदत्ता—

"पयोधरैः पुण्यजनाङ्गनानाम्, निर्विष्टहेमाम्बुजरेणु यस्याः।
ब्राह्मसरः कारणमाप्तवाचः, बुद्धेरिवाव्यक्तमुदाहरन्ति ॥

एवमेव नन्दिनीमार्गानुसारिण्याः दिलीपपत्न्याः सुदक्षिणाया उपमा कविना 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इत्युक्त्वा स्मृत्या प्रदत्ता। निश्चितमेवैषा धार्मिकी उपमाऽतिशयेनोचिता। किमधिकं ब्रूमः, कालिदासस्योपमानां स्वाभाविकता प्रसङ्गानुकूलता च सर्वथैव हृद्यत्वं काव्ये समानयति। उदाहरणार्थं यथा रामवियोगकारणात् श्मश्रूणांप्रवर्द्धनेन येषामाननेषु विकारः सञ्जातस्तेषां वृद्धमन्त्रिणामुपमा प्ररोहजटिलैर्न्यग्रोधपादपैर्दत्ता, यदिदम्—

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च,
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान्।
अन्वग्रहीत् प्रणमतः शुभदृष्टिपातैः
वार्तानुयोगमधुराक्षरया च वाचा ॥

किं बहुना कालिदासस्य कोमलकान्तपदरचना, माधुर्यव्यञ्जका वैदर्भी शैली, स्वाभाविकी अलंकारयोजना, सहृदयमनोहारिणी रसनिष्पन्नता, रम्यातिरम्यं प्रकृतिचित्रणम् पात्राणां यथार्थचित्रणञ्च, इत्येतानि सर्वाणि कवेः काव्यसौन्दर्यस्य स्पष्टमेव हेतवो वर्तन्ते।

———

७४

# माघे सन्ति त्रयोगुणाः

महाकविमाघः संस्कृतसाहित्यस्यातिशयेन प्रशस्तेषु कविकुलशीर्षस्थेष्वेकः। संस्कृतसाहित्यसमीक्षकैः काव्यक्षेत्रे द्विप्रकारका त्रयी निर्धारिता वर्तते, एका लघुत्रयी अपरा च बृहत्त्रयी। लघुत्रय्यन्तर्गतं रघुवंश-कुमारसम्भव-मेघदूताः कालिदासरचिताः काव्यग्रन्था गृह्यन्ते। बृहत्त्रय्याञ्च भारविविरचितं किरातार्जुनीयम्, माघविरचितं शिशुपालवधम् श्रीहर्षविरचितञ्च नैषधीयचरितम् नीयते। शिशुपालवधस्य बृहत्त्रय्यन्तर्गतं परिगणनात् माघस्य महत्त्वं स्पष्टमेव दृश्यते। माघस्य काव्यगतवैशिष्ट्यकारणादेव माघविषये बह्व्यः प्रशस्त्युक्तयः प्राप्यन्ते। तासु कतिचिदेवाऽत्र प्रस्तूयन्ते—

१. उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयोगुणाः॥
२. नवसर्गगते माघे नवशब्दो न विद्यते।
३. मुरारि-पद चिन्ता चेत् तदा माघे रतिं कुरु।
४. मेघे माघे गतं वयः।
५. तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।
६ उदिते तु पुनर्माघे भारवेर्भारवेरिव॥

माघकवेरुक्तप्रशस्तिकारणं शिशुपालवधवर्तिकाव्यसौष्ठवम् वर्तते। कालिदासस्य 'उपमा', भारवेरर्थगौरवम्, श्रीहर्षविरचितस्य नैषधस्य पदलालित्यंसर्वम् माघविरचिते महाकाव्ये शिशुपालवधे सन्निहितम् वर्तते। इदानीमुपमादीनाम् पृथग् विवेचनमपेक्षितमनुभूयते।

(१) माघविरचिते शिशुपालवधे उपमासौन्दर्यम्—

उपमाविषयिकां कालिदासप्रख्यातिं को न जानाति। 'उपमा कालिदासस्य' इत्यपि प्रसिद्धमेव। परम् कालिदासस्योपमासौन्दर्यात् माघस्योपमासौन्दर्यं हीनं न वर्तते। माघस्योपमाऽलंकारसौन्दर्यमेवाऽत्र कारणम् यत् माघकविः 'घण्टा माघ' इति नाम्ना प्रसिद्धः। यामुपमामाश्रित्य माघकवये समालोचकैः 'घण्टामाघ' इत्युपनाम प्रदत्तं सोपमा एषा—

रज्जुवत् प्रसृतकिरणसम्पन्नसूर्यस्योदये चन्द्रमसिवास्तङ्गते सति अयं रैवतकपर्वतः, अधोलम्बितघण्टाद्वयेन वेष्टितगजराज इव शोभते। अस्तोदितस्य सूर्यस्यास्तङ्गतस्य च चन्द्रमसः कृते घण्टाद्वयस्योपमानमाघकवेर्वैलक्षण्यपूर्णकल्पनाशक्तेरेव प्रमाणम्। अत एव माघः 'घण्टा माघः, इत्युच्यते। इयमुपमा कविना स्वकीये श्लोके एवं निबद्धा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥
शि० व० ४।२० ॥

अन्यत्रापि माघकवेरुपमाऽलङ्कारसौन्दर्यम् प्रायशोदृश्यते । उदाहरणार्थम् द्वारिकाया रामणीयकम्वर्णयता कविनोदीरितम् यत् पुरी द्वारिका दर्पणमिव स्वच्छ-समुद्रजले स्वर्गस्य छायेवादृश्यत । तदेवं शिशुपालवधे—

स्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसंपत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु च्छायेव या स्वर्जलधेर्जलेषु ॥
शि० व० ३।३५ ॥

शिशुपालवध एव कुण्डिनपुरम्वर्णयता कविना माघेन कुण्डिनपुरी जलाशये प्रतिबिम्बितया सुरनगर्या उपमिता । उपमासम्बन्धिसौन्दर्यवर्तीनि अनेकान्यपि उदाहरणानि माघकाव्ये दरीदृश्यन्ते ।

अर्थगौरवम—

(उपमा कालिदासस्येति श्लोकानुसारम् कवेर्भारवेरर्थगौरवम् सुचर्चितम् । परम् माघस्याप्यर्थगौरवगतं सौन्दर्यन्नन्यूनम्) आकाशादवतरताम् मेघानाम् नीचैः कर्पूरवत् पाण्डुरमहर्षिनारदस्य सौन्दर्यचित्रणे कविना यत् कौशलम् प्रदर्शितम् तस्मादप्यधिकस्तेन नारदमन्देशः सुवर्णितः भगवतः श्रीकृष्णस्य रूपसौन्दर्यस्य सहिष्णुतापूर्णचरित्रस्यापि च वर्णने कविना यदर्थगौरवमापूरितम् तदपि दर्शनीयम् । कवेरर्थगौरवसम्बन्धि-वैशिष्ट्यम् सामान्यपदार्थेऽपि असाधारण्यमानयति सुपरिचितेषु वस्तुष्वपि च नवीनतां सञ्चारयति । प्रभातकालोदितसूर्यस्य बालकरूपेण चित्रणम् कवेरर्थगौरवसम्बन्धि-सौन्दर्यमेव प्रकटयति (यथा अस्मिन् पद्ये—

उदयशिखरिशृङ्गप्राङ्गणेष्वेव रिङ्गन्सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः)॥
शि० व० ११।४७

एकादश सर्गे एव पूर्वस्यां दिशिस्थितस्य सूर्योदयस्य सुवर्णचित्रितस्य दृश्यस्य च वर्णनमपि कवेर्माघस्यार्थगौरवसौन्दर्यम् प्रकृतिचित्रणकौशलञ्च स्पष्टयति । सूर्यो-दयम् वर्णयता कविना सुकल्पितम् यत् सर्वतः प्रसृतैः स्थूलरज्जूनामिव किरणैराकृष्टो बृहद्घट इव सूर्यो दिङ्नारीभिः समुद्रजलादाकृष्यते । यथा कलशं रज्जुसाहाय्येन कूपाद् बहिरानीयते तथैव पूर्वसमुद्रे निमग्नं सूर्यम् दिङ्नार्यः किरणरज्जुभिराकृष्य बहिरानयन्ति । यथा च जलनिमग्नस्य घटस्य जनाः बहिरानयन्ति । यथा च उस-

निमग्नस्य घटस्य जलाद् बहिरानयनकालेऽत्यन्तः कोलाहलः श्रूयते तथैव प्रभातेऽपि चटकानां कलरवः कर्णगोचरीक्रियते। एवदेवाऽत्र सुस्पष्टम्—

विततपृथुवरत्रा तुल्यरूपैर्मयूखैः।
कलश इव गरीयान् दिग्भिराकृष्यमाणः॥
कृतचपलविहंगालापकोलाहलाभि ।
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः॥

एवञ्चेदं स्पष्टम् यत् कविना माघेन स्वकीयेनार्थ गौरवगुणेन कविकृतोत्प्रेक्षारूपकातिशयोक्तिषु उपमाद्यलङ्काराणाम् प्रयोगोऽपि प्रशंसनीयः। अतो माघ काव्यस्यार्थगौरवम् विलक्षणम्। अतएवोक्तम्—

'तावद्भा भारवेर्भाति यावन्माघस्यनोदयः।
उदिते तु पुनर्माघे भारवेर्भारवेरिव'॥

पदलालित्यम्—

नल-दमयन्तीकथामाश्रित्य लिखिते ललितपदावलीशोभिते नैषधीयचरिते पदलालित्यं स्वाभाविकम्। अतएव प्रसिद्धमपि 'नैषधे पदलालित्यमिति" केचित् 'नैषधेपदलालित्यमि' त्यस्य स्थाने, दण्डिनः पदलालित्य' मिति पठन्ति। अत्रत्विदमेव निर्देश्यम् यत् माघकविविरचिते महाकाव्ये—शिशुपालवधे या पदयोजना विलोक्यते सा अतिशयेनलालित्यमयी। माघकवेः पदलालित्यस्य योजना शिशुपालवधे अनेकेष्वपि स्थलेषु उपलभ्यते। शिशुपालवधस्य प्रथमसर्गस्य, प्रथमश्लोके 'श्रियः पतिः श्रीमति शासितुं जगत्', एकादशश्लोके 'समासदत्सादितदैत्यसंपदः' चतुर्थसर्गस्य च 'समीरशिशिरः शिरःसु वसतां' इत्यादिललितपदानाम् योजना माघस्य पदलालित्यम् अप्रयासमेव साधयति। इदानीं यावदेतत् प्रतिपादितम् यत् काव्यस्य उपमार्थगौरवपदलालित्यगुणाः कालिदास–भारवि–श्रीहर्षाणामेव काव्येषु न सन्ति, अपितु माघकविनिर्मितशिशुपालवधमहाकाव्येऽपि गुणत्रयस्य योजना सुयोजिताऽस्ति।

( यत् स्पष्टीकृतम्, माघे उपमादयो गुणास्तु सन्त्येव, परमेतद् वैशिष्ट्येनोल्लेखनीयम् यदेतस्मिन् काव्ये ते दोषाः न हि प्राप्यन्ते ये भारविप्रभृतीनां कवीनां किरातार्जुनीयादिषु कृतिषु बहुशो दृश्यन्ते। कवेर्भारवेः शैली रूक्षा।

टीकाकृतासमालोचकेन च मल्लिनाथेनापि भारवेः शैलीक्लिष्टत्वविषये स्पष्टमेवोक्तम्—

नारिकेलफलसम्मितं वचो भारवेः।

स्पष्टमेवैतत् क्लिष्टत्वम् माघकाव्ये नास्ति। श्रीहर्षविरचितस्य नैषधीयचरितस्य

काव्यदोषा अपि लोकप्रसिद्धाः। काव्यप्रकाशकृता मम्मटेन तु काव्यदोषप्रकरणस्योदाहरणानां कृते नैषधीयचरितस्य श्लोकानामौचित्यम् निर्धारितम्। साधारण्येन नैषधीयचरितस्य दोषः स्वाभाविकताऽभावः कृत्रिमताः दर्शनञ्च। अनया कृत्रिमतया काव्ये क्लिष्टत्वमपिनास्वाभाविकम्। एषा स्वाभाविकता माघकाव्ये तु नैवाऽवलोक्यते। अपरञ्च माघस्य शब्दसञ्चयोऽपि श्लाघ्यः। अत एवोक्तम्—

"नवसर्गगते माघे नवशब्दो न विद्यते।"

---

७५

# मम प्रियपुस्तकम्

यदेकस्यामृतं तदपरस्य गरलमिति कथनमनुसृत्य एकमुत्तमादपि उत्तमं वस्तु सर्वेषां प्रियं भवितुं नार्हति। न केवलं पुस्तकसम्बन्धिन्येवैषा कथा। जीवनस्य विविधेष्वपि क्षेत्रेषु सर्वदैव वैषम्यमवलोक्यते। भिन्नरुचिर्हिलोकः, इत्येवात्र च हेतुः। अस्यैव रुचिवैचित्र्यस्य फलं यदेके नास्तिका अपरे च आस्तिकाः, एके धार्मिका अपरे च धर्मविरोधिनः, एके यदि कांग्रेससमर्थकाः अपरे च साम्यवादादिविरुद्धराजनैतिकसिद्धान्तानामुद्घोषकाः, केचन शृंगारसागरस्य सरसलहरीभिः सह कल्लोलक्रीडामेव सर्वं मन्यन्ते चेत्तदाऽन्ये मानवस्योदात्तहृदयपरिचायकं करुणरसमेव सर्वरसमूलं स्वीकुर्वन्ति—

'एको रसः करुण एव।'

वीररसोपासकाश्च भीषणयुद्धहत्याकाण्डादियुक्तं प्रसङ्गमेव मनोहरम् मन्यन्ते। अत मानवानां कृते अभिज्ञानशाकुन्तलोत्तररामचरितमहाभारतादयश्च ग्रन्थाः स्वस्वरुच्यनुसारं प्रियाः प्रतीयन्ते। मम विचारे तु रुचिवैचित्र्यस्यापि मूलं मानवस्यानेकजन्मसंस्कारा एव सन्ति। पारस्परिकसम्पर्केण अध्ययनेन च मानवस्य संस्काराणां निर्माण सञ्जायते, संस्कारैश्च वृत्तिनिर्माणम्। एवञ्च संस्काराधृतावृत्तिरेव रुचिवैचित्र्यस्य कारणम्। अत्रैवेदमपि कथनमुचितं यदुदात्तसाहित्यानुशीलनेनोत्तमजनसङ्गेन चोत्तमवृत्तीनां विकासो दृश्यतेऽनुत्तम सङ्गेन च निकृष्टवृत्तीनां प्रवृद्धिः। अयमेव प्रिया-

प्रियस्य निकष.। ये नूतनप्रकृतियुक्ताः पुरुषास्तेषांकृते उदात्तविचारसम्पन्नमेव साहित्यं प्रियं भवति, ये चानूतनसंस्कारसम्पन्ना जनास्तेभ्यः स्वरुच्यनुसारमनूतनमेव साहित्यं प्रियं भवति।

मम तु महर्षिवाल्मीकिरचितं रामायणमेव सर्वाधिक प्रियं पुस्तकम्। ग्रन्थोऽयम् धर्मनीतेः राजनीतेश्चादर्शरूप एव। अस्मिन्नेव ग्रन्थे पतिपत्न्योः, पितापुत्रयोः, राजाप्रजयोः, सन्मित्रयोः, सेवकस्वामिनोः, भगवद्भक्ताभक्तयोः, न्यायान्यायप्रिययोर्जीवयोः स्वरूपस्य चित्रणमतीव यथार्थं वर्तते। मानवमर्यादायाः, कर्त्तव्यपरायणतायाश्चायमप्रतिमो ग्रन्थः। मानवेन सम्भावितक्लेशानां चिन्तामकृत्वा कथं स्वप्रतिज्ञा पालनीया इत्यस्योदाहरणं दशरथ एव, येन कैकेयीति नाम्न्यै स्वराज्ञ्यै दत्तस्य वरदानस्य पालनार्थं स्वपुत्रस्य रामस्यापि चिन्ता न कृता वनवासितश्चासौ दाशरथिः। एवमेव रामसदृशः पुत्रः, सीतासदृशी भार्या, लक्ष्मणसदृशः अनुजोऽपि धन्यः। रामेण यदि पितुराज्ञापालनं प्रियतमं कार्यमंगीकृतं तदा पत्न्या सीतयापि रामंविना सर्वंजगत् शून्यम् मत्वा रामेण सह वनवासोऽपि महन्निधिरिव स्वीकृतः। लक्ष्मणेन तु रामसीतयोरनुचरत्वमेव परमार्थत्वेनाङ्गीकृतम्। एवमेवादर्शभक्तस्य स्वरूपं हनुमच्चरित्रे, सन्मित्रस्य स्वरूपं सुग्रीवचरित्रे, न्यायप्रियभ्रातुः स्वरूपं विभीषणचरित्रे च सम्यक् सम्प्राप्यते। अन्यदिदं वैशिष्ट्यं रामायणस्य यदस्मिन् ग्रन्थे न केवलं सत्प्रवृत्तानामपि तु असत्प्रवृत्तानामपि सम्यक् चित्रणं कृतं वर्तते। असतः प्रकाशनेनापि सतः स्वरूपं प्रकाशमायाति यदुक्तमेव—

असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।

असत्प्रवृत्तीनां मध्राड् रावण एव। कैकेयी–मन्थरा–शूर्पणखाद्यसत्प्रवृत्तीनां पात्राणामपि चित्रणं रामायणेऽतिशयनैपुण्येन कृतं दृश्यते। एवञ्चादर्शयथार्थयोश्चित्रणेन रामायणे वाल्मीकिना समन्वयस्य पन्थाः प्रचारितः। अस्यैवैतत् फलं यद् रामायणं सर्वेषामपि धर्माणां सर्वासामपि जातीनामखिलसम्प्रदायानाञ्च मान्यो ग्रन्थः मन्यते। समन्वयवैशिष्ट्यकारणादेव रामायणस्य वैलक्षण्यं सर्वैः सदैव स्वीक्रियते। रामचरितस्य निर्मात्रा तुलसीदासेन स्वग्रन्थस्यारम्भ एवोक्तम्—

नानापुराणनिगमागमसम्मतं यद्
रामायणे निगदितं क्वचिदन्यतोऽपि।
स्वान्तः सुखाय तुलसी रघुनाथगाथा
भाषानिबन्धमतिमञ्जुलमातनोति ॥

रामायणसदृशो विचारसमन्वयो वदन्यत्र कुत्रचिदपि नहि प्राप्तः, अयमेव हेतुर्मत्कृते रामायणप्रियतायाः।

रामायणान्तर्वर्ति भावसौन्दर्यमपि मेऽतिप्रियकरम् । प्रकृतिचित्रणञ्च रामायणे यादृशं सहजम् मनोहारि च दृश्यते तादृशं दुर्लभमेव । प्रकृतिचित्रणेऽपि वर्षादिऋतूनां चित्रण कवितूलिकयाऽतीवसुन्दरं सम्पन्नम् । निदर्शनार्थमत्र शरदृतुविषयकोऽशः प्रस्तूयते—

आसीनः पर्वतस्याग्रे हैमधातुविभूषिते ।
शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥
सरसा एव संनादैः सारसा रावनादिनी ।
याश्रमे रमते बाला साद्य मे रमते कथम् ॥

पुष्पितांश्चासनान् दृष्ट्वा काञ्चनानिव निर्मलाम् ।
कथं सा रमते बाला पश्यन्ति मामपश्यती ॥

या पुरा कलहंसानां कलेन कलभाषिणी ।
बुध्यते चारुसर्वाङ्गी साद्यमे रमते कथम् ॥
निःस्वनं चक्रवाकानां निशम्य सहचारिणाम् ।
पुण्डरीकविशालाक्षी कथमेषा भविष्यति ॥

एवमेव वसन्तर्तुवर्णनेऽपि वाल्मीकिकवेश्चातुरी शोभनैव । महाकविना वसन्तस्य सरसवर्णनं कुर्वतोक्तम्—

स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् ।
रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥
तत्र दृष्ट्वैव तां हर्षादिन्द्रियाणिचकम्पिरे ।
स कामवशमापन्नः सौमित्रिमिदमब्रवीत् ॥
सौमित्रे शोभते पंपा वैडूर्यविमलोदका ।
फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः ॥
सौमित्रे पश्यपंपायाः काननं शुभदर्शनम् ।
यत्र राजन्ति शैला वा द्रुमाः सशिखरा इव ॥

रामायणम् मम प्रियातिप्रियमित्यस्येदमपि कारणं यदयं ग्रन्थो भारतीयधर्मस्य दर्शनस्य संस्कृतेश्च प्रमाणभूतः । अस्मिन् मानवसंस्कृतेविकासस्य स्वरूपोऽवलोक्यते । रामायणस्य बहुविधं वैशिष्ट्यमेवावलोक्य त्रिविक्रमभट्टेनोक्तम्—

सद्रूपणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ॥

रामायणस्यालंकारिकं सौन्दर्यमपि मेऽस्य ग्रन्थस्य प्रियतायाम् महान् हेतुः । ग्रन्थेऽस्मिन्

महाकविना विविधप्रकारकस्यौपम्यस्य वर्णनायालङ्काराणां यः प्रयोगोविहितः सोऽतीव सहजो रमणीयश्च ।

उदाहरणार्थं तुषारमलिनस्य चन्द्रमसः सौन्दर्यं वर्णयता महाकविनोक्तम्—

"निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ।"

एवमेव घनान्तर्गतं द्योतमाना विद्युत् कविना रावणस्याङ्के स्फुरन्ती वैदेहीवोक्ता—

"स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ।"

कवेः क्रमालङ्कारस्यापि योजना रम्यैव । यदेषा—

"वहन्ति गर्जन्ति नदन्ति भान्ति,
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजाः वनान्ताः,
प्रियाविहीनाः शिखिनः प्लवंगमाः ।।

सन्ध्या वर्णनेऽपि कवेरालङ्कारिकं नैपुण्यमतिशयेन चमत्कारपूर्णम्, यदत्रसमासोक्त्युदाहरणेन सर्वथा स्पष्टम्—

'चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका ।
अनुरागवती सन्ध्या जहाति स्वयमम्बरम् ।।

महाकवेर्वाल्मीकेः श्लेषगर्भितरूपकस्यापि शोभाऽपि विचित्रैव, यदत्रोदाह्रियते—

'रात्रिः शशाङ्कोदित चारुवक्त्रा, तारागणोन्मीलितचारुतेजा ।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ।।

रामायणे शब्दार्थालङ्काराणां सौन्दर्यस्यानेकानेकान्युदाहरणानि सन्ति ।

रामायणस्योपर्युक्तं सौन्दर्यमवलोक्य यदि मे मनः मुग्धन्तर्हि किमत्राश्चर्यम् । रामायणस्य पावनी रम्या च कथा, धर्मस्य विविधरूपात्मकादर्शसमन्वितः पन्थाः, जीवनस्यानेकक्षेत्राणां परिचयः, सरसा मनोहरा वर्णनशैली सुन्दरातिसुन्दरदृश्यपरम्परा उपयुक्ताच्छन्दोऽलंकार योजना च कस्य मनो न हरिष्यति ।

७६

# गौतमबुद्धः

अस्माकं भारते देशे बहवः विद्वांसः धर्मनेतारश्चाभवन्, येषां यशः अद्यावधि विद्यते। तेषु भगवतो बुद्धस्यापि अवतार एतादृशे समयेऽभूत यस्मिन् समये हिंसा सीमान्मुल्लंघ्य अधिका प्रचलिता आसीत्। तां हिंसामवरोद्धुम् भगवतो बुद्धस्यावतरणमासीत्। स मनसा वाचा कर्मणा च हिंसायाः विरोधंकृतवान्। वस्तुत अहिंसा-प्रचारार्थमेव भगवतो बुद्धस्यावतारोऽभूत्।

बौद्धधर्मस्य प्राचीनेषु-मध्यकालीनेषु अनेकेषु ग्रन्थेषु तथागतस्य (बुद्धस्य) जीवनचरितंलिखितं प्राप्यते। एवं कथ्यते—यत् जन्मनः पूर्वं बुद्धेनएतद्विचारितं यदहं कस्मिंश्चित्देशे कस्यचिद् गृहे प्रादुर्भवेयम्। सः पूर्वमेव एतन्निश्चितवान् यत् मध्य-देशस्य कपिलवस्तुनाम्नि नगरे क्षत्रियस्य राज्ञःशुद्धोदनस्य सदाचरणशीलायाः पत्न्याः मायादेव्याः कुक्षितः जन्मग्रहणं करिष्यामि। तदानीं कपिलवस्तुनगरे जना आषाढोत्सवं कुर्वन्तिस्म। उत्सवस्यान्तिमरात्रौ आषाढपूर्णिमायां, मायादेवी इमं स्वप्नमपश्यत्। यत् कश्चिद्दिव्यप्रकाशः तस्याः कुक्षौ प्रविष्टोऽभवत्। द्वितीयदिने सा स्वस्वप्नं राजानं श्रावयति स्म। राजा विप्रानाहूयस्वप्नफलमपृच्छत् विप्रा ऊचुः—महाराज! भवता चिन्ता न कार्या। भवतो देव्याः कुक्षौ गर्भधारणमभूत्। भवतः पुत्र उत्पत्स्यते। सः यदि गृहेस्थास्यति तर्हि चक्रवर्तिराजा भविष्यति। अन्यथा विरक्तोभूत्वा वनंयास्यति, तर्हि महाज्ञानी बुद्धो भविष्यति। गर्भारम्भात्दशमे मासे मायादेवी महाराजं शुद्धोदनं प्रति-स्वपितुगृहेगन्तुमिच्छामप्रकटयत्। राजा सहर्षं स्वीकृतवान्गमनाय च मार्गप्रबन्ध-मपि अकरोत्। राज्ञ्याः पितुः ग्रामस्य नाम देवदहनगर आसीत् कपिलवस्तु देवदह-नगरयोश्चमध्ये एकं लुम्बिनी नामक सुन्दरं नगरमासीत्। तत्र गत्वा राज्ञीकिञ्चित् समयं यापयितुं वन-विहाराय-ऐच्छत्। आज्ञां प्राप्य परिचारकाः देवी वने गमयन्ति स्म। तत्र भ्रमणंकुर्वतीदेवी एकस्य शालवृक्षस्य शाखां गृहीतुं यावत् हस्तमुत्थाप-यतिस्म, तावत्तस्याः प्रसववेदना आरब्धा। सर्वे जनाः इतश्चेतश्चापसृताः। तस्यैव शालवृक्षस्याधोभागे स्थित्वैव महाराज्ञी एकं बालकं प्रसूतवती। बालकस्योत्पत्तिसमये एव चत्वारो महान्तो ब्राह्मणाः तत्रोपस्थितासञ्जाताः। रुदन्तं बालकं भोजनपात्रे संस्थाप्य ते मातुः समीपेगताः। ते ऊचुः—देवि! प्रसन्ना भवतु, तव कुक्षितः महा-प्रतापी पुत्र उत्पन्नः। इयं घटना विक्रमसंवत्सरात् पञ्चचत्वारिंशदुत्तरपञ्चशतवर्ष-पूर्वमासीत्।

बालकस्य जन्मनः शुभसूचनां प्राप्य द्वयोः नगरयोः जनाः लुम्बिनीवने गताः। बालकञ्चादाय कपिलवस्तुनगरंप्रत्यागताः। बालके राजभवनमागत एव कालदेवतो

नाम एकस्तपस्वी देवलोकात्पृत्तीयं राजभवनमागतः राजानमकथयत्, महाराज ! अहंभवत्पुत्रं द्रष्टुमिच्छामि । राजापुत्रमानयतिस्म । तपस्वी वालकस्यवन्दनामकरोत् । पुनश्च किञ्चिद्विचार्य सहस्य सः चक्षुर्भ्यामश्रूणि पातयामास । जनाः शङ्कयाअपृच्छन् – भ्रातः । अस्याकमार्यपुत्रे काचिदापत्तिस्तु नागमिष्यति, तपस्वी निषेधयामास, अन्यतुनिश्चितमेव वृद्धो भविष्यति-इत्युक्तवांश्च । तपस्वीउवाच, अहमेतदर्थं रोदिमि यदेतत् प्रकारकं पुरुषं (वृद्ध) ज्ञानिन अहं न द्रक्ष्यामि । जन्मतः पञ्चमे दिने वेदपारङ्गताः भविष्यफलज्ञातारश्च दैवज्ञाआहूता । यदा ते पृष्टास्तदा तेषाम्मध्ये सप्ताकथयन्—एवं शुभलक्षणशीलो गृहस्थो चक्रवर्त्ती राजा भवति । ततश्च वृद्धो भवति । तेषु न्यूनवयः कौन्डीन्यो नामतरुणः ब्राह्मणः अकथयत्—अस्य गृहस्थितेः किमपि कारणं नास्ति, अवश्यमेवायं महाज्ञानी भविष्यति । सिद्धार्थोत्पत्तेः कतिचिद्दिवासनन्तरं तस्य माता दिवङ्गता । तत्पश्चात् सपत्नी माता गौतमी तमपालयत् । सः बालकः प्रतिदिनं सशोभंवर्धतेस्म । यदा सिद्धार्थो बालकः षोडपवर्षे युवा अभूत्तदा राजा तदर्थं भव्यं राजभवनंनिर्मापयति स्म । तत्र राजभवने सङ्गीतादेः शृङ्गारस्य च समुचिता व्यवस्था कृता । सिद्धार्थः सिद्धार्थस्तत्र वासमकरोत् । वहिर्ज्ञातिवर्गे इयं किम्ववन्ती प्रसृता, यद् युवराजो सिद्धार्थः, भोगेषु लिप्तो वर्त्तते, काश्चित् कलाः नैवाम्यस्यति, युद्धस्य समये स किं करिष्यति, महाराजो सिद्धार्थमाहूय तां किम्वदन्तीमश्रावयत् । सिद्धार्थः राजद्वारा प्रजाया एतत्प्रचारार्थमकथयत् यत्सप्तमे दिवसे सिद्धार्थः कुमारः स्वकलां प्रदर्शयिष्यति । एवमेव नगरे घोषणा कृता सिद्धार्थश्च सप्तमे दिवसे स्वपराक्रमात् प्रदर्श्य प्रजां रञ्जितवान् । एकस्मिन् दिने सिद्धार्थो रथयाहूय भ्रमणार्थं वहिरुपवनं गतः । इममेव समयं सिद्धार्थस्य वृद्धत्वप्राप्तोऽचितं ज्ञात्वा देवाः मार्गे एकं वृद्धपुरुषं स्थापयामासुः । यस्य दन्ताः भग्नाः पलितं शिरो, वक्रं शरीरं यश्च हस्ते दण्डमादाय कम्पितोऽभूत् । सिद्धार्थः स्वसारथिं तद्वृद्धपुरुषसम्बन्धेऽपृच्छत्—

सारथेरुत्तरं श्रुत्वा सिद्धार्थः उदासीनो भूत्वा रथंगृहं प्रति नेतुमाज्ञप्तवान् । द्वितीयस्यां यात्रायां सिद्धार्थः एकं रुग्णपुरुषमपश्यत् । तृतीये दिने एकं शवमपश्यत्, चतुर्थे च दिने स एकं सन्यासिनमपश्यत् । सिद्धार्थं सारथिं संन्यासिनः सर्वं वृत्तान्तमपृच्छत् ज्ञातव स सिद्धार्थो यदा युवा अभूत्—तदा तस्य मनसि वैराग्याङ्कुरं ज्ञात्वा महाराजः शुद्धोदनः तस्य विवाहं यशोधरयासह सम्पादयामास । यशोधराकुक्षितः राहुलस्य जन्माभूत् सर्वेषु राज्ये च पुत्रोत्सवः महर्षं जातः । किन्तु सिद्धार्थं उदासीनो भूत्वा निर्लिप्तोऽभवत् तस्य चेतसि यो वैराग्याङ्कुरं उत्पन्नः सः विवाहकरणेन पुत्रोत्पत्या च न दूरं गतः । सहसा एकस्यां रात्रौ सिद्धार्थः सुप्तं छन्दकमुत्थाय कथितवान् । छन्दक ! अद्यैवाहं – महाभिनिष्क्रमणं करिष्यामि मम कृते एकमश्वं सज्जीकुरु । छन्दकः अश्वराजं कन्थकमलञ्चकार । इतश्च सिद्धार्थः राहुलं यशोधराञ्च द्रष्टुं

शयनागारं प्रति गतः। तत्र सपुत्रां पत्नीं सानन्दां सुप्तां दृष्ट्वा किमपि नोच्चारितवान्। भवनादुत्तीर्य स अश्वपृष्ठमारूढकन्थकः प्रयाणमकरोत्। छन्दकोऽपि अश्वपुच्छं सगृह्य सहैव अचलत्। एकस्यामेवरात्रौ सिद्धार्थः राज्यस्य सीमानमतीत्य नद्यास्तटं प्राप्तवान्। अश्वारूढो नदीमुत्तीर्य सिद्धार्थोऽकथयत्—सौम्य छन्दक ! ममाभूषणानि कन्थकञ्च नीत्वा गृहं गच्छ, अहं सन्यासं ग्रहीष्यामि मातापितरौ प्रति ममारोग्यं कथय। छन्दकः कन्थकमादाय स्वनगरं प्रत्यागतः।

सिद्धार्थस्तु इतस्ततः पर्यटन् एकदा बोधिवृक्षसमीपमागतः, प्रतिज्ञातवांश्च-यदहं ज्ञानं प्राप्यैव आसनं त्यक्ष्यामि। तत्रबोधिवृक्षस्याधोभागेकसप्ताहपर्यन्तं ध्यानमग्नोऽभूत्, सप्तमदिवस्यरात्रौ सः ससारोत्पत्तिस्थितिलयञ्चज्ञातवान्। एवं जन्मजरामरणशोकदुखादेः रहस्यमपि ज्ञातवान्। द्वितीयदिने समाधेरुत्थाय स वटवृक्षस्याधो भागे गतः। तत्रापि सः एकसप्ताहपर्यन्तमात्मचिन्तनमकरोत्। समाधेरनन्तर यदा स चक्षुषी-उन्मीलितवान् तदा स पूर्णरूपेणबुद्धोऽभूत्। प्राणिषु दयां कृत्वा सः धर्मोपदेशायोद्यतोऽभूत्। अस्मिन् समये तस्यायुः षड्त्रिंशद्वर्षपरिमितमासीत्। स बोधगयातः वाराणसीमागत्य स्वप्रथमोपदेशं पञ्चवर्गीयभिक्षूणां कृते कृतवान्।

तदनन्तरं तथागतो बुद्धः निर्वाणस्य कल्याणकारिणः परिणामान् सविस्तरमुपदेशयामास। ततो बुद्धः उत्तरकुरुदेशान् अनवतप्तसरोवरपर्यन्तमुपदेष्टुं गतः। अन्ते च—तथागतोऽहं भगवन्तं शरणं गच्छामि—इति कथयन् महापरिनिर्वाणं प्राप्तवान्।

## बुद्धोपदेशानां महत्त्वम्—

१– यथार्थवादः –स्व चक्षुर्भ्यां दृष्ट एव मार्गः सत्या, स एवानुकरणीयः। बौद्धदृष्टौ वेदाः, कर्माणि, ईश्वरादयः, सर्वेऽपि अविश्वनीया सन्ति।

२– व्यवहारवादः –बुद्धः यथार्थानुभवान् लोकजीवने संकलितवान्। तस्य शिक्षाः व्यवहारयोग्याः सन्ति। तस्य चत्वारो आर्यसत्याः—व्यवहारिकजीवनस्यानुभूतेः परिचायकाः सन्ति।

३– विवादेभ्य उदासीनता–बुद्धस्य विश्वासः केवलं विचाराणां दमनमात्रेणैव नैवासीत्, अपि तु तेषां कार्यरूपे परणमनेन आसीत्। बुद्धो विवादेभ्य उदासीन आसीत्।

४– शीलम्: –शीलाचरणे बुद्धः विशेषाग्रहं कृतवान्। शीलं सदाचारः कथ्यते। इममनुसृत्य मानवः मध्यममार्गमाश्रित्य स्वस्य समाजस्यच महान्तमुपकारं कर्तुं शक्नोति।

५– समाधिः– बौद्धग्रन्थेषु चित्तं स्थिरीकर्त्तुं ध्यानस्य नियमः कथितः। ध्यानस्य

चतस्रः अवस्थाः सन्ति, चतुर्थावस्थायां गत्वा साधकमनः परिशुद्धं भवति। समाधेः अयमेव लक्ष्यः कथ्यते।

६– प्रज्ञा–प्रज्ञा ज्ञानस्यापरं नामधेयम्। बुद्धः ज्ञानी आसीत् सः स्वसिद्धान्तद्वारा स्वज्ञानविषयकविचारान् प्रकटितवान्।



७६

# महावीरस्वामी

महावीरस्वामिनः जीवनविषये जैनधर्मस्यानेकेषु पुराणेषु लिखितमस्ति। महावीरपुराणेऽपितद्विषयेलिखितमस्ति।

तीर्थङ्करमहावीरस्वामिनो मातुर्नाम त्रिशलादेवी पितुश्च नाम सिद्धार्थं आसीत्, यो महाज्ञानी जैनधर्मस्य परमभक्तः महादानी चाभवत्। हरिवंशे नाथवंशे वा तस्यजन्माभूत्। महावीरस्य विवाहः यशोदादेव्या सह सम्पन्नोऽभवत्। महाराज्ञी त्रिशला, अतिगुणवती सुन्दरी जैनधर्मभक्ता पतिव्रता स्त्री आसीत्। स्वपूर्वजन्मसञ्चितपुण्यकर्मफलस्वरूपेणैव सा महावीरसदृशं महान्तं सज्जनं प्रादुर्भावयामास। एकस्यां रात्रौयदा देवी त्रिशला सुप्ता आसीत् तदा तया षोडशऽशुभलक्षणानि दृष्टानि। इमानि शुभलक्षणानि श्रीभगवतो महावीरस्यगर्भे आगमनस्य सूचकानिआसन्। आषाढशुक्लपक्षेषष्ठ्यां तिथौ उत्तराषाढनक्षत्रे स मातुः त्रिशलायाः गर्भे-आगतः। यावत्कालपर्यन्तं स मातुर्गर्भेऽवसत् तावत्कालपर्यन्तं स्वर्गाप्सरस आगत्य मातुः त्रिशलायाश्चित्तं बहुविधाः मनोरमाः कथाः श्रावयित्वा प्रसन्नमकुर्वन्। विक्रमसम्वत्सरात् ५२९ वर्षपूर्वंचैत्रशुक्लत्रयोदश्यां महावीरस्वामिनो जन्माभूत्। कनककान्तिशरीरं दीप्तिमन्मुखमण्डलं सुदृढं तस्यासीत्। तस्य वर्धमानं नाम कृतम्। स्वपूर्वसंस्कारवशात् स वर्धमानः सर्वशास्त्रज्ञो भूत्वा समुत्पन्नः। अतः स कस्यचिदपि गुरोः समीपेऽध्ययनार्थं न ययौ। यदा वर्धमानोऽष्टवर्षीयोऽभवत् तदा स गृहस्थानां द्वादशव्रतानि गृहीतवान्। वर्धमानः यदा कुमारः

आसीत्, तदा तदवस्थायामपि तस्मिन्नद्भुतः साहसः वीरता च आस्ताम्। एकदा-इन्द्रः स्वसभायां कुमारस्य वीरतां प्रशशंस, परं संगमो नाम एको देव न विश्वसिति स्म। सः कृष्णसर्पोभूत्वा आगत्य तस्मिन् वृक्षे संलग्नः यस्मिन् वर्धमान आरूढः। तत्रान्येऽपि राजकुमाराः अक्रीडन्। ते सर्पं वीक्ष्य रोदनमकुर्वन्। किन्तु कुमारः किञ्चिदपि भयं न प्राप। सः सर्पं गृहीत्वा तेन सम अक्रीडत्। कुमारस्यैवं साहसं निर्भयतां च वीक्ष्य सर्परूपधारी देवोऽतीव प्रसन्नोऽभूत्। कुमारं च स्तुत्वा स स्वर्गं गतः।

कुमारस्य ज्ञानकारणात् लोकाकर्षणानि तस्य चित्तं स्वामिमुखं कर्तुं समर्थानि न अभवन्। सः जले कमलवत् संसारात् निर्लिप्तोऽभवत्। अस्यां विरक्तदशायाञ्च सः त्रिंशद्वर्षपर्यन्तं राज्यमकरोत्। विवाहं प्रति तस्य चित्तं किञ्चिदप्याकृष्टं नासीत्। स बालब्रह्मचारीभूत्वैव पावन जीवन यापयामास। एकस्मिन् दिने तस्य मनसि तीव्र-वैराग्योदयो जातः। सोऽचिन्तयत् अहमस्मिन् संसारे शवर-राजपुत्र-पशुप्रभृतियोनिषु जन्म प्राप्य व्यर्थमेव-इयन्ति कष्टानि प्राप्तवान्। कुत्रापि मया-आनन्दो न लब्धः। मया-एतावन्ति दिनानि अस्मिन् मायाजाले निपत्य व्यर्थमेव यापितानि। पापवत् एत-द्गृहबन्धनं मया त्याज्यमेव। एवं विचार्य स्वामी महावीर इमं गृहवासं विहाय तपोवनं गन्तुं निश्चितवान्।

तस्य मनसि उदासीनता वृद्धिं गता ज्ञातिवर्गं प्रति च तस्य ममता ह्रासं गता।

देवा आगत्य स्वामिनोविचारान् समर्थितवन्तः। भगवान् महावीरस्तस्मिन्नेव समये राज्य पितरौ, परिवार, सर्वस्वञ्च परित्यज्य तपश्चर्याद्वारा मोक्षमाप्तुं वनं प्रति ययौ। अथ भगवान् महावीरः स्वहस्ताभ्यां स्वकूर्चादिकेशान्-उत्पाटितवान्। महावीरः मार्गशीर्षकृष्णपक्षे दशम्यां तिथौ बालवत् नग्नो भूत्वा मुनिः सम्पन्नः। इतश्चेतश्चात्म-चिन्तनं कुर्वन् स उज्जयिन्यां श्मसाने गतः। तत्रैवोपविश्य च तपसि लीनोऽभूत्। तेषु दिनेषूज्जयिन्यां एकादशः रुद्रस्थाणुः (शिवः) समुपस्थितोऽभूत्। तस्यसमीपे पार्वती आसीत्। उमामहेश्वरौ तपः परीक्षितुं विचार्य सर्पान्, वृश्चिकान्, पिशाचादींश्च प्रेषयित्वा महावीरस्वामिन विचलितं कर्तुं इच्छितवन्तौ। किन्तु महावीरस्तपसः विचलितो नाऽभूत्, । उज्जयिनीतः सः कौशाम्बीं गतः। सः तत्र वृषभ-सेननामकस्यैकस्यधर्मात्मनः श्रेष्ठिनः गृहे आहार कृतवान्। तदनन्तरं भ्रमन् सः जृम्भिकाग्रामाद्बहिर्भागे नद्यास्तीरं गतः। तत्रैव शालवृक्षस्याधोभागे सः स्वामी घातक-कर्माणि विनाश्य केवलं ज्ञानं प्राप्तवान्। तदनन्तरं तस्य दर्शनार्थमुपदेशं च गृहीतुं इन्द्रभूतिः, वायुभूतिः, अग्निभूतिश्चेति त्रयो विद्वांसः समागताः। ते च तस्य शिष्याः संजाताः। तस्य शिष्येषु मुनिः, आर्यिका, श्रावकः, श्राविका चाऽऽसीत्। तत्र इन्द्रभूतिः, मुख्य आसीत्, यस्य नवीननाम गौतमस्वामी अभूत्।

निरन्तरं त्रिंशद्वर्षपर्यन्तं भगवान् महावीरः पदातिरेव देशस्य विभिन्नेषु भागेषु विभ्रम्य स्वोपदेशद्वारा 'जैनधर्मं' प्रचारयामास । कार्त्तिककृष्णामावस्यायां प्रातःकाले विक्रमसंवत्सरात् ४६७ वर्षपूर्वं विहारस्य पावापुरीवने स मुक्तिमाप्तवान् । एतत् स्थानं जैनधर्मस्य पवित्र तीर्थमस्ति । एव द्विसप्ततिवर्षपरिमितमायुः प्राप्य महावीरस्वामी निर्वाणं प्राप्तवान् ।

जैनधर्मस्य चतुर्विंशतितीर्थङ्करेषु महावीरस्वामी अन्तिमस्तीर्थङ्कर आसीत् । जैनधर्मस्यान्तिमं लक्ष्यं मोक्षप्राप्तिर्विद्यते । जैनदर्शनस्य 'तत्त्वार्थसूत्र' नाम्नि ग्रन्थे "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गं" इति कथितम् ।

जैनदर्शनानुसारम् क्रोध-मान-माया-लोभाश्च मोक्षे बाधकाः वर्तन्ते, अत एषु विजयमाप्तुं संयमः परमावश्यकः । अयं संयमः सदाचारेण प्राप्तो भवति । अतः जैनधर्मे आचारशास्त्रस्य आचारदर्शनस्य वा मुख्यं स्थानं विद्यते ।

## सदाचारः

शरीरस्यात्मनश्च शुद्ध्यै राग-द्वेष-मोह-क्रोध-मान-माया-लोभादिदुर्व्यसन-परित्यागाय यद्-आचरणं क्रियते, तदेव 'सदाचारः संयमः -सम्यक्चारित्र्यं वा' कथ्यते । पापकर्मणां परित्यागः, पुण्यकर्मणाञ्चाचरणं सदाचारः अस्ति ।

हिंसाकरण-मिथ्याभाषण-चौरकर्मकरण-उद्दण्डता-क्रोधव्यवहारः, याचनं च, इमानि सर्वाणि पापकर्माणि सन्ति । एषां विपरीतानि कर्माणि सदाचाराः सन्ति । एभिश्चरित्रं निर्मीयते ।

### अहिंसा—

रागद्वेषादिव्यसनानामुत्पत्तिः हिंसा, तेषां दमनं अहिंसा कथ्यते । स्थूलसूक्ष्म-चराचरेषु जीवेषु कस्यापि जीवस्य मनसा वाण्या, शरीरेण च हिंसा नहि करणीया, न वा हिंसायाः कारणत्वेन भाव्यम्, न च हिंसकस्य समर्थनं कार्यम् । इयमेवाहिंसा ।

### सत्यम्—

असत्याभाषणमेव सत्यम् । मनसा, वचसा, वपुषा-क्रोध-लोभ-भयादिभिश्च परिहासेन वा, मिथ्यात्वस्यानाचरणम्, मिथ्यात्वानाचरणस्याप्रेरणम् अननुमोदनञ्चेति सत्यमेव सर्वम् ।

### अस्तेयम्—

पररक्षितस्य, पतितस्य, केनापि विस्मृतस्य, अदत्तस्य वा वस्तुनोग्रहणं, ग्रहीतुमन्यस्मै परामर्शप्रदानं समर्थनं वा सर्वंचौरकर्म, अस्माद् विमुखता अस्तेयम् अस्ति ।

अक्रोधः —

क्रोधव्यवहारस्याकरणमेव 'अक्रोधः' अस्ति। मनसा, वाचा, शरीरेण वा कस्यचिदपि जीवस्योपरि क्रोधस्याकरणं, कुर्वतश्च अननुमोदनं 'अक्रोधः' अस्ति।

अपरिग्रहः —

कस्यचिदपि मनुष्यस्य कस्यापि वस्तुनो ग्रहणं आवश्यकताया-अधिकस्य संग्रहणमपरिग्रहः।

इत्थं जैनधर्मानुयायिसमाजे आचारस्य नियमानां परिपालनं परमावश्यकं कथितमस्ति। ऐहिकजीवनस्याभ्युदयाय पारलौकिकजीवनस्य निःश्रेयससिद्ध्यै च आचारदर्शनं जैनमुनिसमाजे श्रेष्ठं मन्यते।

कस्यचिदपि धर्मप्रवणजैनस्य शास्त्रनिर्दिष्टनियमानां समुचितं निर्वाहकरणमनिवार्यं कथितमस्ति। अस्य धर्मस्य प्रधानोपदेशकः—तीर्थङ्करो महावीरस्वामी आसीत्।

---

७७

# श्रीशंकराचार्यः

क एतादृशो वैदिकधर्मानुमोदको यो न जानाति अद्वैतमतप्रस्थापकस्य शंकराचार्यस्य नाम। श्री शंकराचार्यस्य जन्म अष्टमशताब्देरुत्तरार्द्धे केरलप्रदेशे आलवेयिनाम्न्याः नद्यास्तटे स्थिते कालटीनामके ग्रामे जातम्। शंकराचार्यस्य पितुर्नाम शिवगुरुः मातुर्नाम च सुभद्रा इत्यासीत्। भगवतः शिवस्याराधनायाः फलस्वरूपमेव शिवगुरुसुभद्राभ्याम् शंकररूपं रत्नम् प्राप्तम्। यदा शिवगुरुसुभद्राभ्यां शिवस्य चन्द्रमौलिरूपासना विहिता तदा शिवगुरुणा स्वप्ने ब्राह्मणवेषधारिणः शिवस्य दर्शनं कृतम्, भगवता शिवेन च शिवगुरवे पुत्रप्राप्तिरूपो वरः प्रदत्तः। तद्वरदानमेव शंकराचार्यस्य जन्मना फलितम्। शंकराचार्यः शिवस्यावताररूप एव आसीत्। एतत्तस्यावताररूपस्यैव फलं यत् स्वायुषः सप्तमेऽब्दे आचार्यः श्रीशंकरः वेद-वेदान्त-वेदाङ्गपुराणादिषु पारङ्गतः सञ्जातः। जनन्या सुभद्रया शंकराचार्यस्य विवाहं कर्तुं प्रस्तावितम्, परमाचार्येण

श्रीशंकरेण सन्यासग्रहणाय स्वकीयाऽभिलाषा प्रकटिता। जनन्या तु संन्यासग्रहणाज्ञा न दत्ता। एतेनापि शंकराचार्यस्य संन्यासग्रहणविचारे शैथिल्यं नायातम्।

एकदाऽऽचार्यः श्रीशंकरः जनन्या सह नद्यां स्नानार्थं गतः। स्नानं कुर्वतः शंकरस्य चरण एकेन नक्रेण गृहीतम्। तदानीमेव शंकराचार्येण स्वमाता निवेदिता यत् यदि भवती मां सन्यासस्याज्ञां दास्यति तदाऽवश्यमेवायं नक्रः मम पादं त्यक्ष्यति। जनन्या विचारितं यत् तनयस्य शंकरस्य मरणात् संन्यासग्रहणमेव श्रेष्ठम्। सन्यासे जीवनरक्षा तु निश्चितैव। एतद् विचार्य माता श्रीशंकरः संन्यासग्रहणाय आज्ञप्तः। तस्मिन्नेव काले नक्रेण श्रीशंकरस्य चरणम् त्यक्तम्। तदैव मातुराज्ञया श्रीशंकराचार्यः सन्यासाश्रमं प्रविष्टवान्। एवं स्वायुषोऽष्टमे वर्षे शंकराचार्यः सन्यासी सञ्जातः। सन्यासग्रहणकाल एवाचार्यः जनन्याः अन्त्येष्टिकर्म कर्तुं प्रतिज्ञातवान्, यद्यपि कर्मैतत् सन्यासाश्रमविरुद्धम्। गृहत्यागावसरे श्रीशंकरः स्वप्ने कुलदेवेन भगवता श्रीकृष्णेनोक्तः यत् त्वम् मदीयाम् प्रतिमां कुत्रचिदन्यत्र स्थापय, नोचेत् मदीयम् मन्दिरम् नद्यां पतिष्यति। कुलदेवस्य श्रीकृष्णस्यैनामाज्ञामनुपाल्य शंकराचार्यः श्रीकृष्णप्रतिमामुच्चभूमिस्थाने प्रस्थापयामास।

परिव्रज्य शंकराचार्यः गुरुमन्विष्यमाणो नर्मदातटे पर्वतगुहायाम् गोविन्दाचार्यस्य दर्शनं गुहाछिद्रेण कृतवान्। शंकराचार्येण भृशं स्तुतः गोविन्दाचार्यः प्रसन्नो भूत्वा गुहाछिद्रमार्गेण स्वचरणम् बहिष्कृतवान्। तदा शंकराचार्येण— श्रीगोविन्दचरणम् सम्पूज्य तस्मादेवकालादारभ्य श्रीगोविन्दाचार्यो गुरुरूपेण स्वीकृतः। चातुर्मास्यानन्तरञ्च गुरुणा गोविन्दाचार्येण गुहायाः बहिरागत्य शंकराचार्यं उपदिष्टो यत्त्वयाऽवैदिकानाम् मतानां खण्डनं विधाय अद्वैतमतस्य प्रचारः कर्त्तव्यः, वेदान्तसूत्रस्य भाष्यञ्च कर्त्तव्यम्। एवम् गुरुणोपदिष्टः शंकराचार्य, गरुपदिष्टकर्मणि सर्वथा तत्परोऽभूत्। गुरोराज्ञानुसारम् शंकराचार्यः काश्याम् वैदिकधर्मस्य प्रचारमकरोत्। तत्रैव सनन्दनः शंकराचार्यस्य शिष्यः सञ्जातः। एकदा काश्यामेव शंकराचार्यः गंगास्नानं कृत्वा आगच्छन् मार्गे सम्मुखमेकं चाण्डालमवलोकितवान्। चाण्डालं च दृष्ट्वा घृणाभावमभिव्यक्तवान्। शंकराचार्यस्य घृणाभावं दृष्ट्वा चाण्डालेनोक्तम्, यदि त्वमात्मन्यपि भेदव्यवस्थां करोषि तदा त्वदीयमद्वैतसिद्धान्तप्रतिपादनम् व्यर्थमेव। शंकराचार्यश्चाण्डालस्य वचः श्रुत्वा आश्चर्यचकितः सञ्जातः। तदानीमेव शंकराचार्यः चाण्डालं प्रति क्षमायाचनां कृतवान्। चाण्डालश्च स्वयं शिवरूपेण प्रस्तुतोऽभूत्। एवञ्च साक्षात् शिवेन शंकराचार्यो वैदिकमतान् खण्डयितुमादिष्टः। आचार्योऽपि भगवतः शिवस्य आज्ञानुसारम् काश्याम् वसन्नेव ब्रह्मसूत्रभाष्यस्य उपनिषद्भाष्यस्य गीताभाष्यस्य च रचनाञ्चकार बौद्धादीनामवैदिकमतानाञ्च खण्डनं विदधे।

प्रयागे स्वीयनिरीश्वरवादिताजन्यपश्चात्तापेनार्धदग्धशरीरः कुमारिलः शंकरा-

चार्यम् मण्डनमिश्रेण सह शास्त्रार्थं कर्तुम् प्रेरितवान्। एवञ्च शंकराचार्यः मीमांसकेन मण्डनमिश्रेण सह शास्त्रार्थं कर्तुं माहिष्मतीं जगाम। यदा च शंकराचार्येण माहिष्मत्यां मीमांसकाचार्यस्य मण्डनमिश्रस्य निवासगृहः पृष्टस्तदैकया स्त्रियोक्तम् यत् शुकाङ्गना यत्र वेदानां स्वतःप्रमाणत्वं परतः प्रमाणत्वञ्च विचारयन्ति तदेव मण्डनमिश्रस्य गृहम्। तदनुसृत्यैवाचार्यः शंकरः मण्डनमिश्रमुपजगाम। तदानीमाचार्यो मण्डनः अावृतकपाटे-गृहे श्राद्धकर्मणि तत्पर आसीत्। परन्तत्रापि शंकराचार्यः योगबलेनप्रवेशमकरोत्। एवञ्च कर्मसिद्धान्तसमर्थकस्य मण्डनमिश्रस्य ज्ञानसिद्धान्तप्रतिपादकस्य चाचार्यशंकर-स्यशास्त्रार्थस्य समयः समायातः। द्वयोः शास्त्रार्थस्य निर्णेता कः स्यादित्येका समस्या समुत्पन्ना। आचार्यमण्डनमिश्रस्य सहधर्मिणी भारती च शास्त्रार्थस्य निर्णायिकारूपेण निश्चिता। भारत्याऽपि द्वयोः (शंकरमण्डनमिश्रयोः) गलके पुष्पमाला समर्पिता। घोषितञ्च यत् पराजितस्य पुष्पमाला शुष्कतामेष्यति। पराजितश्च मण्डनमिश्रः पूर्व-प्रतिज्ञानुसारम् शंकराचार्यम् संन्यासाय प्रार्थितवान्। परन्तदानीमेव मण्डनमिश्रस्यार्द्धा-ङ्गिन्या भारत्योद्घोषितम्—यदर्द्धाङ्गिनीम् मामविजित्य शंकराचार्यस्य अर्द्धोविजय एवातो मया सहाप्याचार्येण शास्त्रार्थो कर्तव्य इति निश्चिते कामशास्त्रविषयकान् प्रश्नान् उपस्थाप्य बालब्रह्मचारिणं शंकराचार्यम् निरुत्तरं कृतवती। शंकराचार्यश्चैक-मासस्यावधिं नीत्वा स्वकीयं स्थूलशरीरं शिष्यं पद्मपादाचार्यं समर्प्य योगबलेन तत्क्ष-णमेव मृतस्यामरुकस्य शरीरे प्रविष्टवान्। अमरुकश्च राजा जीवितोऽभूत्। एवञ्चा-चार्योऽमरुकशरीरं धारयन् कामशास्त्रस्य पारङ्गतिम् प्राप्तवान्। ततश्च एकमासा-नन्तरं स्वकीयं शरीरं धारयित्वा भारत्याः कामशास्त्रसम्बन्धिनः प्रश्नानुत्तीर्य ताम्-पराजितां कृतवान्। ततश्च पराजितो मण्डनः शंकराचार्यस्य शिष्यो भूत्वा सुरेश्वरा-चार्यस्याभिधानमवाप।

मीमांसकम् मण्डनम् विजित्याचार्यः स्वीयमतप्रस्थापनाय मैसूरप्रान्ते शृङ्गे-रिमठम्, समुद्रतटवर्त्तिन्यां जगन्नाथपुर्यां गोवर्धनमठम्, द्वारिकापुर्याम् शारदामठम्, बदरिकाश्रमे च ज्योतिर्मठं प्रस्थापितवान्।

अद्वैतमतप्रस्थापकेन शंकराचार्येण भाष्यग्रन्थानाम्, स्तोत्रग्रन्थानाम्, प्रकरण-ग्रन्थानाम् तन्त्रग्रन्थानाञ्च रचना विहिता। एतेषु सर्वेष्वपि ग्रन्थेषु आचार्यस्य भाष्य-ग्रन्थाः सर्वाधिकप्रमाणीभूताः, तेष्वपि ब्रह्मसूत्रस्योपनिषदाञ्च भाष्यग्रन्थाः अद्वैतसि-द्धान्तप्रतिपादनविचारेण शिरोभूताः। केवलाद्वैतसिद्धान्तप्रतिपादकस्याचार्यशङ्करस्य महनीयता समग्रस्यापि विश्वस्य दार्शनिकैरङ्गीकृता, इति निर्विवादमेव। शंकराचार्य-पूर्ववर्त्तिन्यपि भारतीयसाहित्ये अद्वैतसिद्धान्तस्य विचाराः प्राप्यन्ते, इतितु सुनिश्चितम्, परन्तत्रापि सिद्धान्तरूपेणाद्वैतस्य प्रतिपादनं न वर्तते। शंकराचार्येणाद्वैतमतम् प्रति-पादयता मायावादसिद्धान्तस्यावतारणं कृतम्। मायावादसिद्धान्तानुसारं जगतः सत्ता

मायिकी । परम् मायिकोऽपि संसारः शशशृङ्गवन्मिथ्या न वर्तते । यदा मायायाः सत्ता सदसद्विलक्षणत्वादनिर्वचनीया तदा मायिकस्य जगतोऽपि सत्ता मिथ्या कथं स्यात् । अतएव शंकराचार्येण पारमार्थिक-व्यावहारिक-प्रातिभासिकरूपेण सत्तात्रयी स्वीकृता । पारमार्थिकसत्ता ब्रह्मणः, व्यावहारिकसत्ता जगतः प्रातिभासिकसत्ता च शुक्तयध्यस्तरजतादीनां पदार्थानाम् प्रतिपादिता ।

शाङ्करमतेऽविद्यावशादेव जना आत्मस्वरूपम् विज्ञातुमसमर्थाः । येषामविद्यानिवृत्तिः सञ्जायते, ते आत्मस्वरूपम् विज्ञाय मुक्तताम् प्राप्नुवन्ति । शाङ्करवेदान्ते वस्तुतस्तु परमात्मबोधरूपामुक्तिरेकैव, परं स्थितिवशाज्जीवन्मुक्तिविदेहमुक्तिरूपेण मुक्ते रूपद्वयम् । प्रारब्धकर्मणां भोगकाले अविद्यानिवृत्तौ सत्यां या स्थितिरनुभूयते सा जीवन्मुक्तिः स्थितिः । यदा चाविद्यानिवृत्तौ सत्याम् प्रारब्धकर्मणाम् भोगः समाप्तिं याति तदा जीवो जन्मबन्धनान्मुक्तो भवति । मुक्तश्च जीवः ब्रह्मस्वरूपतामाप्नोति—"जीवो ब्रह्मैव नापरः ।" एषैव विदेहमुक्तिस्थितिः ।

एवमाचार्यः श्रीशंकरः न केवलम् भारतीयदर्शनस्यापितु विश्वस्यापि दार्शनिकानां सम्राट् वर्तते । काण्टप्रभृतिजर्मनीयानाम् दार्शनिकानामन्येषाञ्च विदेशीयानां दार्शनिकाः विचाराः अद्वैतिनः शंकराचार्यस्य दार्शनिकविचारेण निश्चितमेव प्रभाविताः सन्ति । मैक्समूलरादिभिर्बहुभिरपि वैदेशिकैः शाङ्करदर्शनस्य महत्त्वम् निःसंकोचमेव स्वीकृतम् । मायावादसिद्धान्तस्य स्थापनया आचार्येण जगतो या व्यावहारिकी सत्ता ब्रह्मणश्च पारमार्थिकी सत्ता प्रतिपादिता सा विश्वस्यापि दर्शनक्षेत्रे शाङ्करदर्शनस्यानुपमं महत्त्वम् स्थापयति ।

———

४८

## विवेकानन्दः

वर्तमानयुगस्य दार्शनिकेषु विवेकानन्दस्य नाम शिरोधार्यं वर्तते । महापुरुषोऽयम् ईसवीये १८६३ वर्षे धरामिमामलंकरोत् स्वजन्मना । राम-कृष्णपरमहंसस्य शिष्योऽपि अयं स्वविचारदृष्ट्या परमहंसाद् किञ्चिद् भिन्नोऽप्यासीत् । विवेकानन्दस्तु आध्यात्मिकविकासातिरिक्तं भारतवर्षस्य उन्नत्यै अपि प्रयत्नपर आसीत् । विवेकानन्देन

भारतीयसंस्कृतेर्विचारप्रचारो विदेशेऽपि कृतः । ईसवीये १८६३ वर्षे विवेकानन्दो यदाऽमेरिकादेशस्यशिकागो नामके नगरे धर्मसम्मेलने भागं गृहीतुं गतस्तदा पूर्वन्तु तत्रत्यैर्जनैरस्य कृतेऽवसर एव न प्रदत्तः किञ्चिद् वक्तुम् । परं यदायमाज्ञप्तो भारतीयधर्ममाश्रित्य किञ्चिदुवाच तदा तत्रत्या विदेशीयाः नितान्तं मुग्धास्तद्भक्ताश्च सञ्जाताः । एवमनेन दार्शनिकेन भारतवर्षस्य प्रतिष्ठा विदेशेष्वपि प्रस्थापिता । भारतवर्षस्य दुर्भाग्यात् १९०२ वर्षे अल्पावस्थायामेवायं महापुरुषो जगदिदं विरहितवान् ।

मूलतस्तु विवेकानन्दो वेदान्तभक्त एवासीत् परं विवेकानन्दप्रवर्तितस्य वेदान्तस्य प्रधानविशेषता व्यावहारिकताऽऽसीत् । अतएव तेनोक्तम्—

If it is absolutely impracticable no theory is of any value whatever, except as intellectual gymnastics.

विवेकानन्दस्य दार्शनिकसिद्धान्तस्यैतद्वैशिष्ट्यमासीद् यत् सः साध्येन सह साधनस्यापि महत्त्वमस्वीकरोत् । विवेकानन्दस्य दार्शनिकदृष्टिरद्वैतवादपरायणैवासीत । विवेकानन्दस्याद्वैतदृष्ट्यनुसारं सर्वमपि परमात्ममयमासीत् । एवञ्चैनां दृष्टिमनुसृत्य विभिन्नवस्तुषु, पुरुषेषु, स्त्रीषु, पशुषु वा कश्चिद् भेदो नास्ति । एनामेवाभेददृष्टिमाश्रित्य विवेकानन्दो मांसभक्षणस्यापि निषेधमकरोत् । अत एवोक्तं विवेकानन्देन—

The Vedanta entirely denies such ideas as that animals are separate from man and that they were made and created by God to be used for our food.

विवेकानन्दस्य दार्शनिकविचारानुसारमेकमेव ब्रह्म जगति अनेकरूपेषु अवलोक्यते । जगतो विविधत्वविषये विवेकानन्दस्येयं दृष्टिर्यत् सः नामरूपसाहाय्येन अज्ञाननिर्मिते जगत्येव पत्न्यादीन् मनोगतांश्च भेदानपश्यत् । यदा च नामरूपात्मकाज्ञानस्य निवृत्तिः सञ्जायते तदा सर्वत्रैवासीमपरमात्मनो बोधो भवति । विवेकानन्देन दार्शनिकभाषया जगदध्यारोपोऽपि उदीरितः । माया च विवेकानन्देन शंकराचार्यमिवानिर्वचनीयैवोक्ता । परमत्रैवेदमपि वक्तव्यं यद् विवेकानन्दो जगतो व्याख्यानार्थं मायाया अनुपयोगित्वमनौचित्यञ्चाविचारयत् । अतएव रोम्यारोलां महोदयेन विवेकानन्दस्य दर्शनं विवेचयतोक्तम्—

"It is not, said Vivekananda, a theory for the explanation of the world."

एतदतिरिक्तञ्च विवेकानन्देन मायाया मिथ्यात्वार्थं नहि गृहीतः। विवेकानन्दस्तु निःसङ्कोचं जगतो व्यावहारिकसत्यतां प्रतिपादितवान्। एवञ्च वैशिष्ट्येन विवेकानन्दस्य दर्शनं शाङ्करदर्शनेन प्रभावितमासीत्।

---

७९

## दयानन्दसरस्वती

आर्यसमाजनाम्न्याः लोकहितैषिण्याः परिषदः प्रस्थापकः, आर्यधर्मस्य प्रचारकः, मूर्तिपूजाविचारस्य विरोधको भारतीयसंस्कृतिसमुपासकश्च स्वामिदयानन्दः सौराष्ट्रे काठियावाडप्रदेशे टङ्कारानामनगरे विप्रवंशोद्भवस्य आशुतोषोपासकस्य श्रीकर्षणस्य पत्न्याः रुक्मिण्याः कुक्षिम् १८२२ ईसवीयवत्सरे भाद्रपदे मासे गुरुवासरे मूलनक्षत्रे स्वजन्मनाऽलंकरोत्। शिशोरस्य जन्मनक्षत्रं जनकस्य शिवार्चनदृष्टिञ्चाश्रित्यास्याभिधानम् मूलशंकर इति निर्धारितं कर्मकाण्डविद्याविचक्षणैर्विपश्चिद्वर्यैर्ज्योतिर्विद्याविशारदैः। शिवपूजापरायणोऽपि मूलशंकरः कथ मूर्तिपूजाविरोधकः सञ्जात इति स्वामिनः स्वकीया मौलिकी दृष्टिरेवात्र कारणम्। सा चेत्थम्—यदाऽयं त्रयोदशवर्षीय आसीत् तदाऽस्य जनकेन श्रीकर्षणेन भूतभावनस्य पतितपावनस्य चन्द्रचूडस्यानुग्रहार्थं शिवत्रयोदशीव्रतं धारयितुमादिष्टोऽयम् मानवमणिनिदर्शनो मूलशंकरः। यदा चाऽयं निशीथे शिवलिङ्गस्योपरि विचरमाणाम् मूषिकामेकामपश्यत तदाऽस्य चेतसि प्रतिमावर्तिनः शिवस्य परमशक्तित्वविषये संशयः समजायत। अयमचिन्तयत् यद् योऽयं मूषिकाया एवात्मानं रक्षितुमसमर्थः स कीदृशः शिवः कथञ्चास्य लोकरक्षकता सिध्यति। एवं च तस्मादेव कालादारभ्य अयं परमात्मनः शिवस्य साक्षात्काराय प्रयत्नपरः समजायत। अपरञ्च भगिन्याः पितृव्यस्य च दिवङ्गतिरस्य चेतसि विरक्तिभावनामुद्दामाञ्चकार। अतश्चायं जिज्ञासुर्मुमुक्षुः स्थानात् स्थानान्तरं परिभ्रमन् स्वज्ञानतृप्त्यर्थं प्रयतितवान् परं न कुत्रचिदवाप शान्तिशीतलज्ञानरसबिन्दून्। परन्ततः गुरुवरं पूर्णानन्दमवाप्य तस्मात् सन्यासदीक्षामवाप। तत आरभ्य एवायं महापुरुषो दयानन्दाभिख्या समलङ्कृतः। धन्याऽस्य विद्यातपोभक्तिर्यदयं संन्यासग्रहणानन्तरमपि विद्याध्ययनस्य कृतेऽति शयेन साकाङ्क्ष आसीत्। स्वाकांक्षानुरूपमनेन मथुराया विरजानन्द-

नामा गुरुः प्राप्तः, यस्मादयं निखिलशास्त्रमुखभूतं व्याकरणशास्त्रं वेदादिविविधशास्त्रतत्त्वञ्चाधिगतवान् । ततश्चायं गुरुभक्तो विद्याविनयसम्पन्नः परं वित्तेन हीनो मनीषी गुरुदक्षिणानिमित्तेन सपत्रपुष्पान् लवङ्गान् स्वगुरवे विरजानन्दाय समर्पयत् । आदर्शगुरुश्च विरजानन्दोऽन्तेवासिनमेनं स्पष्टमुक्तवान् यन्नाऽहं सुवर्णमयी दक्षिणामभिलषामि, इयमेव त्वदीया महती दक्षिणा यत् त्वया वैदिकधर्मस्य प्रचारः कर्तव्यः सामाजिककुरीतिनाञ्च खण्डनं कर्तव्यम् । गुरुपदेशाच्चायं महर्षिः सर्वव्यापकस्य परमात्मनः सत्तायाः प्रचारमकरोत्, मूर्तिपूजायाः खण्डनमकार्षीत् स्त्रीणाञ्चोन्नत्यै-प्रायतत्, विधवाविवाहमसमर्थयत्, वर्णव्यवस्थां निराकृतवान, यवनानां शुद्धिक्रियां प्रारभत्, हिन्दुधर्ममनुमोदयामास, स्त्रीशिक्षां प्रसारितवान्, हिन्दुधर्मसंस्कारान् महत्त्वमदात्, आश्रमव्यवस्थामप्रचारयत्, शूद्रानुत्थापयत्, अस्पृश्यता दूरीकर्तुं सर्वथा प्रायतत् देशोद्धाराय चानेकविधानि यत्नान्यकरोत् ।

दयानन्दविरचितेषु ग्रन्थेषु ऋग्वेदभाष्यभूमिका-सत्यार्थप्रकाशश्चेति ग्रन्थद्वयमतिशयेनप्रख्यातम् । सत्यार्थप्रकाशस्तु स्वामिनः सर्वथा मौलिक एव चतुर्दशसमुल्लासविशिष्टो ग्रन्थः । तत्र प्रथम उल्लासे ईश्वरस्योंकारादिनाम्नां व्याख्या, द्वितीये सन्ततिशिक्षावर्णनम्, तृतीये ब्रह्मचर्य-पठनपाठनादिव्यवस्थाविवेचनम्, चतुर्थे विवाहगृहस्थाश्रमादिविचारः, पञ्चमे वानप्रस्थसंन्यासाश्रमादिवर्णनम्, षष्ठे राजधर्मः, सप्तमे वेदेश्वरविषयकविवेचनम्, अष्टमे जगदुत्पत्तिस्थितिप्रलयविवेचनम्, नवमे विद्याऽविद्याबन्धमोक्षादि विवेचनम्, दशमे आचारानाचार-भक्ष्याभक्ष्यादि विवेचनम्, एकादशे आर्यावर्तीयमतमतान्तरखण्डनमण्डनादिविवेचनम्, द्वादशे चार्वाकबौद्ध-जैनमतादिविवेचनम्, त्रयोदशे ईसाईमतनिरूपणम्, चतुर्दशे यवनमतसमीक्षणम्, आर्याणाञ्च सनातनस्य वेदविहितस्य मतस्य निरूपणं कृतं वर्तते ।

दयानन्दस्वामिनो दार्शनिकस्तु सिद्धान्तस्त्रैतवादः, यमाश्रित्येश्वरजीवप्रकृतीनामनादित्वं वर्णितम् ।

स्वामिनो जीवनलीलासमाप्तिकथाऽपि विलक्षणा । सा चेयं यदेकदायं महाभागो जोधपुरराज्ञा यशवन्तसिंहेनामन्त्रितस्तत्रागच्छत् । तस्य च नरेशस्य नन्हीजानेतिनाम्नी काचित् प्रियातिप्रिया वेश्या आसीत् । नरेशश्च तस्यामधिकमनुरक्त आसीत् । तदनुरक्तिवशाच्च नरेशो वेश्यायाः पर्यङ्किकां वोढुं आत्मानं समर्पितवान् । एतदवलोक्य महर्षिणा नरेशो निन्दितः । नरेशश्च लज्जितोऽभवत् । परमनेन नन्हीजानवेश्या पापपंकपर्याकुला सञ्जाता । एवञ्च सा महर्षेः हत्यायै षड्यन्त्रं रचितवती । तदनुसृत्य महर्षिदयानन्दस्य पाचको जगन्नाथाभिधः वेश्यया स्वामिने विषमिश्रितं भोजनं दातुमादिष्टः । पाचकेन च पापिना तथैव कृतम्, एवञ्च विषमिश्रितं भोजनं भुक्त्वा दयानन्दो दिवंगतिं प्राप । परं धन्या स्वामिनः सहृदयता कृपालुता च यत् विषदातारऽपि

जगन्नाथः स्वामिना पञ्चशतरूप्यकाणि दत्त्वा भारतवर्षाद् बहिर्गन्तुं प्रेरितः येन तस्य काचिदपि हानिर्न स्यात् । स्वामिनो विषय एकाऽन्यापि विषकथा श्रूयते, सा चेयं यत् एकदा केनचित् स्वामिनं सविषं ताम्बूलं प्रदत्तम् । स्वामिना चेदं ज्ञातं परं यौगिकक्रियाभिस्तेन विषप्रभावः समाप्तिं प्रापितः । तत्रत्येन तहसीलदारेण च स विषदाता कारागरे प्रेषितः । परमनेन महर्षिर्दयानन्दः रुष्टोऽभवत् न तु तुष्टः । महर्षेरसन्तोषकारणं यदा तहसीलदारोऽपृच्छत् तदा महर्षिरिदमेवोत्तरमदात् यदहं संसारे लोकानां बन्धनार्थं नायातोऽस्मि अपि तु मुक्त्यर्थम् । अनेन स्वामिनो विशालहृदयता सुस्पष्टैव ।

किमधिकम्, महर्षिदयानन्दस्य सहृदयभावना, उच्चमानववृत्तिः, ईश्वरास्था, वैज्ञानिकविचारपद्धतिः, विद्यैकरतिः, समाजसेवाभावः, औदार्यवृत्तिः सम्प्रदायराहित्यरीतिरिति सर्वं कस्यानुकरणीयं न विद्यते । परमिदं खेदकारिणी वार्ता यत् प्रायशोऽद्यतना आर्यसमाजसमुपासका वेदादिशास्त्रस्य मौलिकं विवेचनमकृत्वा परमतदूषणमेव स्वकीयं परममभिमतं मन्यन्ते । परमेश्वरस्तानेतादृशान् महानुभावान् सद्बुद्धिं दद्यादिति प्रार्थयामहे ।



८१

## पण्डितमदनमोहनमालवीयः

भारतीयसंस्कृतेः समुपासकस्य, हिन्दुधर्मैकजीवनस्य, राष्ट्रभावनयोतःप्रोतस्य, भगवत्याः भागीरथ्याः भक्तस्य गोब्राह्मणोपासकस्य च पण्डितमदनमोहनमालवीयस्य जन्म ईसवीये १८६१ वत्सरे प्रयागे ब्राह्मणानां चतुर्वेदिपरिवारे समजायत । अस्य पितुर्नाम वैजनाथः मातुश्च मूनादेव्यासीत् । अस्य पितामहः प्रेमधर आसीत् । मालवीयस्य पितरौ अन्ये च पारिवारिका वैष्णवधर्मानुयायिनः संस्कृतभक्ताश्चासन् । अत एव मालवीयोऽपि प्रतिदिनं श्रीमद्भागवतस्य भगवद्गीतायाश्च स्वाध्यायमकरोत् । पारिवारिकनिर्धनताकारणादस्याध्ययनकाले बहुविघ्नानि समायातानि । एकदा तु मालवीयस्य जननी अस्याध्ययननिमित्तं स्वकीयानि कङ्कणाभूषणानि अपि निक्षेपे धृतवती । एवंभूते काठिन्येऽपि मालवीयोऽध्ययनपरायण आसीत् । अस्य विवाह उत्तरप्रदेशस्य मिर्जापुरवासिनो नन्दरामस्य सुपुत्र्याः कुन्दनदेव्या सह सञ्जातः । विवाहा-

नम्बरं मालवीयः १८८९ वर्षे विधिशास्त्रे स्नातकोपाधिं लब्धवान् । ततश्च प्रयागोच्चन्यायालये १८९३ वर्षे वाक्कीलकार्यमारब्धवान् । परमस्मिन् कर्मणि स्वकीयां निष्ठां न दृष्ट्वा सः 'अभ्युदय'नामकस्य हिन्दीभाषायाः साप्ताहिकस्य सम्पादनमारब्ध । विविधसमाचारपत्राणां सम्पादनेऽस्य विशिष्टा रुचिरासीत् । एतस्मादेवाऽस्य 'हिन्दुस्ताननाम्नः हिन्दीभाषाया', 'इण्डियनयूनियनेत्यभिधस्य लं डरेत्यभिधस्य चाङ्ग्लभाषापत्रस्य सम्पादनमतिनैपुण्येन निष्पादयामास । किमधिकम्, अस्य सम्पादनकलाचातुरीमवलोक्य तदानीन्तनाः सामाजिकाः राजनीतिशास्त्र विशारदाः मुग्धाः सञ्जाताः ।

मदनमोहनमालवीयो भारतवर्षस्य महान् स्वातन्त्र्यसेनानी आसीत् । स्वातन्त्र्यार्थमयमनेकवार कारागार भुक्तवान् । प्रसिद्धासहयोगान्दोलने लवणसत्याग्रहे चानेन सहयोगं दत्वा आङ्ग्लशासकानां नीतीनां विरोधः कृतः । इदमस्य कार्यक्षमताया एव परिचय आसीत् यदसावनेकवारं कांग्रेससङ्घस्य प्रधानपदे निर्वाचितोऽभवत् ।

ईसवीये १९०६ वर्षे मालवीयेन 'हिन्दूमहासभानाम्न्याः सभायाः स्थापना कृता । अस्याः सभायाः स्थापकत्वेनापि मालवीयेन कदापि यवनानां विरोधो नहि कृतः । तेन तु राष्ट्रियभावनासहितस्यैव हिन्दुत्वस्य समर्थन कृतम् । हिन्दीभाषायाः समर्थनाय तेन सदैव प्रयसितं. परमुर्दूविरोधो नहि तेन कदाचिदपि कृतः ।

मालवीयस्य भारतीयसंस्कृतिसाधनासुफलं काशीविश्वविद्यालयो वर्तते । विश्वस्य प्रख्यातोऽयं विश्वविद्यालयः पण्डितमालवीयस्यैव, तपश्चर्यायाः प्रतिमानम् । अस्य शिलान्यास ईसवीये १९१६ वर्षे 'वायसराय-हार्डिङ्गद्वारा सम्पन्नः । 'प्रिंस आफ-वेल्प' द्वारा चास्य विश्वविद्यालयस्योद्घाटनं १९२१ वर्षे समजायत । अस्मिन् विश्वस्य सर्वेऽपि प्रमुखविषया अध्याप्यन्त इति सुविदितं सर्वेषाम् ।

अनेनैतत् सुस्पष्टं यन्मदनमोहनमालवीयो महान् राजनीतिज्ञः, देशसेवकः, शिक्षाप्रसारकः समाजसेवकश्चासीत् । समाजसेवाभावनामेवाश्रित्यासौ १९१४ वर्षेऽखिल भारतीयसेवासमितेरध्यक्षपदे निर्वाचितोऽभूत् । मालवीयस्य व्यक्तित्वस्य चैतद्वैशिष्ट्यमासीत् यत् सः महान् समन्वयकारक आसीत् । एषा तस्यसमन्वयवादितैव यत् सः वर्णाश्रमधर्मपरायणोऽपि देवालयेषु सर्वेषामेव प्रवेशमसमर्थयत् । परन्तथापि एतन्निःसंकोचमेववक्तव्य यत् सः ब्राह्मणातिरिक्त केनापि दत्त किमपि पेयं भोज्यम् वा नाङ्गीचकार । यैः स्वधर्म परित्यज्यान्यद्गृहीतं ये च सामाजिकैरपवित्रा इत्युदघोषितास्तेषां पावित्र्यम् मालवीयः सर्वजनतारकेन 'श्रीराम जय राम जय जय रामेति मन्त्रेण अखिललोकपवित्रकारिणा गाङ्गेन च वारिणा साधयामास । एवम् मालवीयस्य मनसो महता तस्य 'महामना' इति उपाधेरन्वर्थतां प्रतिपादयति । किं बहुना, मालवीयस्य सात्त्विकविचारपरम्परा, सत्यनिष्ठाभक्तिः, सहिष्णुताशक्तिः विनम्रतायामपि

निर्भीकता, हिन्दुत्वेऽपि राष्ट्रियभावना सनातनधर्मेऽपि धर्मनिरपेक्षता, राजनीतावपि आध्यात्मिकता तस्य विलक्षणं बहुमुखीञ्च प्रतिभांव्यनक्ति।

# महात्मागान्धी

नैतादृशः कोऽपि दृश्यतेऽधुना यो महात्मनो गान्धिनो नाम्नाऽपरिचितः। किमुत भारतीयाः, विदेशीया अपि अस्मै महात्मने श्रद्धाञ्जलि ददति, अस्य दिल्लीस्थसमाधौ पुष्पाणि अर्पयन्ति, महात्मना प्रचारितञ्च सकीर्तनं कुर्वन्ति। साम्प्रतं महात्मागान्धिनः स्मरणमवतारपुरुषाणां रामकृष्णबुद्धादीनामिव क्रियते, इति को न जानाति। अतो गान्धी वर्तमानयुगस्यावतार एवासीदिति कथने नाऽनुचित भ्रमः। ग्रामीणाः नागरिका: वा, शिक्षिता अशिक्षिताः वा, बालकाः वृद्धाः वा सर्वेऽपि महात्मन.आदर्शानां सर्वथा सम्मानं कुर्वन्ति। धन्येयं भारतभूस्तत्राऽपि च सौराष्ट्रप्रान्तस्य पोरबन्दराभिधम् पत्तनं यत्र पुण्यशालिनः श्रीकर्मचन्द्रस्य सौभाग्यसम्पन्नायाः पुतलीबाईनाम्न्याः पत्न्याः कुक्षौ जन्मगृहीतवानयम् मोहनदासः।

मोहनदासस्य महाविद्यालयीया शिक्षा राजकोटाख्ये नगरे सञ्जाता : तत्रैव प्रायम् विदेशं गन्तुमभिलषितवान्। एवञ्च विधिशास्त्रमध्येतुमसौ विदेश गतः। तत्र च विधिशास्त्रस्य अध्ययनम् विधाय 'बार–एट–ला' इत्युपाधिञ्च प्राप्य भारतवर्षमागतोऽत्र च वाक्कीलकार्येऽपि मोहनदासेन सत्यस्याश्रयो न त्यक्तः। स्वकीयां सत्यप्रियताञ्च जनान् पूर्वमेवाचीकथत्। एकदा स्वयं प्रयागन्यायालये स्वमतप्रस्थापनकालेऽतिशयेनधैर्यहीनः सञ्जातः। ततश्च वाक्कीलव्यवसाय त्यक्त्वा मोहनदासःकस्तूरबाभिधया स्वकीयया पत्न्या सहितोऽफ्रीकादेश गतः। तत्रत्यांश्च भारतीयानयं सत्याग्रहास्त्रेणामोचयत्। विंशतिवर्षपर्यन्तमयं तत्र न्यवसत्।

अफ्रीकातो भारतवर्षमागत्यैतेन महापुरुषेण आङ्ग्लाधिकारिणां रौलट-एक्टादीनाम् बहूनामपि विधानानां निराकरण कृतम्। अनेकवारञ्चायं कारावास गृहीतवान्। असहयोगान्दोलनकालेत्वयं कारावासेऽतिशयेन रुग्णः सञ्जातः। एवञ्च द्विवर्षानन्तरमेव कारावासान्मोचितः।

भारतवर्षे ह्यूमस्थापिताया कांग्रेसनाम्न्याः सभायाः सेवां कर्तुं सर्वथा प्रयत्नमकरोदयम् महात्मा। एवञ्चास्पृश्यतानिवारणार्थम् विदेशिवस्त्राणां परित्यागार्थम् स्वदेशिवस्त्राणाञ्च व्यवहारार्थम् भारतवर्षस्य च वास्तविकं स्वातन्त्र्यमधिगन्तुमयमनेकविधान् सत्प्रयत्नानकरोत्। हरिजनानामुद्धारं कर्तुं तान् हिन्दुमन्दिरेषु स्वशक्त्या प्रावेशयत्, विदेशागतवस्त्राणाञ्च परित्यागं कर्तुं खादीवस्त्राणाञ्च प्रचारमकरोत्। एतादृशं कार्यंजातञ्च सम्पादयितुम् महात्मना साबरमतीनामकस्याश्रमस्य स्थापना कृता।

ईसवीये १९४२ वर्षे 'भारतं त्यजत' इत्यान्दोलनकर्ता चायं कारावासे बद्धः। पुनश्च वंगदेशस्य 'नोआखाली' प्रदेशेऽयम् महात्मा पशुवत्ताडितो यवनैः। परन्तत्राप्ययं पदयात्रां कुर्वन् ग्रामे-ग्रामे स्वातन्त्र्यस्य हिन्दु-मुस्लिमैक्यस्य च प्रचारं कृतवान्।

स्वातन्त्र्यप्राप्तिकाले च यदा पञ्चनदवङ्गलादि प्रदेशेष्वशान्तिः सञ्जाता तदा महात्मागान्धी शान्तिं स्थापितवान्। एवञ्च सामाजिकविचारधारया, राजनैतिकविचारधारया मानविकविचारधारया चायम् महात्माऽतिशयेन महानासीत्।

महात्माचायमत्यन्तमुदारोऽहिंसासिद्धान्तोपासकः, अजदुग्धसेविता, धार्मिकश्चासीत्। धार्मिकयैव वृत्या हरिकीर्तनकारो गीतापाठभक्तश्चासीत्। सर्वदैव च भगवत्प्रार्थनापर आसीत्। किमधिकम् दिल्लीनगरस्थे विरलामन्दिरे परमात्मानम प्रार्थयन्नेवाऽसौ महात्मा ईसवीये १९४८ वर्षे जनवरीमासस्य त्रिंशत्तमे दिवसे पञ्चवादनकाले हतः। हत्या चास्य नाथूरामगोड्सेनामकेन मनुष्यजातेः कलंकेन रिवाल्वरास्त्रेण कृता। तदानीम् महात्मनोऽस्य निधनेन न केवलम् भारतीया एवापि तु सर्वेषामपि देशानाम् वासिनः शोकाकुला सञ्जाताः। महात्मनो गान्धिनः स्थानस्य पूर्तिरसम्भवैव सर्वथा।

नो जाने केयं गतिर्दैवस्य बहवोऽपि यन्महापुरुषा अकालमृत्युनाग्रसिताः यथा-ईसामसीहः शूलमारोपितः, सुकरातो विषं दत्त्वा हतः, महात्माचायमीश्वरस्य प्रार्थनां कुर्वन् हतः। परं शरीरेण मृतोऽपि महात्मागान्धी अहिंसादिसिद्धान्तैः स्वकीयेन मानवतापूर्णव्यवहारेण देशसेवकरूपेण चामरत्वं प्राप्त इति सर्वेऽपि स्वीकुर्वन्ति। अतएव महात्मनः प्रशस्तिसीमा न केवलं भारतवर्षं एवापितु समस्तेऽपि विश्वेऽस्य यशः शरीरमभिराजते।

---

८२

# पण्डितजवाहरलालनेहरूः

पण्डितजवाहरलालनेहरूः विश्वस्य कतिपयेषु महापुरुषेषु एकोऽप्रतिमश्चासीत्। शरीरेणासन्नपि जवाहरलालोऽस्माकं चेतःसु सर्वदैव विराजते। जवाहरलालस्य यशःशरीरम् विश्वव्यापीति को नहि स्वीकरोति। अद्भुतमेवासीज्जवाहरलालस्य व्यक्तित्वम्, यस्मिन् काश्मीरप्रदेशस्य सौन्दर्येण सह मानविकचारित्र्यस्योदात्तता, नम्रतया सह स्वविचारस्य आत्मविश्वासस्य च दृढता, देशसेवया आत्मबलिदानभावनया च सह समृद्धपरिवारस्य वैलासिकवृत्तिश्च एकत्रैव समन्विता आसीत्। विश्वे देशविदेशेभ्यो जवाहरलालेन यत् सम्मानम् प्राप्तं तत् कदाचिदेव केनचित् लब्धं स्यात्।

स्वतन्त्रभारतस्य प्रथमः प्रधानमन्त्री भारतराष्ट्रस्य महान् सेनानायको जवाहरलालः ईसवीयस्य १८८९ वर्षस्य नवम्बरमासस्य चतुर्दशतारिकायाम् स्वजन्मना प्रयागमलञ्चकारे। अस्य महापुरुषस्य मातुर्नाम स्वरूपरानी पितुश्च नाम मोतीलालनेहरूः आसीत्। जवाहरलालस्य पितामहो गङ्गाधरनेहरूः आसीत्, यः दिल्लीनगर्याः कोटपालो नियुक्त आसीत्। गङ्गाधरनेहरूमहाभागस्य पिता दिल्लीस्थेन केनचित् शासकेन अत्यन्त सम्मानित आसीत्। जवाहरलालस्य पितुर्मोतीलालस्य जन्म आगरायाम् ईसवीये १८६१ वर्षेऽजायत। आगरातो मोतीलालः प्रयागं जगाम, तत्र च उच्चन्यायालये वाक्कीलकार्यमकरोत्। तत्रैव जवाहरलालोऽजायत।

ईसवीये १९०५ वर्षे पण्डितः श्रीजवाहरलालः इङ्गलैण्डदेशस्य 'हैरो' नामके विद्यालये प्रवेशं लब्धवान्। 'हैरो' विद्यालयस्य अध्यापका जवाहरलालस्य बहुविधप्रगतिं दृष्ट्वा चकिता आसन्। तत्रत्यैरध्यापकैर्मोतीलालनेहरूं प्रति लिखितम् यद् भवदीयः पुत्रः कक्षायां विलक्षणाम् प्रगतिं करोति। 'हैरो' नामके विद्यालयेऽध्ययनं कृत्वा जवाहरलालः कैम्ब्रिजविश्वविद्यालयस्य 'ट्रिनिटी' विद्यालये अध्ययनं कृतवान्। अत्रैव विधिविषयस्य 'बार-एट-ला' इत्युपाधिम् प्राप्य ईसवीये १९१२ वर्षे भारतवर्षं निवृत्तः। ईसवीये १९१६ वर्षे च नेहरूमहोदयस्य विवाहः कमलया सह भारतीयपद्धत्या सम्पन्नः। तस्यामेव वर्तमानप्रधानमन्त्रिणः श्रीमत्या इन्दिरागान्धिमहोदयाया जन्म अजायत।

राष्ट्रियभावनाया बीजानि जवाहरलाले बाल्यकालादेव पुष्टान्यासन्। अतएव, यदाऽयम् महापुरुष इङ्गलैण्डतः 'बार-एट-ला' उपाधिम् प्राप्य भारतमायातस्तदाऽस्य मनः प्रयागे उच्चन्यायालयस्य वाक्कीलकार्ये सन्तोषं न लब्धवान्। तदानीमेव भारतवर्षे आङ्गलानाम् व्यवहारेण नितान्तमसन्तुष्टोऽभवदयं राष्ट्रसैनिकः। उदाहरणार्थम्,

ईसवीये १९१९ वर्षे 'रौलट एक्ट' इत्यभिधेन आङ्गलानाम् विधानेन 'जलियां वाला बाग' इतिस्थानेघटितेन भीषण घटनाजालेन च जवाहरलालस्य चित्तमत्यन्त क्षुब्धमभवत्। एवञ्च महात्मनः श्री गान्धिनः आदेशेन जवाहरलालः स्वतन्त्रतासङ्ग्रामस्य महान् सेनानी सञ्जातः। राष्ट्रसेवी जवाहरलालः अनेकेषु असहयोगान्दोलनेषु बन्दीकृतः। ईसवीये १९२९ वर्षे वीरजवाहरः लाहौराधिवेशनस्यावसरे कांग्रेसस्याध्यक्ष-पदमलङ्कृतवान्। जवाहरलालस्य नेतृत्वे स्वतन्त्रताया आन्दोलनमतिशयेन ज्वलन्त रूपं गृहीतवान्। ईसवीय १९४२ वर्षे 'भारतत्यजत' इत्यान्दोलनस्यावसरे जवाहरलालोऽन्यैरनेकैः राष्ट्रसेवकैः सह बन्दीकृतः। ईसवीये १९४५ वर्षे द्वितीयमहायुद्धस्य समाप्त्यवसरे यदा जवाहरलालः बन्दीगृहान्मुक्तस्तदाऽऽङ्गलैः शासकैः सह भारतस्य स्वातन्त्र्यस्य विषयेऽनेकवारम् विचारविमर्शः सञ्जातः। तत्परिणामत एव ईसवीये १९४७ वर्षे भारतवर्षः स्वतन्त्रः सञ्जातः।

पण्डित 'जवाहरलाल नेहरूः' स्वतन्त्र भारतस्य प्रथमः प्रधानमन्त्र्यभवत्। शरीरत्यागपर्यन्तञ्चासौ महापुरुषः प्रधानमन्त्रिरूपेणैव देशस्य सेवा कृतवान्। प्रधान-मन्त्रिणः श्रीजवाहरलालस्य धर्मनिरपेक्षराज्यस्य नीतिः, समाजवादस्य स्थापना, विदेश सम्बन्धिनी नीतिः, स्वावलम्बता नीतिः, वैज्ञानिक विकासस्य नीतिः, कृषि विकासस्य औद्योगिक विकासस्य च योजना, पञ्चशील योजना, इत्यादीनि प्रमुख कार्याणि सन्ति यानि सम्पाद्य राष्ट्रनायकोऽयममरत्व गतः।

जवाहरलालस्य विश्वबन्धुत्व भावनाऽतीव दृढाऽऽसीत्। नायम् महापुरुषोऽजानत यद् बान्धवा अपि स्वार्थवशाद् घोरशत्रवो जायन्ते। अस्यैवैतत् फलं अभवत् यद् भारतस्य बन्धून' चीनदेशेन प्रवञ्चितोऽयम् महापुरुषः ईसवीये १९६२ वर्षे, यदा चीन देशेनाक्रान्तोऽस्माकं देशः। अनेनैवञ्च कांग्रेसस्यान्तरिक भेदेन जवाहरलालोऽत्यधिकः खिन्नोऽभवत्। ईसवीयस्य १९६४ वर्षस्य मईमासे महानयं राष्ट्रनायक अस्मान् परित्यज्य परलोकं गतः। येनाखिलोऽपि विश्वः दुस्तरशोकसागरे निमग्नोऽभवत्। जवाहरलालस्याभावस्य पूर्तिनितरामसम्भवैव।

जवाहरलालः केवलं राजनैतिक एव नासीदपितु महान् लेखकोऽपि। तेन लिखितानि मेरी कहानी, भारत की कहानी, विश्व इतिहास की झलक, Discovery of India, इत्यादीनि अनेकानि ग्रन्थरत्नानि सन्ति। इत्थञ्च जवाहरलालस्य प्रतिभा बहुविधाऽद्वितीया चाऽऽसीत्। जवाहरलालस्य चरित्रस्योदात्तता, आदर्शरूपं मानवप्रेम, दृढ आत्मविश्वासः, राजनीतिचातुरी, देशभक्तिभावना, सौन्दर्यप्रियता च एतादृशाः गुणा आसन येऽन्यत्रालभ्या एव। अतएवायम् महापुरुषो शरीरेण मृतोऽपि अमृतरूपेण भारतीयानां चेतःसु संविराजते।

---

८२

# लालबहादुरशास्त्री

लालबहादुरशास्त्री स्वतन्त्र भारतस्य द्वितीयः प्रधानमन्त्री आसीत्। शास्त्रिणो लालबहादुर शीलस्य या उदात्तता, स्वभावस्य या सरलता, राजनीतेर्या चतुरता, वीरत्वस्य या भावना, स्वावलम्बनस्य या वृत्तिः, राष्ट्रस्य या भक्तिः श्रमस्य च या शक्तिरासीत् साऽपूर्वैव। एतदपि कथनं नानुचितं यत् अस्मिन् महापुरुषे विनम्रतया सह कठोरता, सहिष्णुतया सह शत्रुनीतेर्निराकरण शक्तिः, सौजन्येन च सह कूटराजनीतिबुद्धिरप्यासीत्। भारतरत्नोपाधिना सम्मानितोऽयं शास्त्रिमहाभागः वस्तुतः एव भारतरत्नस्वरूप आसीत्।

महापुरुषस्यास्य जन्म ईसवीये १९०४ वर्षे अक्तूबरमासस्य द्वितीयतारिकायां वाराणसीसमीपे मुगलसरायनामकस्थाने कायस्थ कुले जातः। अस्य महापुरुषस्य मातुर्नाम राजदुलारी पितुश्च शारदाप्रसाद आसीत्। यदाऽयम् महापुरुषोऽष्टादशमासानामेवासीत् तदैवाऽस्य पिता दिवङ्गतिम् प्राप। ततश्च लालबहादुरस्य पालनपोषणं वाराणसी समीपे रामनगर सम्पन्नमभूत्। लालबहादुरेण वाराणस्याः हरिश्चन्द्र विद्यालयेऽध्ययनं कुर्वता मैट्रिकनाम्नी परीक्षा समुत्तीरिता। शास्त्रिणः श्रीलालबहादुरस्य छात्रावस्था निर्धनता कारणादत्यन्तं कष्टयुक्ताऽऽसीत्। धनाभावकारणाच्च लालबहादुरो नाविकाय पणदानेऽसमर्थः काश्याम् विद्याऽध्ययनार्थं गङ्गां तीर्त्वैव अयासीत्। धन्यमिदमध्ययनतपोऽस्य महात्मनः। तपस्विनः चाऽनेन महात्मना श्रीगान्धिना स्थापिते काशीविद्यापीठे चाध्ययनं कुर्वता शास्त्रि-परीक्षा समुत्तीरिता। तत एव लालबहादुरः शास्त्रीति उपाधिना सुशोभितोऽभूत्। ईसवीये १९२८ वर्षे च शास्त्रिणो विवाहसंस्कारः ललितादेव्या सह सम्पन्नः। जवाहरलालमिव शास्त्रिणोऽपि हृदि देशप्रेम्ण उत्कृष्ट भावनाऽऽसीत्। महात्मनः श्रीगान्धिनः देशस्वातन्त्र्यसम्बन्धि भाषणं श्रुत्वा स्वातन्त्र्यान्दोलने सम्मिलितोऽभूत्। ततश्चायं 'भारतं त्यजत' इत्यस्य असहयोगान्दोलनस्यचावसरे बन्दीकृतः।

भारते स्वतन्त्रे सति लालबहादुर उत्तरप्रदेश विधानसभायाः सभासचिवपदमलङ्कृतवान्। पुनश्चैकवर्षानन्तरमेवायम् महान् शासकः गृहमन्त्रिपदे प्रतिष्ठितः। ततश्चास्य श्रमशीलतां शासनकुशलतां चावलोक्यायम् भारतसुपुत्रःन रत्नमन्विष्यति मृग्यते हि तत्' इत्यनुसारं पण्डित-जवाहरलालेन केन्द्रीय मन्त्रिपदेन सम्मानितः। यदा चाऽयम् वाष्पयानमन्त्री आसीत् तदैकदा भीषणा वाष्पयानदुर्घटना सञ्जाता, तदा चाऽयम् कर्तव्यप्रिय आत्मनो दोष विचार्य मन्त्रिपदात् त्यागपत्रं दत्तवान्। वस्तुतस्तु नाऽऽसीत् कोऽपि दोषो मन्त्रिणः श्रीलालबहादुरशास्त्रिणः। पुनश्चायं वाणिज्यमन्त्रिपदे

नियुक्तः । ततश्च शीघ्रमेव केन्द्रे गृहमन्त्रिपदे नियुक्तः । परं कामराजयोजनानुसारं गृहमन्त्रिपदादप्यनेन सर्वप्रथमं त्यागपत्रं दत्तम् । एषैवासीत् श्रीशास्त्रिणस्त्यागभावनां कर्त्तव्यनिष्ठां च विचार्यायम् श्रीनेहरूमहोदयेन विभागं विनैव मन्त्रिपदे नियुक्तः । पुनश्च दिवङ्गते नेहरूमहोदयेऽयम् राष्ट्रसैनिकः प्रधानमन्त्रिपदमलङ्कृतवान् । श्रीशास्त्रिणः प्रधानमन्त्रिकालएव पाकिस्तानेन भारतवर्षं आक्रान्तः । परं श्रीशास्त्रिणः सफलनेतृत्वे भारतस्यैव विजयः सञ्जातः । अनेन विजयेन श्रीशास्त्रिणोत्कृष्टं यशोऽर्जितम् । भारत पाकिस्तानयोर्विवादं शमयितुं रूसदेशस्य प्रधानमन्त्री कोसिजिन-महोदयो मध्यस्थोऽभवत् । ताः च शास्त्रिमहोदयः पाकिस्तानस्य प्रधानोऽयूवश्च, द्वावपि ताशकन्दमाहूतौ । तत्रचायं सन्धिप्रस्तावो द्वाभ्यामपि स्वीकृतः यत् न भारतः न वा पाकिस्तानः बलप्रयोगं करिष्यति । परं तद्दिनस्यैव रात्रौ हृदयगतिरोधकारणात् ताशकन्द एव श्रीशास्त्रिणो जीवनलीला समाप्तिमगात् । अनेनापारशोकेन भारतवर्षोऽतिशयेन क्षुब्धोऽभवत् । स्वर्गीयम् प्रधानमन्त्रिणम् श्रीलालबहादुरशास्त्रिणं स्मृत्वा भारतीयाअद्यापि एतत् स्वीकुर्वन्ति यदष्टादशमासानां कार्यकाले श्रीशास्त्रिणा यत् महत्कार्यं सम्पादितं तदतीव महत्त्वपूर्णम् प्रशंसनीयञ्च । त्यागवर्तेः श्रीशास्त्रिणस्त्यागशीलताऽनेनैवानुमेया यद् यदा तस्य महापुरुषस्य निधनं सञ्जातं तदाऽस्य 'बैङ्ककोषे एकमपि पणं नाऽऽसीत् । अद्भुतेयं निर्लोभता त्यागवृत्तिश्च । अद्य लालबहादुरशास्त्रि-सदृशा एव मन्त्रिणोऽधिकारिणश्चापेक्ष्यन्ते । प्रार्थयामहे परमेश्वरं यत् सः भारतवर्षे लालबहादुरशास्त्रिणमिव महापुरुषान् जन्म दद्यात् भारतवर्षस्य वर्तमानशासकानाञ्च चेतःसु कर्त्तव्यनिष्ठां त्यागभावनाञ्च आपूरयत् ।

---

८४

## काशीनगरी

विश्वनाथपुर्याः काश्याः प्रकाशो न केवलं विश्वस्मिन्नपि विश्वेऽपि तु त्रिलोकेऽपि प्रकाशते, इति सर्वेऽपि लोकशास्त्रविचक्षणाः जानन्ति । भूतभावनस्य भुक्ति-मुक्ति प्रदायकस्य बालचन्द्रस्य चेयं पुरी काशी परमेश्वरस्य काचिद् विचित्रैव सृष्टिः । यदस्यां कुत्रचिद् यदि देवमन्दिराणां गर्जितोपमेनघण्टानिनादेन भगवद्भक्तानां कर्ण-

कुहराणिपूयन्ते तदा कुत्रचित् पाठशालासु, देवालयेषु छट्टेषुवा वेदविदाम् विदुषाम्, पौराणिकानाम्, शास्त्रानाञ्च सस्वराः वेदमन्त्राः, शिवपुराणादिपुराणपाठाः, सप्तशत्यादिग्रन्थानाम् पारायणपाठा अनेकविधानि स्तोत्राणि च काशिवासधन्यैः पुण्यानुभाविश्च जनैः पीयूषमिव पीयन्ते, क्वचिच्च धनैषिणाम् परधनेन हृष्टपुष्टानां चन्दनचर्चितानाम्, तीर्थपुरोहितानां पण्डानामनेकानेकप्रदेशेभ्यः विश्वनाथप्रसादप्राप्त्यर्थमागतैः धार्मिकैश्चानेकैःसह दक्षिणासम्बन्धिनः कलहपरिणामाः विवादाः दृश्यन्ते, क्वचित् ताम्बूलं चर्व्यमाणैस्तद्रसास्वादकैश्च छलिभिः शोभिताश्चतुष्पथाः दृश्यन्ते, क्वचित् अतीव संकरीषु प्रतोलिकासु च स्वेच्छाचारिणां गवां पण्डानाञ्च समूहैर्बाधिताः पदातयोऽवलोक्यन्ते, क्वचित् मुक्त्यर्थं काशीसेवमानानां विरक्त्युपासकानां संन्यासिनां च पवित्रताप्रतिमूर्त्तय इव आश्रमाः शोभन्ते । तत्रैव सुरसमद्दिरूपाया शंकरजटागलत्प्रवाहपूतसकलसृष्टेर्गङ्गायाः सुमधुरः कलकलरवः केषां सचेतसां चेतांसि न उद्वेलयति । किं बहुना, एषा काशी धर्मस्य प्रतिमूर्त्तिरिव पाण्डित्यस्य प्राचीनप्रतिमेव संस्कृतेः संस्कारराशिरिव, भारतीयदर्शनस्य दर्पणइव देवाना निवाससदनमिव, आस्तिकाना च कल्पतरुरिव, सर्वेषां मनांसि रमयति ।

विश्वनाथानुग्रहपरिपूतायाः वाराणसीनगर्याः धार्मिकः शैक्षिकः सांस्कृतिकश्च महिमा देशविदेशीयैः सर्वैरपि समालोचकैर्विपश्चिद्भिः सुगीत एव सर्वथा । अत्र वय, वर्णयितुरपि मनसः पवित्रीकरणे पक्षायाः सुकक्षायाः काश्या वैविध्यपूर्णं माहात्म्यमत्यल्पमतिना यथाकथमपि वर्णयित्वाऽऽत्मानं पवित्रयिष्याम एव केवलम् ।

काश्याः धार्मिको महिमाऽतिशयेन गरीयान् । धर्मभावनयोपासनया च साक्षात्करणीयः परमेश्वरोज्योतिर्लिङ्गरूपः शिवो यत्र भक्तेभ्यो भोगं मोक्षञ्च प्रददाति तत्र धार्मिकी प्रवृत्तिः स्वाभाविकी एव । अयमेव भगवान् विश्वनाथः काशीश्वरः, अस्यैव च समीपे लोकानुग्रहकारिणी शरणागततारिणी संसारोदरपूरणी च देवी अन्नपूर्णा । अस्य प्राचीनविश्वनाथमन्दिरस्य सन्निकट एव दण्डिस्वामिनां श्रीकरपात्रिमहोदयानां प्रेरणया निर्मितं भगवतो विश्वनाथस्य नवीनमपि मन्दिर वर्तते । एषा काश्येव नगरी यत्र अधिकाधिकदेवानां मन्दिराणि विराजन्ते । किं वर्णयामः, सकलविघ्नविनाशकः श्रीगणेशो ढुण्ढिराजः, समस्तसंकटमोचकः पवनसुतो रामभक्तश्चहनूमान्, कालभैरवादयश्चान्ये देवाः, वाराही-चौसट्ठी-दुर्गादयश्च देव्यः काश्यामेव शोभन्ते । अत्रत्यं भारतमातामन्दिरं, मानसमन्दिरं, हिन्दुविश्वविद्यालये विरलानिर्मित विष्णवादिदेवानां मन्दिरञ्च कामपि शोभां धारयति । भगवती विन्ध्यवासिनी अष्टभुजी च देवी वाराणसीसमीपस्थे विन्ध्याचले संविराजते ।

न केवलं शैव-शाक्त-वैष्णवाद्यास्तिकधर्माणामेव केन्द्रीभूतेयं काशी अपितु बौद्धादिनास्तिक धर्माणामपि पीठभूतेयं नगरी यदत्रैव रमणीके सारनाथे बौद्धधर्मस्य

साक्षादवतार एव दृश्यते । अन्यच्च धर्माधारभूता पतितपावनी मोक्षदायिनी च सुरधुनी गंगा अत्र भक्तानां श्रेयसे प्रवहति । वरणाया असेश्च पावनः संगमोऽप्यत्रैव वाराणसीनगर्या अन्वर्थतां साधयन् आस्तिकानां मनांसि मोहयति । धर्मस्य प्रतिष्ठानभूताः सुमेरुमठमच्छ्रीवन्दरादेयो मठाः दण्डीवाड़ादयश्चाश्रया अत्रैव सनातनधर्मस्य प्रवृत्तिं पोषयन्ति ।

इयं काशी न केवलं वैदिकस्य पौराणिकस्य वा धर्मस्यैव प्रतिनिधिभूताऽपि तु कर्त्तव्यरूपस्य मानवधर्मस्यापि निदर्शनरूपा यदत्रैव सत्यपरायणो हरिश्चन्द्रो नृपः श्मशानेचाण्डालकर्मकुर्वाणः स्वात्मजस्य रोहिताश्वस्य दाहावसरे स्वपत्नींतारांश्मशानकरमयाचिष्ट ।

काश्याः शैक्षिकः गौरवोऽपि न न्यूनः । भारतवर्षस्य इयमेव अनिदर्शना एकाकिनी काशी नगरी दृश्यते यत्र त्रयो विश्वविद्यालयाः विभिन्नशास्त्राणांशिक्षा ददमानाः शोभन्ते । ते च विश्वविद्यालयाः, वाराणसेयसंस्कृतविश्वविद्यालयः, हिन्दूविश्वविद्यालयः काशीविद्यापीठश्च । एषां त्रयाणामपि छटा विचित्रैव । काशीहिन्दूविश्वविद्यालये विभिन्नानां प्राचीनानाम् अद्यतनानाञ्च विषयाणामध्यापनं क्रियते । अस्यैव प्राच्यविभागे पद्धत्या संस्कृतस्य अध्यापनं क्रियते । विश्वविख्यातस्य अस्य विश्वविद्यालयस्य क्षेत्रम् अति विस्तृतम् । देशविदेशेभ्यः समागत्य छात्रा अत्र छात्रावासेषु निवासं कृत्वा विभिन्नविद्यासु पारङ्गतिं प्राप्नुवन्ति । काशीहिन्दूविश्वविद्यालयस्य जन्मदाता ऋषितुल्यो महानुभावो मदनमोहनमालवीयः । मदनमोहनमालवीयस्तु धर्मस्य 'साक्षादवतार एवआसीत् । इङ्गलैण्डयात्रायामयं गंगाजलम् मृत्तिकाश्च स्वदेशाद् अनैषीदित्यस्य धार्मिकतायाः सांस्कृतिकतायाश्च एव बोधकम् । अपरश्च काशीस्थः संस्कृतविश्वविद्यालयः । संस्कृतविश्वविद्यालयोऽयं १·५८ वर्षात् पूर्वं गवर्नमेण्टसंस्कृतकालेज इत्यभिधया अभिहितोऽभवत् । बहवोऽपि विदेशीया अस्य प्राचार्यपदमलंकृर्वन् । यदाऽयम् ईसवीय १९५८ वर्षे विश्वविद्यालयपदवीमधिकृतवान् तदा विद्यामार्तण्डो डी० फिल० इति उपाधिविभूषितश्च शास्त्री श्रीमङ्गलदेवोऽस्य उपकुलपतिपदमलङ्कृतवान् । संस्कृतविश्वविद्यालयस्य पुस्तकालयः सरस्वतीभवनमपि अद्भुतमेव । अस्मिन् यानि हस्तलिखितानि दुष्प्राप्याणि च ग्रन्थरत्नानि लभ्यन्तं तानि नाऽन्यत्र सरलतया प्राप्यन्ते, इति सर्वेऽपि विद्यानुरागिणो जानन्ति । विश्वविद्यालयस्य शोधसंस्थानमपि अत्यन्तम् प्रतिष्ठितम् । काशीस्थो तृतीयो विश्वविद्यालयः काशीविद्यापीठः । अस्य विद्यापीठस्य प्रतिष्ठापनं दानवीरशिरोमणेः श्री शिवप्रसादगुप्तस्य आर्थिकेन साहाय्येन सम्पादितम् । परमदार्शनिकाः डाक्टरोपाह्वाः श्रीभगवानदासमहाभागाश्चास्य विद्यापीठस्योपकुलपतिपदे विराजमाना आसन् । काशीविद्यापीठस्येयमपरा विशेषता यदस्य स्नातकाः न केवलं विभिन्नशास्त्रेष्वेव पाण्डित्यम् प्राप्य विख्यातिम् अवापुः, अपितु स्वदेशस्य

स्वातन्त्र्याय प्रवर्तमाना देशभक्तयः स्वजीवनमपि अर्पयामासुः । तेष्वेकोऽयमस्य स्वर्गीयः प्रधानमन्त्री श्रीलालबहादुरशास्त्री । श्री जवाहरलालस्य प्रियातिप्रियेण सौजन्यमूर्तिना श्रीलालबहादुरशास्त्रिणा यद् यशः स्वकीये चतुर्दशमासानां कार्यकाले लब्धं तत् प्रथमप्रधानमन्त्रिणा श्री नेहरू-महोदयेनापि न लब्धमिति जनाः दृढतया प्रायश एव कथयन्ति । एवमस्य काशीविद्यापीठस्य राजनैतिकोऽपि महिमाऽतिशयेन गरीयान् ।

शैक्षिकवातावरणस्य समुन्नतिकारणात् काश्याः साहित्यकोऽपि स्वरूपः समृद्ध एव । काशीनागरीप्रचारिणी सभा भारतवर्षस्य विशिष्टा साहित्यिकी सभा यया विभिन्नानां ग्रन्थानां पत्रपत्रिकानाञ्च प्रकाशनम् प्रायः सम्पाद्यते । एवमेव अनेका अपि सभाः परिषदादयश्च काश्याः साहित्यिकं गौरवम् प्रतिष्ठापयन्ति ।

बहवोऽपि महर्षयो महापुरुषाश्च काश्यामनेकानि महनीयानि कर्माणि चक्रुरित्यपि वैशिष्ट्यम् अस्याः नगर्याः । शेषावतारः पतञ्जलिः काश्यामेव स्वकीय ग्रन्थरत्नम् महाभाष्यं प्रणीतवान् । आदिशंकराचार्योऽपि चाण्डालरूपधारिणो भगवतः शिवात् तत्वज्ञानमवाप । किं बहुना, बङ्गीयश्चैतन्यदेवः आयुर्वेदविद्यासम्प्रदायप्रवर्तको धन्वन्तरिः, वैष्णवाचार्यो वल्लभाचार्यः, महावैयाकरणाः भट्टोजिदीक्षितनागेशभट्टादयश्च काश्यामेवानेकानि विलक्षणानि कर्माणि सम्पादयामासुः । प्रख्यातो रामभक्तस्तुलसीदासोऽपि अत्रैव शरीरं त्यक्तवान्, इति को न जानाति । आधुनिके च युगे बालशास्त्रि-गङ्गाधरशास्त्रि, दामोदरशास्त्रि, शिवकुमारशास्त्रि प्रभृतयश्च, विपश्चिद्वर्या अत्रैव स्वपाण्डित्येन विद्वज्जगदत्यचक्रुः । 'काश्याम्, मरणान्मुक्तिः', इति सिद्धान्तस्तु काश्याः परमाद्भुतमेव आध्यात्मिकम् महत्त्वम् प्रतिपादयति यद् अत्र मरणादेव जीवो मुक्तः सञ्जायते ।

काश्याः धार्मिक आध्यात्मिकः शैक्षिको राजनैतिकश्च महिमा स्वदेशीयातिरिक्तं विदेशीयानामपि चेतांसि रमयति इति सर्वथा स्पष्टमेव यत् प्रायशः सर्वदैव विदेशीयाः पर्यटकाः कदाचिद् दशाश्वमेघघट्टे, कदाचिद् विश्वनाथप्रतोल्यां कदाचिच्च प्रमुखराजमार्गेषु पर्यटन्तः कदाचिच्च स्वकीयोज्ज्वल्येन संसारं धवलयन्त्यां जलबिन्दुमुक्ताकलापं स्फाययन्त्यांगङ्गायां नौकाविहार कुर्वन्तो दृश्यन्ते, इति विश्वनाथपुर्यी अस्याः बहुविधं सौन्दर्यं वैलक्षण्यमेव धारयति । अतोधन्यैवेयं विरञ्चिरचना काशी । तदेवोक्तं शंकराचार्येणापि—

काशीधन्यतमा विमुक्तिनगरी सालंकृतागंगका,
तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत् किंकरी ।

स्वर्लोकस्तुलितः सदैवविबुधैः काश्या समं ब्रह्मणा,
काशीक्षोणितलेस्थिता गुरुतरा स्वर्गो लघुः खे गतः ।

अन्यच्च—

दुःखाम्भोनिधिमग्नजन्तुनिवहास्तेषां कथन्निष्कृति,
र्ज्ञात्वा तद्धि विरचिना विरचिता वाराणसी शर्मदा ॥
लोकाः स्वर्गमुखास्ततोऽपि लघ्वी भोगान्तयातप्रदाः,
काशी मुक्तिपुरी सदाशिवकरी धर्मार्थकामोत्तरा ॥

———

८५

## दिल्ली नगरी

दिल्ली अस्माकं भारतवर्षस्य राजधानी। कस्यापि देशस्य राजधानी सर्वेषामपि नगराणामुपरि राजते। इयमेव दिल्ली अस्माकं देशस्य केन्द्रीयशासनस्यापि अधिष्ठानरूपेण शोभते। राजराज्ञ्याः दिल्लीनगर्या वैभव-वैचित्र्येणैव मुग्धाः साहित्यिकाः, ज्योतिर्विदः, राजनीतिज्ञाः, वैज्ञानिकाः, वाणिज्यव्यापारिणः, किं बहुना, वञ्चकाः लुण्ठकाश्च भारतवर्षस्य सर्वेभ्यो भागेभ्य आगत्य आगत्यअस्या महाराज्ञयाः बहुविधविल सेनाकृष्टाः कामिन्याः कामनीयकेन मुग्धानां कामुकानामिव मोह प्राप्नुवन्ति। वस्तुत एव विचित्रेय भोगपुरी दिल्लीनगरी या स्वनाम्नोऽन्वर्थतया सर्वेषामेव चेतांसि चोरयति। कीदृशमस्याः वैशिष्ट्यमिति किं कथयामः यदस्यां कुत्रचिद् यदि साहित्यिकाः ग्रन्थ विमोचनोत्सव सम्पाद्य स्वप्रज्ञापाटव प्रचारयन्ति, तदा कुत्रचिद् यदि साहित्यिकाः ग्रन्थ विमोचनोत्सवं सम्पाद्य स्वप्रज्ञापाटव प्रचारयन्ति, तदा कुत्रचित् राजनीतिविशारदाः समाचारपत्रेषु देशसेवाविषयकान् विचारान् निबन्धांश्च प्रकाश्य समाजसेवासम्बन्धीनि भाषणानि च निगद्य गरीयसीं देशसेवकपदवीं प्राप्नुवन्ति, कुत्रचिद् अध्यात्मशास्त्रप्रचारकाः योगिनोवस्तुतस्तु भोगिनो विक्षेपहरणान् साधुप्रकृतिशालिनो जनान् प्रवञ्चयन्ति। वस्तुत एव विलक्षणा सृष्टिरियं स्रष्टुः। या चेयं कामस्य रतिरिवअप्सरसां प्रतिनिधिरिव इन्द्रस्य-इन्द्राणीव, मुक्तेर्भूतिरिव, मुक्तेः विरोधिनीव

अखिलनगरीणां च मस्तकमणिरिव सदैवोल्लसिता विकसिता च विराजते। अस्याः बहुविधभागैश्च लालायिता कुतुबुद्दीन-इल्तुतमिशखिलजी-तुगलक-तैमूर-हुमायूँ-बाबर प्रभृतयो यवना अस्या यथाऽवसरं भोगं विधाय पञ्चत्वं गताः। परमियं चिचित्रा स्वकीययाऽद्भुतरमणीयतया इदानीमपि पूर्वापेक्षया अधिकेन सौन्दर्येण सम्पन्ना युवतीव विराजते। नेयं जरत्वंगता न वा शैथिल्यम्। स्वतन्त्रराष्ट्रस्य महासेनानिनो गान्धि-नेहरू-लालबहादुरशास्त्रिप्रभृतयस्तु देशसेवकाः दिल्ल्यां वसन्तोऽपि अस्या वैभवेनानाकृष्टा इव निर्लोभा जनसेवाञ्चक्रुरिति ते धन्या एव साम्प्रतञ्च वर्तमानयुगस्य चाणक्यरूपिणीश्रीमतीइन्दिरा भारतवर्षस्य राजलक्ष्मीरिव विराजते। कूटनीतिदक्षयाऽप्रतिमप्रतिभासम्पन्नयाऽनया बहवोऽपि नीतिनैपुण्यस्याहम्मन्या धुरन्धरा धराशायिरिव प्रापिताः, इति को न जानाति।

दिल्लीनगर्याः सांस्कृतिकोऽपिस्वरूप उल्लेखयोग्य एव। सन्ति यद्यपि दिल्ली-नगर्यां बहवोऽपि प्राचीनसंस्कृतेः सूचकाः स्मारकाः परं तत्रापि अस्या वर्तमानकालिकी सांस्कृतिकी स्थितिर्विचित्रैव। दिल्ल्यां कनाटप्लेसादिस्थानानां दर्शनेन विदेशीयसंस्कृतेरेव प्रभावः प्रतीयते। अत्र तु वेषभूषया तरुणपुरुष तरुण्य इव तरुण्यश्च तरुणा इव प्रतीयन्ते, यत् युवकाः स्त्रिय इव अतिकेशिनः श्मश्रुविरहिताश्च, स्त्रियश्चाल्पकेशिन्यो दृश्यन्ते। एवञ्च कदाचित् काठिन्यमपि भवति लिङ्गनिर्णये। अयञ्च पाश्चात्यसंस्कृतेरेव प्रभावः वक्तुं शक्यते। एतद् वैचित्र्यमेवावलोकयितुं देशविदेशिनोऽत्रागत्य स्वमनोरञ्जयन्ति।

दिल्ली-नगर्यां राजनैतिकोऽपि महिमा अतिशयेन गरीयान्। अत्र तु अमेरिका-इङ्गलैण्डादिदेशानां दूतावासाः सन्ति, येषु तत्तद्देशानां विविधविचित्रवर्णविशिष्टाः पताकाः सगौरवं उड्डीयन्ते। अस्माकं देशस्य राष्ट्रपतेर्भव्यो राष्ट्रपतिनिवासः, रमणीय प्रधानमन्त्रिभवनम्: संसद्भवनम् चात्रैव शोभते। अत्रैव च विभिन्नविभागानां मन्त्रालयाः सन्ति यत्र मन्त्रिणः स्वस्वविभागानां कार्यं कुर्वन्ति। दिल्ली नगर्याः शिक्षासम्बन्धिनी अपि महनीयता न न्यूना। अत्रत्यो दिल्लीविश्वविद्यालयोऽतिशयेन प्रख्यातः, यत्र भारतीया बहवश्च विदेशीयाः प्राध्यापकाः विविधान् विषयान् पाठयन्ति। चीन-जर्मन-फ्रांसादि देशानां च भाषाणामध्यापनस्य व्यवस्थाऽस्मिन् विश्वविद्यालये सुचारुतया योज्यते। अस्य विश्वविद्यालयस्य विविधविषयकः शोधकार्यः अतिशयेन स्तुत्य एव।

पुनश्च स्वर्गीयप्रधानमन्त्रिणः श्री जवाहरलालस्य स्मृतौ नेहरूविश्वविद्यालयस्यस्थापनं विधाय भारतीयशासनेन अन्ताराष्ट्रियविषयाणां वैज्ञानिक-तकनीकीविषयाणाञ्चानुसन्धानस्य अनुशीलनस्यचयत् सौविध्य साधितं तदपि महनीयम्। अत्रत्या

संस्कृतप्रगतिविषयिकी गतिरपि उल्लेखयोग्या एव। दिल्ल्यां शक्तिनगरे लालबहादुरशास्त्रिविद्यापीठे प्राच्यप्रणाल्या संस्कृताध्यापनस्य व्यवस्था सम्पाद्यते इति धन्यास्ते सुसंस्कृताः संस्कृतभक्ताः शास्त्रिणः श्रीलालबहादुरमहाभागाः यैः पोषितः प्रवर्धितश्चायं विद्यापीठः। अत्रैव राष्ट्रियसंस्कृत संस्थानस्य स्थापनाऽपि कृतास्ति यदन्तर्गताश्चत्वारो विद्यापीठाः मठचतुष्टयमिव संस्कृतस्य प्रचारप्रसारे रताः दृश्यन्ते। एतेषु चतुर्षु एकः जगन्नाथपुर्याम्, एकः तिरुपत्याम्, एकः प्रयागे एको जम्मूनगरे एकश्चोपरि निर्दिष्टो लालबहादुरशास्त्रिविद्यापीठः दिल्लया प्रतिष्ठते। अपरञ्च 'साहित्यअकादमी' इति नाम्नी संस्थाऽपि दिल्ल्यामेव विभिन्नभाषाविदुषां लेखकानाञ्च महत्वपूर्णान् ग्रन्थान् पुरस्कृत्य प्रकाश्य च तेषां सम्मानं विधत्ते। भारतीयविद्यासंस्थानमपि संस्कृतविदुषां सम्मानेन संस्कृतभाषासेवनेन च संस्कृतजगतः श्रेयसे कार्यरतम् इत्यपि नाविदितं संस्कृतज्ञानाम्।

यद्यपि नगरीयं साम्प्रतं भोगप्रधाना एव प्रतीयते परमत्रत्या धार्मिकी स्थितिरपि महीयसी एव वक्तव्या। अत्रैव यमुनातटे सनातनधर्मस्य प्रचारसंस्था-धर्मसंघः, निगमबोधघट्टस्य समीप एव दण्डिसंन्यासिनामाश्रमः, ज्योतिर्मठाधीश्वरश्रीशंकराचार्य श्रीकृष्णबोधाश्रमस्वामिपादानांतपस्विप्रवरश्री करपात्रिस्वामिपादानाचाश्रम अध्यात्मशास्त्रस्य जिज्ञासूनामनेकविधां जिज्ञासां शमयति। अत्रैव भव्यं बिरलामन्दिर कालिका (कालिका जी) मन्दिरञ्च विराजते यत्रासंख्याः धार्मिका आगत्य स्वेष्टदेवानां दर्शनं कृत्वा आत्मनः कृतार्थान् मन्यन्ते।

दिल्ल्यामनेकानि दर्शनीयानि स्थानानि सन्ति येषु कुतुबमीनारः, लालकिला, जन्तुशाला, राजघाटः, शान्तिवनम्, विजयघाटः, सर्वोच्चन्यायालयः, इत्यादीनि अति प्रमुखस्थानानि सन्ति। एषु कुतुबमीनारस्यनिर्माणं कुतुबुद्दीननामकेन यवनशासकेन कारितम्। गगनचुम्बिनी एषा दीर्घस्तम्भिनी मनुष्यान् स्वशार्षं धारयित्वा अखिल दिल्ल्याः दर्शनं कारयति, इति धन्याऽस्या उन्नतता निर्मितिसुन्दरता च। दिल्लीस्था जन्तुशालाऽपि विलक्षणैव। अत्र तु चित्रविचित्रवर्णविशिष्टाः वानराः, चीनादि विभिन्नदेशवर्तिनः विलक्षणाः शुकाः विभिन्नश्च खगाः पञ्जरबद्धाः दर्शकानां मनांसि मोहयन्ति। अत्र ये लोहजालान्तरवर्तिनः हरिणाः, गवयाः, चमर्यः, गण्डकाः, केसरिणः, व्याघ्राः, चित्रकाः, भल्लुकाः वृकाश्च दृश्यन्ते तान् दृष्ट्वा दर्शकाश्चकिततामनुभवन्ति। एवमेव लालकिलेति नाम्ना प्रसिद्धे दुर्गेऽपि दूरदेशेभ्यः आगत्य दर्शका अनेकानि ऐतिहासिकानि शस्त्रास्त्रवस्त्रादीनि वस्तूनि अवलोक्य स्वमनो रञ्जयन्ति भारतस्यैतिहासिकज्ञानं च प्राप्नुवन्ति राजघाटशान्तिवन-विजयघाटेति स्थानत्रयेषु—अनेके गौरवशालिनो विदेशिनः शासकाः समागत्य गान्धि—नेहरू—लालबहादुरशास्त्रीति महापुरुषत्रयाय श्रद्धांजलिं समर्पयन्ति। एषु स्थानेषु गत्वा मानवः स्वभावतयैव शान्ति-

मनुभवन्ति । राजधान्यां प्राप्तौ महान् जनसम्मर्दोऽपि अस्या नगर्याः वैशिष्ट्यमेव । यवामावधानतया चञ्चलचेतसो बहवोऽपि पदातयोऽन्ये च बहवः वाहनैर्विविधै रुह्यमानाः दुर्घटनाव्याधेः कवलत्वं यान्ति । परमेतत् विश्वस्य प्रत्येकस्यापि देशस्य राजधान्याम् स्वाभाविकम् ।

वस्तुनस्तु स्वाभाविकः सुख-दुःख सम्बन्धः । अतः यदि राजधान्यामपि महत् सौविध्येन सहासौविध्यमनुभूयते तदेतत् तथैव सह्यम् यथा सुधांशौ शशिनि कृष्णत्वम्, मासे शुक्लपक्षेण सह कृष्णपक्षः, ब्रह्मणि माया, सत्येन च सहानृतम् । परमेश्वरो राजधान्यांनिवसद्भ्यः केन्द्रीयशासकेभ्यः सद्बुद्धि वितरतु, येन भारतराष्ट्रस्य सर्वथा ऽभ्युदयो भवेदिति वयं कामयामहे ।

---

८६

# हेमन्तर्तु वर्णनम्

अस्मिन् लोके कालक्रमेण सर्वे ऋतवः क्रमशः समायान्ति । तत्र वर्षानन्तरम् शरदतौ मशक-ज्वर विसूचिकादयोऽनेके नवनवाः रोगाः प्रादुर्भवन्ति, मक्षिकादिभिश्च क्षुद्रकीटैः जनाः पीडिताः जायन्ते । एतादृशे समये शरदनन्तर हेमन्तर्वोरवतारो अस्मिनृतौ सर्वं जनाः स्वस्थाः भवन्ति, पूर्वतुं दुभूतानां रोगाणां च शमनं भवति, शीतेन मक्षिकादयः क्षुद्रकीटाः रोगोत्पत्तिहेतुभूताः बहुशो नाशमुपयान्ति । अनेन सम्वत्सरः अलंकृत इव प्रतीयते । जनशरीराणि शीतेन दृढाणि भवन्ति, सस्यमालासम्पन्ना पृथिवी जायते, जलानि अनुपभोग्यानि जायन्ते, अग्निश्च अतिप्रियो जायते, गोरसस्य वृद्धिः संजायते । दक्षिणदिशं सेवमाने सूर्ये उत्तरादिक् तिलकरहिता स्त्री इव न शोभते । अस्मिन् समये प्रकृत्या हिमकोशेनाढ्यः हिमवान् (हिमालयः) पर्वतः दूरसूर्यः यथार्थ-नामा सुस्पष्टं प्रतीयते । अर्थात् हिमालयः स्वीयं हिमालयं नाम सार्थकं करोति । तदुक्तम्—

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥

इदानीम् अत्यन्तं सुखसंचारशीलाः स्पर्शतः मध्याह्ने सुखदायिनः प्रियसूर्याः दिवसाः भवन्ति, छायाजलानि च अप्रियाणि सन्ति। तथा नीहारेण कोमलः सूर्यो जायते शीतञ्चाधिकं वर्धते। रात्र्यः नीहारेण धूमायमानाः शीतवृद्धतरायामाश्च सम्प्रति यान्ति। सूर्ये संक्रान्तसौभाग्यः तुषारेण अरुणमण्डलसहितः निश्वासान्धः आदर्शइव चन्द्रमा प्रकाशितो नैव भवति। उक्तं च—

रविसंक्रान्त सौभाग्यः तुषारारुणमण्डलः।
निश्वासान्ध इवादर्शः चन्द्रमा न प्रकाशते॥

पौर्णमास्यामपि तुषारमलिना ज्योत्स्ना न शोभते। अस्मिन् काले स्वभावत एव शीतलस्पर्शः हिमेन युक्तश्च द्विगुणशीतलः पश्चिमोवायुः वहति। तुषारावृतानि यवगोधूमयुतानि क्षेत्राणि उदिते सूर्ये शब्दायमानैः क्रौञ्चसारसैः शोभन्ते। तण्डुलपूर्णशिरोभागैः खर्जूरपुष्पाकारैः किञ्चिन्नताग्राः कनकसमानकान्तयः शालयः शोभन्ते। हिमनीहाराच्छादितरूपसर्पद्भिमर्दुलैः दूरमभ्युदितः सूर्यचन्द्र इव दृश्यते। उक्तञ्च—

मयूरवैदनसर्पद्भिः हिमनीहारसंवृतैः।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते॥

एवम् पूर्वाह्णे स्वल्पवीर्यः मध्याह्ने च स्पर्शतः सुखदायकः पृथिवीं प्रसृतः किञ्चिदापाण्डुरातपः शोभते। अवश्यायनिपातेन किञ्चिदार्द्रशस्या प्रातस्तरुणातपेन सहिता वनानां भूमिः शोभते। अत्यन्तं पिपासाकुलोऽपि वन्यो गजः शीतलं सुविपुलं जलं स्पृशन् पुनः स्वकरं प्रतिसंहरते। इमे चोपविष्टाः जलचारिणः पक्षिणः, कातराः पुरुषाः यथा संग्रामं नावतरन्ति, तथा सलिलं नावगाहन्ति। पुष्परहिताः वनराजयश्च अवश्यायतमसा तमसावृताश्च प्रसुप्ता इव लक्ष्यन्ते। बाष्पाच्छादितजलाः शब्दैः ज्ञायमानसारसाः हिमेन आर्द्रबालुकासहिताः नद्यस्तीरैः साम्प्रतं भान्ति। उक्तं च—

बाष्पसंछन्नसलिलाः रुतविज्ञेयसारसाः।
हिमार्द्रबालुकास्तीरैः सरितो भान्ति साम्प्रतम्॥

एवं यस्मिन् समये तुषारपतनात् सूर्यस्य कोमलत्वात् शीतत्वाच्च पर्वताग्रस्थमपि जलं प्रायेण विषवत् प्रतीयते। अस्मिन् समये जराशीर्णैः पत्रैः नालशेषाः हिमध्वस्ताः कमलाकराः (जलाशयाः) न शोभन्ते। तदुक्तम्।

जराजर्जरितैः पत्रैः शीर्णकेशरकर्णिकैः।
नालशेषाः हिमध्वस्ताः न भान्ति कमलाकराः॥

अस्मिन् समये हिमयुक्तो वायुः गजपतिप्रमाणा अतिगम्भीराश्च नद्यः पान्थस्त्रीणां नयनयोः सलिलसन्ततिं विस्तारयन्ति।

———

८७

## वसन्तः

महदिदं सौभाग्यं यदस्माकं देशे समये समये जनानाम्मोदाय नवचेतनां दातुं प्रकृतिः नववधूरिव ऋतुरूपेण समायाति । यथा कश्चन नटः प्रेक्षकान्मोहयितुं रङ्गमञ्चे समायाति तथैव इमे ऋतवोऽपि । वसन्तर्तुः अतीव मनोहरः, अतो वसन्तः ऋतूनां राजा इति कथ्यते । महाकविना कालिदासेन ऋतुसंहारेऽस्यागमनस्य वर्णनं कृतम् । यथा—

प्रफुल्लचूताङ्कुरतीक्ष्णसायकः, द्विरेफमालाविलसद्धनुर्गुणः ।
मनांसि वेद्धुं सुरतप्रसङ्गिनां वसन्तयोद्धा समुपागतः प्रिये ॥

यथा कश्चन वीरः धनुर्गुणस्योपरि शरं निधाय हृदयानि वेद्धुं समायाति, तथैवायं वसन्तः । वसन्तर्तौ समागते सति सर्वे वनस्पतयः नवपल्लवैः नवाङ्कुरैश्च शोभिताः भवन्ति । प्रायः समेषां पादपानां पुष्पसमृद्धिः वसन्त एव भवति । अयं गन्धवान् सुरभिमासः प्रचुरमन्मथः मनोहारी च भवति । यथा चोक्तं रामेणलक्ष्मणम्प्रति—

सुखानिलो यं सौमित्रे कालः प्रचुरमन्मथः ।
गन्धवान् सुरभिर्मासो जातपुष्पफलद्रुमः ॥

अस्मिन् समये आम्रवृक्षेषु मञ्जर्यः शोभन्ते । सुगन्धितवायुप्रभावेण सर्वाः दिशः सुगन्धिता भवन्ति । इद सर्वं सौन्दर्यरूपं विलोक्यैव महाकविमाघेनोक्तम्—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोहरैः ॥

कुसुमोत्कटाः विविधा काननद्रुमाः वायुवेगप्रचलिताः वसुधां पुष्पैराच्छादयन्ति । मारुतः समन्ततः पतितैः, पतमानैः पादपस्थैः कुसुमैश्च सम क्रीडां करोति । पवनविक्षिप्ताः पादपाः गुञ्जद्भिः भ्रमरैः प्रगीता इव भान्ति । चन्दनशीतलः श्रममपनयन्ननिलः गन्धमभ्यवहरन् वाति । अस्मिन्नृतौ न केवल वृक्षेषु एव नवजीवनसंचारो भवति, अपितु प्राणिनां शरीरेष्वपि नवरुधिरसंचारोभवति । सर्वेषां मनसि नवचेतना, नवीनभावना, नूतनमादकता चोत्पद्यते । अस्मिन् समये मदलोलुपाः भ्रमराः रसान्वेषणाय रसपानाय च स्वकीयाभिः भ्रमरीभिः सह पुष्पपुष्पेषु गुञ्जन्तः भ्रमन्ति । अतो—माघेनोक्तम्—

मधुरयामधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृतानिभृताक्षरमुज्जगे ॥

वसन्ते वनवाटिकाक्षेत्रेषु सर्वत्र हरीतिमकुञ्जलता गुल्मोद्यानेषु मुहुर्मुहुः कोकिलानां-विरावः श्रूयते। सर्वत्र क्षेत्रेषु सर्षपातसीचणकयवगोधूमानामन्योषां धान्यपादपानां शोभाऽद्भुतैव। सुपुष्पिताः कर्णिकारवृक्षाः पीताम्बरधारिपुरुषा इव सर्वतो भ्रान्ति। कृषकाश्च सम्प्रति प्रफुल्लितानि नवान्नयुक्तानि स्वक्षेत्राणिदर्शं दर्शं हर्षिताः भवन्ति।

अस्मिन् समये विविधसुगन्धियुक्तद्रुमाणामाकम्पितपुष्पगन्धिः पवनः सर्वोषां-चित्तमुन्मादयति। वनस्थली वेश्येव नवनवां शोभां धारयति। इन्दुकलास्पर्धिकेसरं किंशुककलिकान्तर्गतिं भाति। वनस्थलीवसन्तयोः विवाहावसरे पिकद्विजः मुहुर्मुहुः मङ्गलमन्त्रमुच्चारयति। पल्लविते आम्रे स्थित्वा कोकिलः मधुरस्वरं कूजन् कामिनीनां चित्तमाकर्षति। लतावध्वः तरुणां विनम्रशाखाभुजबन्धानि प्राप्नुवन्ति। सर्वत्र तडागस्य जले विकसितकमलानि शोभितानि, तेषामुपरि भ्रमराः गुञ्जारवं कुर्वन्ति। यथोक्तं—

न तज्जलं यन्न सुचारुपङ्कजं, नपङ्कजंतद्यदलीनषटपदम्।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जिततन्नजहारयन्मनः॥

आम्राङ्कुरास्वादकषायकण्ठः पुंस्कोकिलः मधुरं शब्द कूजति। पुष्पभारान्नमन्तो ऽशोकवृक्षाः वियोगिनीनां हृदयेषु शोकं संजनयन्ति। वसन्तर्तुः मधुकराञ्जननेत्रा काचिन्नायिकेव मुखे मधुश्रीतिलक प्रकाश्य स्वप्रवालोष्ठं वालारुणकोमलेन रागेण रञ्जयित्वा शोभितो भवति। मन्मथः स्वक्रूरैः निशितशरैःपान्थान् पीडयति। सुरम्यां वनस्थलीं दृष्ट्वा पथिकः किंशुककुसुमाङ्कुशेनाहतो मदोन्मत्तः द्विपइव उन्मादं वहति। विलासवनस्थलीमवलोक्यपथिकस्तत्र विश्रम्य स्वखेदमपवारयति। वने वसन्त-समीरणः सर्वासु दिक्षु प्रसरति—

लता कुञ्जं गुञ्जन् मदवदलिपुञ्जंचपलयन्,
समालिङ्गन्नङ्ग द्रुततरमनङ्गं प्रबलयन्।
मरुन्मन्दं मन्दं दलितमरविंदं तरलयन्,
रजो वृन्दं विन्दन् किरतिमकरन्दं दिशिदिशि॥

अस्मिन्नृतौ वसन्तपंचमी नामक उत्सवो भवति। अयं "श्रीपञ्चमी" इति नाम्नापि कथ्यते। अस्मिन् समये पीतवस्त्राणि अलंकृत्य भ्रमन्तो जनाः वसन्तगीतं च गायन्तः मोदमानाः यत्र तत्र विचरन्ति। वसन्ते सर्वा दिशः प्रसन्नाभवन्ति। शीतलः मन्दः सुगन्धि युक्तो वायुर्वाति। वसन्तकाले शीतग्रीष्मयोः सम्बन्धो भवति। वसन्त एव आर्याणां प्रायेण सर्वाणि संस्कारयोग्यानि कार्याणि प्रारभ्यन्ते। साहित्ये सर्वेषामृतूना-मपेक्षया वसन्तस्य वर्णनमधिक दृश्यते। प्रायः सर्वैः कविभिः, ऋतुवर्णनं कृतम्, परन्तु माघेनकालिदासेन च कृतं वसन्तवर्णनम् अतीव मनोहारि। अयं समयः सौन्दर्यदृष्ट्या,

जलवायुदृशा, कार्यसौकर्यदृष्ट्या सर्वोत्तमः । एतत्सर्वं समालोच्यैव महर्षिभिः अयं राज्ञः पदेऽभिषिक्तः । अयमृतुः संवत्सरस्यालङ्कार इवभाति । महाकविकालिदासः कथयति यत् अयं वसन्तः वः मुदं वितरेत्, यथा—

आम्रो मञ्जुलमञ्जरीवरशरः सरकिंशुकं मद्धनु—
ज्यायिस्यालिकुलं कलंकरहितं क्षत्रंसितांशुः सितम् ।
मत्तेभो मलयानिलः परभृतां यद्वन्दिनोलोकजित्,
सोऽयं नो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः ॥

परिशिष्टम्—१

# सूक्तिसुधानिधिः

## ऋग्वेदः

१. न दुरुक्ताय स्पृहयेत् ।
२. दक्षिणावन्तो अमृतं भजन्ते ।
दक्षिणवन्तः प्रतिरन्त आयुः ।
३. नावाजिनं वाजिना हासयन्ति ।
न गर्दभं पुरो अश्वान्नयति ।
४. सत्येनोत्तभिता भूमिः ।
५. न स सखा यो न ददाति सख्ये ।
६. सं गच्छध्वं सं वदध्वं ।
सं वो मनांसि जानताम् ।

## यजुर्वेदः

७. श्रद्धया सत्यमाप्यते ।
८. ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ।
९. हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।

## अथर्ववेदः

१०. माता भूमिः पुत्रोऽहं पृथिव्याः ।

## ऐतरेयब्राह्मणम्

११. परोक्षप्रिया इव हि देवाः ।
१२. श्रद्धया सत्येन मिथुनेन स्वर्गाँल्लोकान् जयति ।
१३. इन्द्र इच्चरतः सखा

## शतपथ ब्राह्मणम्

१४. सत्यमेव देवाः ।
१५. श्रद्धा हि तद् यदद्य । अनद्धाहि तद् यच्छ्वः ।
१६. मध्यमभयम् ।

## उपनिषदः

१७. पुरुषो वाव सुकृतम् ।
१८. असतो मा सद्गमय । तमसो मा ज्योतिर्गमय ।
मृत्योर्मा अमृतं गमय ।
१९. काममय एवायं पुरुषः ।
२०. सर्वं खल्विदं ब्रह्म ।
२१. आत्मन एवेदं सर्वम् ।
२२. आहारशुद्धौ सत्त्वशुद्धिः ।
२३. अन्नं बहु कुर्वीत ।
२४. न वित्तेन तर्पणीयो मनुष्यः ।
२५. नायमात्मा प्रवचनेन लभ्यः ।
२६. अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
२७. अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।
२८. तपसा चीयते ब्रह्म ।
२९. भिद्यते हृदय ग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥
३०. द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पल स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ॥
३१. सत्यमेव जयते नानृतम् ।

## महाभारतम्

३२. सन्तानं हि परो धर्म एवमाह पितामहः ।
३३. पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ।
३४. सत्यं पुत्रशताद्वरम् ।
३५. त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥
३६. धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् ।
अविरोधात् तु यो धर्मः स धर्मः सत्यविक्रम ॥

३७. धारणाद् धर्ममित्याहुः धर्मो धारयते प्रजाः ।
३८. न तत्परस्य संदध्यात् प्रतिकूलं यदात्मनः ।
३९. न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभि वर्धते ॥

## गीता

४०. नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥
४१. धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ।
४२. सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ।
४३. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्व कर्मणि ॥
४४. अशान्तस्य कुतः सुखम् ।
४५. या निशा सर्व भूतानाम् तस्यां जागर्ति संयमी ।
४६. गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ।
४७. प्रकृति यान्ति भूतानि निग्रहः किं करिष्यति ।
४८. यदायदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
४९. परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मं संस्थापनार्थाय संभवामि युगे युगे ।
५०. किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
५१. विद्या विनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥
५२. उद्धरेदात्मनात्मानं नात्मानमवसादयेत ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥
५३. निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।
५४. ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥
५५. सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।

## रामायणम्

५६. अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा ।
५७. धर्मं हि परमोलोके धर्मे सत्यं प्रतिष्ठितम् ।

५८. शोको नाशयते सर्वं नास्ति शोक समो रिपुः ।
५९. धर्मादर्थः प्रभवति धर्मात् प्रभवते सुखम् ।
धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥
६०. सोत्साहस्यास्ति लोकेषु न किञ्चिदपि दुर्लभम् ।
६१. सर्वथा सुकरं मित्रं दुष्कर परिपालनम् ।
६२. सुलभा पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥
६३. न याति क्रमितं शक्यं दैव सुग्रीव मानुषैः ।
६४. मरणान्तानि वैराणि ।
६५. नास्ति सर्वामरत्वं हि कस्यचित् प्राणिनो भुवि ।

## अशोक वाणी

६६. कर्तव्यं हि मे सर्वलोक हितम् ।
६७. सर्वे मनुष्याः प्रजा मम् ।
जीवेन जीवः न पोष्तव्यः ॥

## चाणक्यसूत्रम्

६८. साहसे खलु श्रीः वसति ।
६९. न क्षुधार्तोऽपि सिंहस्तृणं चरति ।
७०. नमत्यपि तुलाकोटिः कूपस्योदकक्षयं करोति ।
७१. क्षीराश्रितमुदकं क्षीरमेव भवति ।
७२. यवागूरपि प्राणधारण करोति काले ।
७३. पुण्यार्थिनः सिंचन्ति अद्भिः तरुम् ।
७४. नास्त्यपिशाचमैश्वर्यम् ।
७५. श्वो मयूरादद्य कपोतो वरः ।
७६. एरण्डमवलम्ब्य कुञ्जरं न कोपयेत् ।
७७. अतिदीप्तोऽपि खद्योतो न पावकः ।
७८. यथा बीज तथा निष्पत्तिः ।
७९. न हंसाः प्रेतवने रमन्ते ।

## मनुस्मृतिः

८०. वेदोऽखिलो धर्ममूलम् ।
सर्वज्ञानमयो हि सः ॥

८१. आचारः परमो धर्मः।
८२. विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
८३. अक्लेशेन शरीरस्य कुर्वीत धनसंचयम्।
८४. यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
८५. अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमोदैवो बलिर्भौतो नृयज्ञोऽतिथि पूजनम्॥
८६. स्वाध्याये नित्ययुक्तः स्यात्।
८७. तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥
८८. सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः।
८९. आर्द्रपादस्तु भुञ्जानो दीर्घमायुरवाप्नुयात्॥
९०. यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत्।
*यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः।*
९१. सर्वं परवशं दुःखं सर्वं आत्मवशं सुखम्।
९२. हिंसारतश्च यो नित्यं नेहासौ सुखमेधते।
९३. अधर्मेणैधते तावत्ततो भद्राणि पश्यति।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति॥
९४. परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ।
९५. सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते।
९६. सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥
९७. ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्।
९८. बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महति देवता ह्येषा नररूपेण तिष्ठति॥
९९. एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
१००. न माता न पिता नस्त्री न पुत्रस्त्यागमर्हति।
१०१. यत्र नार्यस्तु पूज्यन्ते रमन्तेतत्र देवताः।
१०२. स्वाध्याये नित्य युक्तः स्यात्।
१०३. तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥
१०४. सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
१०५. धर्म एव हतोहन्ति धर्मो रक्षति रक्षितः।
१०६. दाक्षिण्यरहितं रूपं निर्गुणमिवकाननम्।

## बुद्धचरितम्

१०७. प्रहीणदोषो ह्यनृतं न वक्ष्यति ।

१०८. कामैः सतृष्णस्यहि नास्ति तृप्तिः ।
यथेन्धनैर्वातिसखस्य वह्नेः ॥

## पञ्चतन्त्रम्

१०९. मातृवत् परदाराणि परद्रव्याणिलोष्ठवत् ।
आत्मवत् सर्वभूतानि वीक्षन्ते धर्मबुद्धयः ॥

११०. कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
कोविदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

१११. स्वदेशे पूज्यते राजा विद्वान् सर्वत्रपूज्यते ।

११२. प्राप्तव्यमर्थं लभते मनुष्यो,
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न च विस्मयो मे,
यदस्मदीयं न हि तत्परेषाम् ॥

११३. आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेवतत् ।

११४. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः,
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरू पौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यति कोऽत्रदोषः ॥

११५. उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।

११६. सन्तोष एव पुरुषस्य परं निधानम् ।

११७. छिद्रेष्वनर्था बहुलीभवन्ति ।

११८. परोपकारः पुण्याय पापाय परपीडनम् ।

११९. न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।

१२०. बुभुक्षितः किं न करोति पापम् ।

१२१. सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डितः ।

१२२. धर्मस्य त्वरिता गतिः ।

१२३. दीर्घसूत्री विनश्यति ।

१२४. एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात् ।

१२५. यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।

## भासः

१२६. चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः ।
१२७. सुखं दुःखान्यनुभूय शोभते ।
१२८. समूलं वृक्षमुत्पाट्य शाखाश्च्छेत्तुं कुतः श्रमः ।

## मृच्छकटिकम्

१२९. रत्नं रत्नेन संगच्छते ।
१३०. चारित्र्येण विहीन आढ्योऽपि दुर्गतो भवति ।
१३१. निर्धनता प्रकाममपरं षष्ठं महापातकम् ।
१३२. स्वदोषैर्भवति हि शंकितो मनुष्यः ।
१३३. सर्वत्रार्जवं शोभते ।

## कालिदासः

१३४. हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपिवा ।
१३५. अल्पस्य हेतोर्बहु हातुमिच्छन् ।
विचारमूढः प्रतिभासि मेत्वम् ।
१३६. पिण्डेष्वनास्था खलु भौतिकेषु ।
१३७. यशस्तु रक्ष्यं परतो यशोधनैः ।
१३८. पदं हि सर्वत्र गुणैर्निधीयते ।
१३९. शैत्यं हि यत्सा प्रकृतिर्जलस्य ।
१४०. आदानं हि विसर्गाय सतां वारिमुचामिव ।
१४१. मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
१४२. न धर्मवृद्धेषु वयः समीक्ष्यते ।
१४३. मनोरथानामगतिर्न विद्यते ।
१४४. द्विषन्ति मन्दाः चरितं महात्मनाम् ।
१४५. न कामवृत्तिर्वचनीयमीक्षते ।
१४६. क्लेशः फलेन हि पुनर्नवतां विधत्ते ।
१४७. कामार्ता हि प्रकृति कृपणाश्चेतनाचेतनेषु ।
१४८. याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।
१४९. रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।
१५०. मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ।
१५१. नीचैर्गच्छत्युपरि चदशा चक्रनेमिक्रमेण ।
१५२. भवितव्यानां द्वाराणि भवन्ति सर्वत्र ।

१५३. कामी स्वतां पश्यति ।
१५४. श्रिया दुरापः कथमीप्सितो भवेत् ।
१५५. अतः परीक्ष्य कर्तव्यं विशेषात् संगतं रहः ।
१५६. पुराणमित्येव न साधु सर्वम् ।
१५७. मूढः परप्रत्ययनेयबुद्धिः ।

## विष्णुपुराणम्

१५८. क्षमासारा हि साधवः ।
१५९. मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम् ।
१६०. अदत्त्वा विषयश्नुते ।
१६१. सत्यं यत् परदुःखाय तदा मौनपरो भवेत् ।

## भागवतम्

१६२. ईशस्य हि वशे लोको योषा दारुमयी यथा ।
१६३. अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् ।
१६४. अहो महच्चित्रमिदं कालगत्या दुरत्यया ।
आरुरुक्षत्युपानद् वै शिरो मुकुटसेवितम् ॥
१६५. आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
१६६. परिग्रहो हि दुःखाय यद् यत् प्रियतमं नृणाम् ।

## किरातार्जुनीयम्

१६७. हितं मनोहारि च दुर्लभं वचः ।
१६८. वरं विरोधोऽपि समं महात्मभिः ।
१६९. अहो दुरन्ता बलवद्विरोधिता ।
१७०. व्रजन्ति ते मूढधियः पराभवम् ।
भवन्ति मायाविषु ये न मायिनः ॥
१७१. ननु लक्ष्मीः फलयानुषङ्गिकम् ।
१७२. सहसा विदधीत न क्रियाम् ।
१७३. असुरक्षा हि बहुच्छलाः श्रियः ।
१७४. विपदन्ता ह्यविनीतसम्पदः ।
१७५. मोहं विधत्ते विषयाभिलाषः ।
१७६. प्रकर्षतन्त्रा हि रणे जयश्रीः ।
१७७. न रम्यमाहार्यमपेक्षते गुणम् ।

१७८. रम्याणां विकृतिरपि श्रियं तनोति ।
१७९. नाल्पीयान् बहु सुकृतं हिनस्ति दोषः ।
१८०. सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् ।
१८१. न्यायाधारा हि साधवः ।

## कादम्बरी

१८२. किमिव हि दुष्करमकरुणानाम् ।
१८३. विपद् विपदं सम्पत् सम्पदमनुबध्नाति ।
१८४. नास्ति खल्वसाध्यं नाम तपसाम् ।
१८५. दुःखितमपि जनं रमयति सज्जनसमागमः ।

## रत्नावली

१८६. घुणाक्षरमपि कदापि सम्भवति ।

## नीतिशतकम्

१८७. विशेषतः सर्वविदां समाजे,
विभूषणं मौनमपण्डितानाम् ।
१८८. न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ।
१८९. मूर्खस्य नास्त्यौषधम् ।
१९०. साहित्यसंगीतकलाविहीनः,
साक्षात् पशुः पुच्छविषाणहीनः ।
१९१. वाग्भूषणं भूषणम् ।
१९२. विद्याविहीनः पशुः ।
१९३. प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥
१९४. यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ।
१९५. दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् ।
१९६. सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।
१९७. विभाति कायः करुणापराणां परोपकारैर्नतु चन्दनेन ।
१९८. परगुणपरमाणून् पर्वतीकृत्य नित्यम्,
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।

१९९. नहि निश्चितार्थाद् विरमन्ति धीराः ।
२००. मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ।
२०१. शीलं परं भूषणम् ।
२०२. आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
२०३. भाग्यानि पूर्वतपसा खलु संचितानि,
काले फलन्ति पुरुषस्य यथैव वृक्षाः ।

## वैराग्यशतकम्

२०४. सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ।

## शिशुपालवधम्

२०५. श्रेयसि केन तृप्यते ।
२०६. सतीव योषित् प्रकृतिः सुनिश्चला,
पुमांसमभ्येति भवान्तरेष्वपि ।
२०७. तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।
२०८. सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ।
२०९. क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।
२१०. समये हि सर्वमुपकारिकृतम् ।
२११. भ्रान्तिभाजि भवति हि क्व विवेकः ।
२१२. महतां हि सर्वमथवा जनातिगम् ।
२१३. प्रभुचित्तमेव हि जनोऽनुवर्तते ।
२१४. योग्येनार्थः कस्य न स्याज्जनेन ।

## उत्तररामचरितम्

२१५. सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
२१६. ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ।
२१७. नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा,
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ।
२१८. सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
२१९. रहस्यं साधूनामनुपधि विशुद्धं विजयते ।
२२०. प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ।
२२१. लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ।
२२२. उचितमेव दाक्षिण्यं स्नेहस्य ।

२२३. आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ।
२२४. गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ।
२२५. वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ।
२२६. तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ।

## बोधिचर्यावतारः

२२७. अनारम्भो वरं नाम न त्वारभ्य निवर्तनम् ।

## वेणीसंहारम्

२२८. दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ।
२२९. अनतिक्रमणीयं लोकवृत्तम् ।

## मुद्राराक्षसम्

२३०. सर्वः सर्वं न जानाति ।
२३१. व्याघ्राणां मुग्धहरिणं हन्तुं को नाम निर्बन्धः ।

## विवेकचूडामणिः

२३२. ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः ।
२३३. स्वतः एव हि सर्वेषामात्मा प्रियतमो यतः ।
२३४. कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते ।
२३५. यत्नेन पुंस्त्वं सफलीकुरुष्व ।

## काव्यमीमांसा

२३६. पुत्रात् परानयो द्वितीयं पुत्रजन्म ।
२३७. द्वन्द्वोऽस्मि द्विगुरस्मि गृहे च मे सततमव्ययीभावः ।
तत्पुरुष कर्मधारय येनाहं स्यां बहुव्रीहिः ।

## कथासरित्सागरः

२३८. अशीलं कस्य भूतये ।
२३९. न स्वेच्छं व्यवहर्तव्यमात्मनः भूतिमिच्छता ।
२४०. यो यद्वपति बीजं हि लभते सोऽपितत्फलम् ।
२४१. दैवमेव हि साहाय्यं कुरुते सत्त्वशालिनाम् ।
२४२. विषयाकृष्यमाणा हि तिष्ठन्ति सुपथे कथम् ।
२४३. न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः ।

२४४. जीवत्यर्थदरिद्रोऽपि धीदरिद्रो न जीवति ।
२४५. वज्रादपि हि वीराणां चित्तरत्नमखण्डितम् ।

## राजतरंगिणी

२४६. तपो विभूतयोऽचिन्त्या द्विजानामुग्रतेजसाम् ।
२४७. नाभिमानः शुभार्थिनाम् ।
२४८. प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ।
२४९. परायत्ततया चित्तं पशोरप्युपतप्यते ।
२५०. पापिनामपि हन्तेयं काऽपि सत्कर्मवासना ।
२५१. भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ।
२५२. नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ।
२५३. निर्दोषा सदा प्रेष्या स्वाम्यादेशानुपालने ।
२५४. स्थिराः कस्य विभूतयः ।
२५५. न भवेत् पविपातेऽपि प्रमयः समयं विना ।
प्रसूनमप्यसून् हन्ति जन्तोः प्राप्तावधेः पुनः ॥

## नैषधीयचरितम्

२५६. त्यजन्त्यसून् शर्म च मानिनो वरं,
त्यजन्ति नत्वेकमयाचितव्रतम् ॥
२५७. कार्यं निदानाद्धि गुणानधीते ।
२५८. झटिति पराशयवेदिनोहि विज्ञाः ।
२५९. कर्म कः स्वकृतमत्र न भुङ्क्ते ।
२६०. आर्जवं हि कुटिलेषु न नीतिः ।
२६१. दुर्जेया हि विषया विदुषामपि ।
२६२. स्वतः सतां ह्रीः परतोऽतिगुर्वी ।
२६३. चकास्ति योग्येन हि योग्यसंगमः ।
२६४. जनानने कः करमर्पयिष्यति ।
२६५. यः स्पर्धया येन निजप्रतिष्ठां,
लिप्सुः स एवाह तदुन्नतत्वम् ।
२६६. देवा हि नान्यद् वितरन्ति किन्तु,
प्रसीद्य ते साधुधियं ददन्ते ।
२६७. क्व भोगमाप्नोति न भाग्यभाग् जनः ।

## भामिनीविलासः

२६८. नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च संगतिः ।
तथापि हरते तापं लोकानामुन्नतो घनः ॥
२६९. विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः ।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥
२७०. निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥

## व्यासः

२७१. नापरीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ।
२७२. एकश्चन्द्रस्तमो हन्ति न च तारा सहस्रशः ।
२७३. गच्छन् पिपीलको याति योजनानां शतान्यपि ।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥
२७४. यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गां चरन्ती निवारय ॥
२७५. एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
इत्यमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥
२७६. आपत्सु किं विषादेन सम्पत्तौ विस्मयेन किम् ।
भवितव्यं भवत्येव कर्मणामेष निश्चयः ॥
२७७. आशा बलवती कष्टं नैराश्यं परमं सुखम् ।
२७८. बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥
२७९. सेवकादपरो मूर्खस्त्रैलोक्येऽपि न विद्यते ।
दिने दिने नमन्मोहादुन्नतिं योऽभिवाञ्छति ॥
२८०. अपकारिषु मा पापं चिन्तयस्व महामते ।
स्वयमेव हि नश्यन्ति कूलजाता इव द्रुमाः ॥

## प्रकीर्णानि

२८१. कः स्वभावगभीराणां जानीयाद्बहिरापदम् ।
२८२. सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्रायस्तन्वते दिक्षु मारुताः ॥
२८३. सम्पत्तौ च विपत्तौ च महतामेकरूपता ।

२८४. एकेन करेण गजः करी न सूर्यः सहस्रेण ।
२८५. यत्र करीरे पत्रं तत् किं दोषो वसन्तस्य ।
२८६. न केवलं मनुष्येषु दैवं देवेष्वपि प्रभुः ।
२८७. केन विज्ञायते काकः स्वयं यदि न भाषते ।
२८८. सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
२८९. शिशुरपि रुषा सिंहीसूनुः समाह्वयते गजान् ।
२९०. उत्साहसम्पन्नमदीर्घसूत्रं ।
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च ।
लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥

२९१. स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
२९२. न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ।
२९३. नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥
२९४. परसदननिविष्टः को लघुत्वं न याति ।
२९५. कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥
२९६. संस्कारेण लशुनं कः सुगन्धीकरिष्यति ।
२९७. सदा वक्रः सदा क्रूरः सदा मानधनापहः ।
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥
२९८. सकषायस्य चित्तस्य काषायैः किं प्रयोजनम् ।
२९९. रमते न मरालस्य मानसं मानसं विना ।
३००. एक एव खगो मानी वने वसति चातकः ।
पिपासितो वा म्रियते याचते वा पुरन्दरम् ॥
३०१. अतिपरिचयादवज्ञा भवति विशिष्टेऽपि वस्तुनि प्रायः ।
३०२. दूरस्थस्य महार्घता परिभवः संवासतो जायते ।
३०३. धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
३०४. मूलः लब्धफलः को वा प्रारोहति तरोः शिरः ।
३०५. न यत्र वृत्तिः खलु धार्मिकी स्यात् ।
कार्ये च तस्मिन्नहि सिद्धिरस्ति ॥
३०६. न हि गोधा सर्पन्ती सर्पणादहिर्भवति ।
३०७. न हि विधिशतेनापि तथा पुरुषः प्रवर्तते यथा लोभेन ।

३०८. प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।

३०९. यत्राकृतिस्तत्र गुणा वसन्ति ।

३१०. मुनिर्मनुते मूर्खो मुच्यते ।

३११. अस्त्रमस्त्रेण शाम्यति ।

३१२. सर्वं सुखं स्वस्मिन्नेव वर्तते ।

३१३. शिरसा धार्यमाणोऽपि सोमःसोमेन शम्भुना ।
तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ।